BIBLIOTHECA INDICA:

A

**Collection Of Oriental Works**

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

New Series, Nos. 1169, 1170, 1174 & 1175.

---

# THE ÇATAPATHA BRĀHMAṆA.

OF THE WHITE YAJURVEDA

WITH THE

COMMENTARY OF SĀYANA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMI,

*Lecturer of Sanskrit in the University of Calcutta*
*Associate Member of the Asiatic Society of Bengal, Member of the Philological Committee, A, S, B; Examiner of the Veda & Philosophy &c, Editor, Author, Commentator, Annotator, Compiler, Translator, & Publisher of different Vedic Works &c. &c.*

VOL. V. KANDA V

---

CALCUTTA:

PRINTED BY HITAVRATA CHATTOPADHYAYA,

AT THE SATYA PRESS, No. 27, Ghose's Lane,

1907.

# ॥ शतपथब्राह्मणम् ॥

। शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् ।

श्रीमत्सायणाचार्यकृत-'वेदार्थप्रकाश'-नामभाष्येण

सहितम् ।



वङ्गदेशीयासियाटिकसमितेरनुमत्या व्ययेन च,

सामश्रमीतिप्रथितनाम्ना सत्यव्रतशर्म्मणा

यथामति संशोध्य सप्टीक्य च सम्पादितम् ।

॥ ५ भा० । ५ का० ॥

( पञ्चमकाण्डात्मकः पञ्चमो भागः )


कलिकाता-राजन्वत्याम् ,

१८६४-संवत्सरायां सत्ययन्त्रेण यत्नतो मुद्रितम् ॥

## ॥ अथ सम्पादकोक्तिः ॥

---

अथ यद्यपि तृतीयकाण्डानन्तरं क्रमप्राप्तं चतुर्थकाण्डसम्पादन मेव युक्तम्, परं चतुर्थकाण्डीयसायणकृतभाष्यस्यैक मपि विशुद्धादर्शपुस्तक मद्य यावन्नाधिहस्तगत मित्यनन्यगत्या क्रम मुल्लङ्घ्यापि पञ्चम मेव काण्डं समपादि।

तस्यैतत्पञ्चमकाण्डस्य पाठान्तरादिसम्पादनार्थं सङ्गृहीताना मादर्शपुस्तकाना मेवं नामधेयानि कल्पितानि—

क = १७९० सं०-लिखितं २८-पत्रात्मकं (क० सं० का०) पूर्णम्।

ख = १७४७ सं०-लि० १११-पत्रात्मकं (क० सं० का०) पूर्णम्।

ग = डा०-वेबर-सम्पादितम् (ई० १८४९-मुद्रितं) पूर्णम्।

घ = आजमेर-प्रकाशितम् (सं० १९५९ मुद्रितम्) पूर्णम्।

ङ = ४१-पृष्ठात्मकम् आस्यायितिकसमितिपुस्तकं पूर्णम्।

च = १२१-पत्रात्मकम् आस्यायितिकीय मपरम् पूर्णम्।

छ = तत्रस्थ मेव ग०-इ०-पुस्तकम् ६७-पत्रात्मकं पूर्णम्।

ज = डा०-वेबरेण यथावुक्तराचित्य सम्पादितम् (ई० १८४९-मु०)।

एष्वष्टस्वादर्शपुस्तकेषु प्रथमचतुष्कं मूलस्यापरचतुष्कं भाष्यस्येति॥

एतदेव काण्डं सव इत्यभिधीयते। सवशब्दार्थस्त्विह मूले एवैवं सूचितः—"सोऽस्मै सव मनुमन्यते तेनानुमतः सूयते"-इति ३ प्र० २ ब्रा० ११ क०। "'स' आवेदितो ज्ञापितः प्रजापतिः 'अस्मै' सुन्वते 'सवम्' अभिषेकम् अनुमन्यते, 'तेन' प्रजापतिना 'अनुमतः' अनुज्ञातः 'सूयते' अभिषिच्यते"-इति

तत्र सा० भा० (२५३ पृ०)। "सूयते ईश्वरत्वेनाभिषिच्यते एभिरिति सवाः एकाहविशेषाः"—इति तै० ब्रा० २. ७. १. १ भाष्ये च सायणः। "वरुणसवो राजसूयम्, अग्निसवश्चित्यः"—इत्यस्य (तै० सं ५. ६. २. १.) व्याख्यानावसरे च स्पष्टमिदमुक्तं तेन—"सूयते अभिषिच्यते यजमानः अत्र इत्यभिषेकयुक्तो यज्ञः सवः"—इति। तैत्तिरीयब्राह्मणे द्वितीयकाण्डस्य षष्ठे प्रपाठके सौत्रामणीमुक्त्वा, सप्तमस्य प्रथमेऽनुवाके बृहस्पतिसवः, द्वितीये वैश्यसवः, तृतीये ब्राह्मणसवः, चतुर्थे सोमसवः, पञ्चमे पृथिसवः, षष्ठे गोसवः, सप्तमे ओदनसवो विहित इति दिक्॥

इह हि काण्डे प्रधानतो यागद्वयं विहितम्,— वाजपेयो राजसूयश्चेति। तत्र वाजपेयः प्रकृतिः, राजसूयस्तद्विकृतिः। सौत्रामणी-नाम-यागस्तु राजसूयाङ्गतया, प्राधान्येन पृथगनुष्ठेयतया चेति द्विविध आम्नात इति सङ्क्षेपः। सौत्रामण्याः स्वातन्त्र्यमाह च मीमांसान्यायमालायाम् (४. ३. १८)—

"अग्निं चित्वा यजेत् सौत्रामण्यङ्गेष्टिरुतेहवी।
अग्निकाले स्वकाले वा स्यादाद्योऽन्याङ्गयन्ततः॥
निवृत्ते चयनादौ तु कर्मान्तरविधानतः।
स्वकाले चोदकप्राप्ते मदनुष्ठानमाश्रितम्॥"—इति।

"अग्निं चित्वा सौत्रामण्या यजेत"—इत्येव (तै० सं० ५. ६. ३. १०.) तदधिकरणस्य विषयवाक्यमिति॥

काशीकोटा-रायबरेली। } श्रीसत्यव्रतशर्म्मा।
सं० १९५१। ई० १८०७। } (सामश्रमः, भाषाश्रमी, आचार्यश्च)

# शतपथब्राह्मण-पञ्चमकाण्डस्य

## सूचीपत्राणि।

॥ अथ प्रपाठकसूची ॥



॥ अथाध्यायसूची ॥

## ॥ अथ ब्राह्मणसूची ॥

## ॥ अथ सत्संव्यालोच्यवचनसूची ॥

"अथान् निपतति०---० तेष्वेवेयाय मां दीव्यय मिति" ४.१.२३.

"अदाभ्यस्य च गृहेभ्यो गोविकर्तस्य च गवेधुका. सम्भृत्य"२.५.१०.

"अग्निरेकाक्षरेण प्राण मुदजयत्" २. २. १०,

"अग्निर्वै दाता पौष्णाः पशवः" २. ४. ६.

"अग्निर्वै दाता वर्चः सोमः". २. ४. १०.

"अग्निर्वै दाता वैष्णवा. पुरुषाः" २. ४. २.

"अग्निर्वै देवाना मनीकं सेनाया वै सेनानी" २. ५. १.

"अग्नेर्वै धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिः।
अग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति" ३. २. १७.

"अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः" १. २. ६.

"अग्ने रेतो हिरण्यम्" २. २. ६ ; ४. ३. ८.

"अजर्षभस्याजिन मुपस्तृणाति, तदुपरिष्टाद्रुक्मं निदधाति,
तमभ्यवरोहतीमा वैव" १. ६. २१.

"अतिरिक्त आग्नीध्रीयः ; गार्हपत्ये हवींषि श्रपयन्ति, आहवनीये
जुह्वति" ३. ४. १०.

"अथास्य दधि विनाट आसिच्य रथं युक्त्वावध्य देदीयितवा आह
तद् यत् स्वय मुदितं नवनीतं तदाज्यं भवति" २. ६. ६.

"अथैनं वासांसि परिधापति०—० ताप्यं परिधापयति, ०—०
अधीवासं प्रतिमुञ्चति, उष्णीषं संहृत्य पुरस्तादवगूहति,
०—० समन्तं वा इदं नाभिः पर्येति" ६. २. २०—२४.

"अन्नो वै प्रजापति." १. ३. १२.

"अन्नं ऊर्गुदुम्बर." ३. १. २.

"अन्न वै पशव." १. ६. १६.

"अन्न वै प्रजापति." १. ३. ७.

"अन्न वै वाज." १. ३. २, ४, ६.

"अन्नपेयं नामैतद् यद् वाजपेयम्" १. ३. ११, ५. २१ ३०,

"अपरिमितं वा अनिरुक्तम् ४. १. १२.

"एष वै प्रजापतिर्य एष यज्ञः" १. ४. १.

"एष वै सविता, य एष तपति" २. ५. ७.

"एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजेति" २. ७. १२.

"एषां वा लोकाना मय मेव ध्रुवः" १. २. ४.

"एषा वै परमा वाग् या सप्तदशानां दुन्दुभीनाम्" १. ५. ६.

"ओषधीनां नेदिष्ठतमा यद् गोधूमाः, तेषां न त्वगस्ति" १.६.६.

"कृष्णं वै तमः" २. ६. २.

"केशान् न वपते, वीर्यं वा एतद्" ४. ५. १, ६.

"क्षौमं वा चण्डातक मन्तरं दीक्षितवसनात्" १. ६. ८.

"गन्धर्वाः सप्तविंशतिः" १. ४. ८.

"चत्वारो वै वर्णाः, ब्राह्मणो राजन्यो वैश्यः शूद्र इति" ४. ६. ८.

"चत्वारोऽग्नयः, एषः पंचमः, द्वौ सभ्यावसथ्यौ, ते सप्त" ३.५.१७.

"तदिद मन्तरिक्षं सैषा 'वशा' नाम" १. २. २८.

"तद्धि पावनं यत् सत्यम्" २. ४. १७.

"तद् यः पुत्रस्तं पितरं करोति, यः पिता तं पुत्रम्" ३. ४. ८.

"तस्मादरः प्रजा पापीयसी भविता" १. १. ८. [ ४. १, २२,

"ताः ब्रह्मणे ददाति ०—०, हिरण्मयीं स्रजं सुदाम्ने, वत्सं होत्रे, हिरण्मयौ प्राकाशावध्वर्युभ्याम्, अश्वं प्रस्तोत्रे, वशां मैत्रावरुणाय, ऋषभं ब्राह्मणाच्छंसिने, वाससी नेष्टापोतृभ्यां अश्वतरो युग्मम्, यवाचित मच्छावाकाय, गा मग्नीधे"

"तिस्रो वा इमाः पृथिव्य इय मर्त्यैका, द्वे पथ्या परे" १. ५. २१.

"दैवयष्टी वा पर्येष्टिर्वा लेखालवो ०—० यथा राजसूययाजिन उदवसानीयेऽभिषेचति" ४. ७. ११.

"दैवयष्टी वा पर्येष्टिर्येन सीतामयी" ३. ६. १४.

"द्वे वै आमस्य रूपे शुक्लञ्चैव कृष्णञ्च १. ३. ९ ; २. ४. ८.
"धनुरधितनोति०—० बाहू विमार्ष्टि ०—० अथास्मै तिस्र इषूः प्रयच्छति" ३. २. २७—२९.
"यावत्स्वाजिं धावन्ति दुन्दुभीनभि साम गायति" १. ५. १७.
"नमो मात्रे पृथिव्यै" १. ६. १८.
"न वा एष स्त्री न पुमान् यत् क्लीब' पुरुषः" १.२.१४ ; ४.३.९.
"न वै ब्रह्मा प्रचरति, न स्तुते, न शंसति, अथ स यशः; न वै हिरण्येन किंचन कुर्वन्ति, अथ तद् यशः; तस्मात् त्रीणि शतमानानि ब्रह्मणे ददाति" ४. ७. १६.
"न वै मित्रः कञ्चन हिनस्ति, न मित्रं कश्चन हिनस्ति" २.६.७.
"न वै वाचात् किंचनापीयोऽस्ति, न मनसः किंचनापीयोऽस्ति, तस्मादाह वाचो वा मनो वेति" १. ४. ८.
"न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम्" १. ६. १८, १९ ;
"नैतदयो न हिरण्यं यल्लोहायसम्" ३. ३. ९ [४.४.२०, २१.
"नैतदयो न हिरण्यं यत् सीसम्" १. २. १४.
"नैते स्त्रियो नास्त्रियो यद् दन्दशूकाः" ३. ३. २.
"नैव सोमो न सुरा यत् परिस्रुत्" १. २. १४.
"नैव कर्तति केशान् न वपते, तस्यैव व्रतचर्या भवति यावज्जीवम्" ४. ५. ६.
"पराभवस्यैतन्मुखं यदतिमानः" १. १. १.
"पुरुषो वै प्रजापतेर्नेदिष्ठम्" १. १. ८.
"पूर्वेद्युः परिस्रुतं सन्दधाति; अश्विभ्यां पयस्य, सरस्वत्यै इन्द्राय सुत्राम्ण पयस्येति, ०—० कुवलसक्तून् कर्कन्धुसक्तून् बदरसक्तून् इत्यावपति, एतद्वै ततः समभवत्" ४.४.२०—२२.

"पूषा वै देवानां भागदुघः" २. ५. ८.
"पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे" ३. २. ४.
"प्रजननं प्रजापतिः" १. २. ८.
"प्रजापतिर्वा अनिरुक्तः" ३. २. ११.
"प्रतीचीनफलो वा अपामार्गः" २. ३. २०.
"प्रष्टिवाहिनो ऽश्वरथो दक्षिणा, त्रयोऽश्वा द्वौ सव्यष्टृसारथी" २. ३. ८.
"प्रहेयो वै पालागलः, अध्वानं वै प्रहित एति" २. ५. ११.
"आशुकानां, आमूनां, श्यामाकं, नैवारं, श्यामाकानां गावे-
धुकं, नाम्बाणां, यवमयम्" ३. ७. २—८.
"बृहस्पतिर्वै देवानां पुरोहितः" २. ३. २.
"बृहस्पतिसवो वा एष यद् वाजपेयम्" १. ६. १८.
"ब्रह्म वै पलाशः" ३. ३. १८.
"ब्रह्म हि ब्राह्मणः" १. ५. २, ४, ८, ११.
"ब्रह्म हि मित्रः, ब्रह्म हि यज्ञः, ब्रह्म हि बृहस्पतिः" २. ६. ४.
"माता धेनुः, मातेव वा इयं मनुष्यान् बिभर्ति" ३. ५. ४.
"यं न्वेवैकयर्चाभिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्,
किमु ये त्रयेण वेदेन" ४. ७. १५.
"यस्मै विशो राजा भवति, एष वोऽमी राजा; सोमोऽस्माकं
ब्राह्मणानां राजेति ०—० तदस्मा इदं सर्वमाद्यं करोति
०—० ब्राह्मणो ऽनाद्यः" ३. ४. ३.
"यावद्धि प्राणेष्वापो भवन्ति, तावद् वाचा वदति" ३. २. १६.
"या वा अपुत्रा पत्नी सा परिवृत्ती" २. ५. १३.
"योजनशो हि विमाना अध्वानं धावन्ति" १. ३. १७.
"यो वा अनूचानः सोऽलं वचसे" २. ६. २.

"यो वै रुद्रः सोऽग्निः." २. ३. १२.

"यो वै वरुणः सोऽग्निः" २. ३. १२.

"राज्ञ एव राजसूयम्" १. १. १२.

"रुक्म (रुच्यमानमुकुट) शतवितृण्णो वा भवति, नववितृण्णो वा ०—० त मुपरिष्टाच्छीर्ष्णो निदधाति" ३. ३. १३, १४.

"वज्रो वा आज्यम्" २ ३. ७.

"वज्रो वै विकङ्कतः" २. ३. १८.

"वरुणसवो वा एष यद्राजसूयम्" ३. ४ ३, २१. [२.६.६.

"वारुण्यं वा एतद् यदखनितम्, यदेतस्मिंस्तु यत् स्वयमुदितम्"

"वारुण्या वा एषा या यवमयी

मैत्रेया मैत्री या स्वयमयीर्णा" २. ६. ५.

"वारुणो वा एष योऽग्निना भृतः,

मैत्रेय मैत्रो य ऊष्मणा भृतः." २. ६. ८.

"वाराह्यौ उपानहौ उपमुञ्चते। पशवो ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः सम्बभूव, तस्माद् वराहो मेदुरः घृताद्धि सम्भूतस्तस्माद् वराहे गावः संजानते, — स्व मेवैतद्रस मभिसञ्जानते' ३ ५ १८.

"विशो वै मरुतः, वैश्यो वा ग्रामणीः." २. ४ ६.

"वीर्यं वा आपः" ३. १. १.

"वीर्यं वा एतदपां रसः" ३. ३. १०.

"शार्दूलचर्मणो जघनार्धे सीसं निहितं भवति" ३. ३. ८.

"श्येताविव श्वित्रिनावधिमन्थ्या सारस्वती भवति ०—० दुर्वेदा एव सदृशा पशवः, यदेव सदृशान् न विन्देदप्यजानेवालभेरन्, ते हि सदृशतरा भवन्ति" ४. ६ १.

"सत्यं वै श्रीर्ज्योतिः सोमः, अनृतं पाप्मा तमः सुरा" १. ५. २८.

"सप्तदश दुन्दुभीननुवेद्यन्तं सम्भिन्वन्ति" १. ५. ६.

"सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विषयितो वा भवति" १.६.५.

"सप्तदश सुराग्रहान् गृह्णाति" १. २. १२.

"सप्तदश सोमग्रहान् गृह्णाति" १. २. १०.

"सप्तदशपात्राणि सम्भरन्ति" २. १. ३.

"सप्त वै मारुतो गणः" ३. ५. १७.

"सयोनी वा अग्निमी, सयोनी अध्वदृपार्थी; सकामं हि रथ मधितिष्ठतः" २. ५. ८.

"सर्वं वा इदं प्रजापतिर्यदिमे लोका यदिदं किञ्च" १. ३. ११.

"स वा एष (वाजपेयः) ब्राह्मणस्यैव यज्ञः १. १. ११.

"सविता वै देवानां प्रसविता, प्रसविता वै यन्ता" २. ५. ७.

"सर्वो वै सूनः, सर्वो वै देवानां वरुणः" २. ५. ५.

"सव्यायुग्यं युनक्ति, दक्षिणाप्रष्टिं युनक्ति, सव्याप्रष्टिं यद्यपि मानुषे •—• तौ वा एत एव तयो युक्ता भवन्ति" १. ४. ८.

"स हि पौष्णो यच्छ्यामः" २. ४. ८.

"स हि वैष्णवो यद् वामनः" २. ४. ४.

"'सारस्वतीः', 'अर्मी' ०, 'स्यन्दमानाः', 'प्रतिपतीः', 'समुद्रियाः', 'निवेष्याः', 'स्थावराः' 'आतपवर्ष्याः', 'वैशन्तीः', 'कूप्याः', 'प्रुष्वाः', 'मध्व्याः', 'गोरुल्व्याः', 'पयस्याः', 'घृतश्चुतः', 'मरीचीः'— "ता वा एताः सप्तदशापः" ३. १. ३—२२.†

"यासौ द्यौः सैषा 'शुभा' नाम" ३. २. २८.

---

* प्रकाशयन्त्रभेदेन यत्सदोषोऽयं द्विविधा भवति।

† एतद् द्रष्टव्य ३३३ पृ० प्रथमटीप्पणी संशोध्या।

'क्षीम समुद्र सुतजर्म०—० हिरण्यरूपं (सुवर्णवत्प्रख्यं) सम कियद्ध नार्हति ०—० नाष्ट्रा रक्षांसि (रोगादि) चमसोऽपहन्ति" १.२.१०.
"इयं पृथिवी सैषा 'इडा' नाम" १ २. २८
"सोमो वै प्रजापति ०. १ ७
'स्वर्भानुर्ह वा आसुर सूर्यं तमसा विव्याध, स तमसा विद्धो न व्यरोचत' २ ६ २.

---

## ॥ अथ विषयसूची ॥

---

( १ प्र० १ ब्रा० )

अथ वाजपेयविधानप्रस्ताव , वाजपेये ब्राह्मणस्याधिकारविधि मुक्त्वा बृहस्पतिवृत्तान्त प्रदर्श्य क्षत्रियस्यापि त समर्थयितु मिन्द्रवृत्तान्ताख्यानम्, वाजपेयस्य साम्राज्यफलप्रदर्शनम्, तत्र चाग्निष्टोमविध्यादिकञ्चेति।

( १ प्र० २ ब्रा० )

वाजपेयपशुविशेषाणां विधानम्, प्राकृतसोमक्रयविधि मनूद्य परिस्रुत्क्रयविधानम्, पयोग्रहसुराग्रहयोः प्रतिपादन मनूद्य परिस्रुत्प्रपादने विशेषविधि, ग्रहग्रहणप्रसङ्गात् सुराग्रहाणां मधुग्रहस्य च माध्यन्दिने सवने ग्रहणविधिश्चेति।

( १ प्र० ३ ब्रा० )

वाजपेयस्य अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थात्वकथनप्रस्तावेन तत्र सैषा अग्निष्टोमादिगतानां सवनीयपशूनां विशेषतो विधानम्, पशुसराणाञ्च विधानम्, वशानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्योगस्य च प्राकृतपशुवपाहविर्भिः सह विधास्यमाने होमकाले विचारः, चात्वालपानमन्तरवर्त्तव्ये प्रैषेऽपि विशेषविधिश्चेति।

( १ प्र० ४ ब्रा० )

ततो माध्यन्दिनसवनकर्त्तव्येषु प्रधानतो यजमानाभिषेकस्य आजिधावनस्य विधिः, तत्र रथे चाश्वत्रयाणां योजनम्, तन्मन्त्राणां तात्पर्य्याख्यानानि च, ततश्चतुरश्वरथस्याध्वर्यवे दानविधिः, अथ नैवारचरुविधिः, अश्वानां तदाघ्रापणविध्यादिकञ्चेति।

( १ प्र० ५ ब्रा० )

अथाजिधावनप्रशंसा, ब्रह्मणो रथचक्रे गानम्, ब्रह्मणो रथावरोहणम्, यजमानभेदे मन्त्रभेदः, ततो दुन्दुभ्युपावहरणम्, क्षत्रियस्य यजमानस्य प्रसदग्रेषुपञ्चाधिकरणञ्च, ततोऽग्रेयुक्ते रथिनुधि यजमानस्य समन्त्रकारोहणम्, ततोऽध्वर्य्वादिकर्त्तव्यताविधानादिकम्, ततो हवनानुमन्त्रणयोर्व्यवस्थया विधानम्, तन्मन्त्रविधिव्याख्यानादिकञ्च, ततः सुराग्रहाणां मधुग्रहस्य चात्र माध्यन्दिने सवने विनियोगप्रकारः, प्रतिप्रस्थीतसुराग्रहाया मैत्रिब्राह्मणस्याद्विध्यादिकञ्चेति।

( १ प्र० ६ ब्रा० )

अथ यजमानस्य यूपारोहणम्। तत्र पूर्वं साग्निहोमस्य विधानम्, यूपचषालस्य गोधूमपिष्टमयत्वविधानम्, यज्ञायज्ञपरात्क

परिधापनम्, यूपे निश्रेण्यापनम्, यूपारोहणकाले जाया-मन्त्रणम्, तत्रस्थयोर्यजमानदम्पत्योः सर्वदिग्वीक्षणम्, भूम्यवेक्षणञ्च, कृष्णाजिने तयोर्यूपादवतरणम्, बास्तजिनाया आसन्द्या उपवेशनादिकञ्चेति॥

---

( २ प्र० १ ब्रा० )

वाजपेयीयहोमकालादिविधानम्, वाचयतिविधिः, उज्जिति-होमादिविधिः, तत्र, शिरस्यवगाह्यसुमन्थानादिकञ्चेति।

( २ प्र० २ ब्रा० )

अथ राज्ञो राजसूयविधिः। तत्र पवित्रेष्टिरेवारम्भणीयेष्टिः। तदुत्तरदिनेऽनुमत्यादियागश्च, तदुत्तरदिने आग्नावैष्णवयागश्च, तदुत्तरदिने आग्नीषोमीयश्च, तदुत्तरदिने ऐन्द्राग्नश्च, तदुत्तर-दिने आग्रयणश्च विधिदक्षिणादीनि विहितानि। उक्तयागपञ्च-कादनन्तरं चातुर्मास्यविधानञ्चात्रत्यमिति।

( २ प्र० ३ब्रा० )

तत्र चातुर्मास्येषु वैश्वदेवाख्यं प्रथमं पर्व, वरुणप्रघासाख्यं द्वितीयं पर्व, साकमेधाख्यं तृतीयं पर्व, शुनासीरीयाख्यं चतुर्थं पर्व, तेषां विधानादि। ततः पञ्चवातीयहोमविधानम्, तद्दक्षिणा-विधानञ्च। कारीर्यकामस्यापि पञ्चवातीयहोमविधानम्। तत इन्द्रतुरीययागविधानम्, तद्दक्षिणाविधानञ्च। ततोऽपामार्गहोम-विधानम्, ततोऽश्वकादाय मनूद्य मन्त्रविधानम्, तन्मन्त्रव्याख्या-नादिकञ्च। ततः स्रुवहोमादिविधानञ्चेति।

(२ प्र० ४ ब्रा०)

अथ तत्रैव त्रिपशुकेष्टिविधानम्। तत्र वैष्णवयागः प्रथमः, विष्टविष्णुयागो द्वितीयः, सौम्ययागस्तृतीयः। एषामितिकर्त्तव्यता-मन्त्रादि दक्षिणा विधानानि। ततो द्विहविष्कयागविधिः, तत्र वैश्वानरयागः प्रथमः, वारुणयागो द्वितीयः। अनयोरिति-कर्त्तव्यता मन्त्रादि दक्षिणाविधानानि चेति।

(२ प्र० ५ ब्रा०)

अथ रत्नहविरिष्टिः। रत्नहविःप्रयोगः। स च सेनानीगृहे प्रथमः, पुरोहितगृहे द्वितीयः, यजमानगृहे तृतीयः, महिषी-गृहे चतुर्थः, सूतस्य गृहे पञ्चमः, ग्रामणीगृहे षष्ठः, क्षत्तृगृहे सप्तमः, संग्रहीतुर्गृहे अष्टमः, भागदुघस्य गृहे नवमः, पुनर्यज-मानगृहे दशमः, सूतगृहे एकादशः, परिवृक्तीगृहे द्वादशः, तद्रत्नहविरिष्ट्यन्ते किञ्चित् कर्त्तव्यविशेषविधानञ्चेति।

(२ प्र० ६ ब्रा०)

अथ सोमारौद्रयागविधिः। तत्र चरुपाकः, आज्यकरणादिकञ्चेति।

(२ प्र० ७ ब्रा०)

अथ पवित्राख्ययागादनन्तरकर्त्तव्यस्य राजसूयीयरितीय यागस्याभिषेचनीयाख्यस्य मध्ये देवसुवां हविषां विधानम्। तत्रादौ सावित्रस्य विधानम्, तत्र क्रमादाग्नेयस्य, सौम्यस्य, ऐन्द्रस्य, रौद्रस्य, मैत्रस्य, वारुणस्येति। ततो देवस्वनामनिर्वचना-दिकञ्चेति॥

( ३ अ० १ ब्रा० )

अथ सप्तदशानामपां सम्भरणविधानम्। तत्र प्रथमं तत्तत्त्वनिरूपणम्। अथ प्रथमं सारस्वतीनामपां सम्भरणप्रकारादिकम्; ततः प्रागूर्म्मीणाम्, प्रत्यगूर्म्मीणाम्, प्रतिलोमस्यन्दमानानाम्, अपयतीनाम् (स्रवत्प्रवाहाणाम्), परिवाहिणीनाम्, स्थावरीणां सामुद्राणाम्, आवर्त्तोदकानां सूर्यत्वचसाम्, आतपवर्ष्याणाम्, वैशन्तानाम्, कूप्यानाम्, नीहाराख्यानाम्, मधुरूपाणाम्, गोल्वानाम्, पयोरूपाणाम्, घृताख्यानाम्, मरीचीनामपामिति।

( ३ अ० २ ब्रा० )

अथाभिषेकः। तत्र संस्रावविधिः, पार्थहोमविधिः, अभिषेकपात्राणां विधानम्, पवित्रद्वयकरणोत्पवनादिकञ्च। ततो यजमानस्य तार्प्यपाण्ड्वाधीवासोष्णीषपरिधानम्। अथैव दीक्षितवसनस्यावभृथे परित्यागविधिः, धनुर्बाणग्रहणम्, आविर्मन्त्रवाचनञ्चेति।

( ३ अ० ३ ब्रा० )

शैगव्योदायमदन्दशूकानां सन्तरालवर्त्तित्वोपपादनम्, ततः सुव्रतस्याथ सर्वदिगाक्रमणविधिः, अधस्तादुपरिष्टाच्च रुक्मनिधानम्, समन्त्रकबाहूद्ग्रहणञ्चेति।

( ३ अ० ४ब्रा० )

अभिषेकप्रकारोपदेशः, अंशत्वेः शिष्टस्य पात्रगताभिषेकपात्रस्य तस्यैव राज्ञः प्रियतमाय पुत्राय प्रदानविधिश्च। तत्पश्चात् पुत्रकर्तृको गार्हपत्येऽग्नौ होमविशेषः, पात्रान्तरपात्रमिश्रणाग्नीध्रीये होमश्चेति।

( ३ प्र० ५ खा० )

रथोपावहरणम् । तत्र प्रथमं तावत् आहवनीयस्योत्तरप्रदेशे मतानां तदधिकानां वा गवां स्थापनम्, ततः समन्त्रकरथोपावहरणविधिः, यजमानस्य रथारोहणम्, स्थापितासु गोषु रथस्थापनम्, तद्दक्षिणतोऽश्वानां स्थापनम् ; ततो रथविमोचनीयहोमविधिः, वराहचर्मनिर्मितोपानद्विमोचनम्, ततो रथादवरोहणविधिः, एतत्प्रसङ्गतो हंसमन्त्रस्य व्याख्यार्थविध्यप्रदर्शनम्, यजमानयोरासञ्जनम्, औदुम्बर्यां चमसूदनादिकम्, पयस्यायां आग्नेरवहरणञ्चेति ॥

---

( ४ प्र० १ खा० )

अथ पयस्यायाः प्रचारः । पात्न्या मथीवासाच्छादनम्, सुन्वत-स्थालीपवेशनम्, यजमानहस्ते पयाच्छादनम्, सुन्वत्पृष्ठे दण्डे-राधानः, यजमानस्य वरप्रार्थनादिकम्, सुन्वते स्रुव-प्रदानञ्च । धूतस्थाननिरूपणम्, अधिदेवने हिरण्यनिधानपूर्व्वकहोमविधिः, गोऽश्वनिवापः, गोपयनम्, द्यूतकर्मणो दक्षिणादानम्, पयस्यायाः स्विष्टकृदिडादिविधिश्चेति ।

( ४ प्र० २ खा० )

अथ दशसंसृपाहविर्विधानम्, दशपेयविधानम्, द्वादश-पुण्डरीकस्रक्प्रतिमोकः, ततो द्वादशपेयस्य दीक्षाविधिश्च । आग्नेयादिहविर्निर्वापः, उपसत्त्वार्थं हविस्त्रयकरणम्, तत्र विदारय ; उपसद्यागविधिः । गर्भिणीनां द्वादशगवां प्रभृति

मासिच्य शतवच्छिद्रं कुम्भं शिक्ये कृत्वा दक्षिणस्याग्नेरुपरि धारयन् ततः स्रवन्त्या धारया सोमवताम् बर्हिषदां अग्निष्वात्तानाञ्च पितृणां सुपस्थानादिकम्, सौत्रामणीदक्षिणाविधानञ्चेति।

( ४ प्र० ७ श्रा० )

अथ राजसूयाख्ये कर्मण्यपामार्गहोमोत्तरवीष्टेः प्रयोगः। तत्र तद्विधानार्थाख्यायिका, तन्नामनिर्वचनम्, तद्धविर्निरूपणम्, तद्विधानम्, तद्दक्षिणाविधि, तत्फलस्तुतिः, तत्फलसंवादाख्यानम्, वेदत्रयरूपयागमया त्रैधातव्या अभिचारपरिहारश्चेत्याख्यानम्। ततो ब्रह्मणे व्रीहि यतमानानि, होत्रे तिस्रः सवत्साः पष्ठौह्यो गावः, अध्वर्यवे व्रीहि वासांसि, अग्नीध एका गाश्चेति तयोदृक्षदक्षिणाद्रव्याणां विधानम्; तदेतत्त्रयोदशसाम्येनास्य यज्ञस्य मलिम्लुचाश्रितसंवत्सररूपत्व मिति प्रशंसा चेति क्रम॥

---

## ॥ अथ कर्मसूची ॥

---

## ॥ ऋषिनामादिसूची ॥



* इह सूत्रे (३ २ ४) पृथी वैन्यः। एवम् आप० श्रौ० २० १२६ ५ ऋ० सं० १० १४८ ५ तै० ब्रा० १ ७ ७ ४ पृथिर्वैन्य ऋ० सं० १ ११२ १५ अप्यपि। सर्वानुक्रमण्यां च पृथुर्वैन्य १० म० १४८ सू० द्रष्टव्य मिति।

॥ इति ॥

---

## ॥ अथर्षिनामादिसूची ॥



* इह सूचे ( ३ ९. ४ ) पृथी वैन्यः। एवम् अथ० सं० २०. १४०. ५; ऋ० सं० १०. १४८. ५। तै० ब्रा० १. ७. ७. ३ पृथिर्वैन्यः, ऋ० सं० १. ११२. १२ ऋग्वपि। ऋग्वनुक्रमण्यान्तु पृथुर्वैन्यः १० म० १४८ सू० दृश्य मिति।

॥ इति ॥

अथ * देवाः । अन्यो ऽन्यस्मिन्नेव जुह्वतश्चेरु-स्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषा मास यज्ञो हि देवाना मन्नम् ॥ २ ॥

ते होचुः । कस्य न इदं भविष्यतीति ते मम † ममेत्येव न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचु-राजि मेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजि माजन्त ॥ ३ ॥

स बृहस्पतिः । सवितार मेव प्रसवायो-पाधावत् सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इद मुज्जयानीति तदस्मै सविता प्रस-विता प्रासुवत्तत् सवितृप्रसूत उदजयत् स इदꣳ सर्व्व मभवत् स इदꣳ सर्व्व मुदजयत्प्रजापतिꣳ ह्युद-जयत् सर्व्वꣳ ह्येवेद प्रजापतिस्तेनेष्ट्वैता ‡ मेवोर्ध्वां दिश मुदक्रामत्तस्मादप्यस्य वेद यथ § नैषोर्ध्वा बृह-स्पतेर्दिगित्येवाहुः ॥ ४ ॥

तद्धो ह स्म पुरा व्वाजपेयेन यजन्ते । एताꣳ

* 'अप'—इति क। † नास्त्येतत् पदं ख पुस्तके।
‡ नेष्ट्वेता—इति ख, नेष्ट्वैता—इति घ।
§ 'अथ'—इति ग, घ।

ह स्मैवोर्ध्वां दिश मुत्क्रामन्ति तत औपाविरेव जानश्रुतेयेन प्रत्यवरूढं ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥ ५ ॥

तेनेन्द्रोऽयजत। स इदꣳ सर्वमभवत् स इदꣳ सर्व मुदजयत् प्रजापतिर्ह्युदजयत् सर्वꣳ ह्येवेदं प्रजापति स्तेनेष्ट्वैता * मेवोर्ध्वां दिश मुदक्रामत् ॥ ६ ॥

तद्ध स्म पुरा वाजपेयेन यजन्ते। एताꣳ ह स्मैवोर्ध्वां दिश मुत्क्रामन्ति तत औपाविरेव जानश्रुतेयेन प्रत्यवरूढं ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥ ७ ॥

स यो वाजपेयेन यजते। स इदꣳ सर्वं भवति स इदꣳ सर्व मुज्जयति प्रजापतिर्ह्युज्जयति सर्वꣳ ह्येवेदं प्रजापतिः ॥ ८ ॥

तदाहुः। न वाजपेयेन यजेत सर्वं वा एष इद मुज्जयति यो वाजपेयेन यजते प्रजापतिꣳ ह्युज्जयति सर्वꣳ ह्येवेदं † प्रजापतिः स इह न

* तेनेष्ट्वैता—इति ख, 'स्मैनेष्ट्वैतां'—इति घ।
† 'स्विदं'—इति ख घ।

'प्राजापत्याः' प्रजापतिना सृष्टाः 'उभये' द्विविधाः 'देवाश्च असुराश्च' 'पस्पृधिरे' स्पर्धाञ्चक्रुः । 'ततोऽसुरा' स्वतोऽन्यः प्रभुर्नास्तीति 'अतिमानेन' (अभिमानेन *) मूर्च्छितेन दर्पेण 'कस्मिन्नु वयं होमाधिकरणे 'वयं' 'जुहुयाम' होमं कुर्याम 'इति' धिक्कृत्य स्वकीयेषु आस्येषु होमं चक्रुः । 'ते' असुराः अत्यन्तगर्वेण पराजिताः । 'तस्मात्' अद्यापि अविद्वानपि नातिमानं कुर्यात् ; 'अतिमानः' अभिमानं 'यत्', तत् 'पराभवस्य' प्रापकमिति ॥ १ ॥

देवानां तद्विपर्ययं दर्शयति— अथ देवा इति । 'देवाः' तु 'अन्योऽन्यस्मिन्' जुहुवुः ; इन्द्रः अग्नौ, अग्निः इन्द्रे, इत्यादिक्रमेणेत्यर्थः । 'तेभ्यः' देवेभ्यः , अन्योऽन्यस्मिन् देवतात्वेन होमकरणात् प्रीतः † 'प्रजापतिः', 'आत्मानं' शरीरं ददावान् । "यज्ञो हैषा मिति । 'हि' यस्मात् 'देवानामयं यज्ञः' , अन्योऽन्यस्मिन् हविःप्रदानेनात्मसम्भवात् प्रजापतिशरीरं यज्ञ एव तेषामासीदित्यर्थः । यज्ञशब्देन वाजपेय उच्यते, प्रकरणबलात् । तथाच तैत्तिरीयके—"एष वाव यज्ञो यद् वाजपेयः"—इति ‡ ॥२॥

तत्र वाजपेये सर्वदेवानां पुरस्तात् वाजपेयस्यानुष्ठानेन बृहस्पतेरेव श्रैष्ठ्यं वक्तु माभिधावनं दर्शयति— "ते होचुरिति । 'ते' देवाः आगच्छन्तं यज्ञं दृष्ट्वा 'नः' अस्माकं मध्ये 'इदम्' इति सामान्येन निर्देशः , अयं वाजपेययज्ञः 'कस्य भविष्यति ?' 'इति' 'ऊचुः' । ततः 'ते' सर्वेऽपि ममैवायं यज्ञो ममैवायं यज्ञ इति § विवदमानाः 'न सम्पादयाञ्चक्रुः' अस्यैवायं यज्ञ इति न निश्चित-

---

* नास्त्येतत् पदं क-पुस्तके । † 'प्रतीतः'—इति ख ।

‡ तै० ब्रा० १. ३ २.५. । § एवं द्विरुक्तिर्नास्ति च पुस्तकाद्वये ।

प्राह्वक मिदं ब्राह्मण मित्याह— "तद् ये ह स्मेति । अस्यार्थस्तु— 'तत्' तस्माद् बृहस्पतिनानुष्ठितत्वाद् 'ये' 'पुरा' पूर्वं 'वाजपेयेन यजन्ते', ते सर्वे ऊर्ध्वं गच्छन्ति, 'तत' ऊर्ध्वदिश समागात् 'आनश्रुतेयेन' आनश्रुतेः पुत्रेण 'औपावितिना' समाम्ना 'एव' एकेन राजर्षिणा 'मल्लवरूढ' मल्लवरोह कृत । भावे निष्ठा । "इतयामिव"–इति * अनश्रुतेर्ढक् प्रत्यय । 'तत' आरभ्य इदानीं मनुष्यतारोऽपि 'अर्वाचीनम्' अवाङ्मुख 'मल्लवरो हन्ति' इति ॥ ५ ॥

एव वाजपेये ब्राह्मणस्याधिकारविधि सुचेतु बृहस्पति हत्तान्त प्रदर्श्य क्षत्रियस्यापि त समर्थयितु मिन्द्रहत्तान्त दर्शयति— 'तेनेन्द्रोऽयजतेति । निगदव्याख्यातोऽर्थः । अस्मिन् पर्यायेऽपि 'तद्ये ह स्म'–इति वाक्यसन्दर्भ पूर्ववद् व्याख्येय ॥ ६, ७ ॥

इत्थ माख्यायिकया वाजपेये ब्राह्मणराजन्ययोरधिकारित्वं प्रदर्श्य, इदानीं स वाजपेय विधत्ते— 'स यो वाजपेयेन यजत इत्यादिना † ॥ ८ ॥

सर्वजयेन विराडात्मकप्रजापतिजयस्यानुचितत्वात् तत्साधन भूतो वाजपेयो न कर्तव्य इति पूर्वपक्ष मुन्नावयति— "तद्धा हुर्न वाजपेयेनेत्यादि ‡ । "इह न किंचनेति । सर्वात्मकप्रजापतिजयेन 'इह लोके 'न किञ्चन' परिशिष्टम्, तस्मात् 'तस्य' यजमानस्य 'प्रजा' 'पापीयसी' अतिशयेन दारिद्र्यवती 'भविता'

* पा० सू० ४ १ १२२ ।

† उभयत्र शुक्लपक्षे बृहस्पतिसवेन यजते ज्योतिष्टोमेन वा —इत्यादि कात्यायनीयश्रौतसूत्र निरीक्षणीय ( १४ १ २—८ सू० ) ।

‡ ब्राह्मणो वाजपेयेन —इति का० श्रौ० सू० १५ १ १

भवितुं नेश्वराः समर्था', 'इति' अतो हेतोः वाजपेयो न कर्त्तव्य इति ॥ ९ ॥

तद्विषेधं अधिकारिविशेषनिरूपणेन परिहरति— "तदु वै यजेतैवेति । सर्वथा वाजपेययागः कर्त्तव्य इत्यवधारणार्थः । तत्र विदुष एव यष्टृत्वं विदुषा मेव याजयितृत्वं मित्युभय मेवोपपादयति— "य एव मिति । 'यः' पुमान् 'एतं' वाजपेयं यज्ञम्, ऋगादिवेदत्रयेण 'सृष्टं' वेतिकर्त्तव्यत्वेन विहित इति 'विद्यात्' जानीयात्, 'ये' च 'प्रजनयः' प्रज्ञातवन्तः साङ्गोपाङ्गं कर्म्म ज्ञात वन्त ऋत्विजः, 'ते' 'एनम्' यथोदिष्टं विद्वांसं यष्टारं 'याजयेयुः' । अतः साधारणैर्वाजपेययागो न कर्त्तव्य इत्यभिप्रायेण "न वाजपेयेन यजेत"–इत्युक्तम् । "एषा ह त्वेवैतस्येति । क्रियाकुशलानां ऋत्विजां याजयितृत्व मेव यज्ञसमृद्धिः ; यज्ञमेतस्याभावेन यज्ञसम्पूर्त्तेः सम्भवात् ॥ १० ॥

अथ वाजपेये अधिकारिविधिं सूचयति— "स वा एष ब्राह्मणस्येति । यतो बृहस्पतिनानुष्ठितं, यतो देवानां मध्ये बृहस्पतिः ब्राह्मणजात्यभिमानी, ब्राह्मणबृहस्पत्योर्ब्रह्मसम्बन्धाद् ऐकरूप्यम् ; 'ब्रह्म अधीते वेद वा ब्राह्मणः'–इति व्युत्पत्तेः । इन्द्रेणाप्यनुष्ठितं, यतो देवानां मध्ये इन्द्रः क्षत्रियजात्यभिमानी । इन्द्रराजन्ययोः क्षत्रसम्बन्धादैकरूप्यम् ; क्षत्रं नाम बलम्, तत्सद्भावात् उभयोः । अतो मनुष्येष्वपि ब्राह्मणराजन्ययोरेवाधिकारो न तु वैश्यस्य * । अत एव कात्यायनेनोक्तम्— "वाजपेयः शरद्यवैश्यस्य"–इति † ॥ ११ ॥

---

* "न वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः"–इति तै० ब्रा० १.३.२-१ ।  † का० श्रौ० सू० १४.१.१ ।

वाजपेयस्य साम्राज्यफल मिति वक्तु प्रसङ्गात् राजसूयस्याधिकारिभेदेन फलभेदेन वा अवरत्वं दर्शयति— "राज्ञ एव राजसूय मित्यादिना *। एवकारोऽन्ययोगव्यवच्छेदार्थः। राजशब्देन क्षत्रिय उच्यते, न तु राज्ययोगाद्राजेति व्युत्पत्त्या ब्राह्मणादिर्विवक्ष्यते। "अवर वा इति। राजसूयाख्यं कर्म 'अवरं' निकृष्टम्; कतिपयदेशाधिपतित्वरूपराज्यफलमात्रसाधनत्वात्। वाजपेयाख्यं कर्मैव 'परम्' उत्कृष्टम्; सर्वदेशाधिपतित्वरूपसाम्राज्यफलसाधनत्वात्। राज्यात् साम्राज्यस्याधिक्य माह— "कामयेत वै राजेति ॥ १२, १३ ॥

अथ वाजपेयस्य साम्राज्यफलं दर्शयति— "स यो वाजपेयेनेति। 'स' सम्राट् वाजपेययाजी 'इदं' परिदृश्यमानं 'सर्वं' जगत् 'संवृङ्क्ते' संवर्जयति, वशीकरोतीत्यर्थः †। एवं साम्राज्यफलं वाजपेयं विधाय तत्र कर्मादौ सावित्रहोमं विधत्ते— "स कर्मण कर्मण इति। वीप्सया सर्वकर्मादौ कर्तव्यत्वम् अभिधीयते। येषां कर्मणाम् आदौ सावित्रहोमः कर्तव्य, तानि कर्माणि कात्यायनेन सङ्गृहीतानि— "देव सवितरिति जुहोति यजत्यादिषु, सकृद् दीक्षारम्भे कर्मैकत्वात्, क्रयप्रदेशारम्भण मन्थ्योक्षादनाग्निप्रणयनहविर्धानाग्नीषोमीयाणां सदःपात्नीयोऽभिधिष्ण्यनिवपनवसतीवरीग्रहणपरिहरणेषु च कर्मान्तरत्वात्"–इति ‡। तत्र मन्त्रं विधत्ते—"देव सवितरिति §। तस्य मन्त्रस्याय

---

* 'राज्ञो राजसूयः'—इति का० श्रौ० सू० १५ १ १।

† मीमांसाया न्यायमालायां ( १अ० ४पा० ) द्रष्टव्यम्।

‡ का० श्रौ० सू० १४ १ ११, १२, १३।

§ वा० स० ९, १ १।

अर्थः ;— हे 'सवितः देव' प्रेरक ! प्रकाशमिन् ! 'यज्ञं' वाजपेयं 'प्रसुव' प्रवर्त्तय, 'यज्ञपतिं' यजमानं 'भगाय' धनुष्ठानरूपायैश्वर्याय 'दिव्यः' दिवि भवः यो 'गन्धर्वः' सवितुरनुग्रहात् 'केतपूः' केतान् पुनाति, प्राणिनां विज्ञानानि शोधयन् भवति, सः 'नः' अस्माकं 'केत' वाजपेयविज्ञानं 'पुनातु' शोधयतु। 'वाचस्पतिः' प्रजापतिश्च सवित्रानुज्ञातः 'नः' अस्मदीयं 'वाचं' स्वीकृत मनम् 'अद्य' अस्मिन्नहनि 'स्वदतु' स्वदयतु ॥ १४ ॥

सवितुरुपधावनं बृहस्पतिसम्बन्धेन स्तौति— "तद्यदैवाद इति। 'अदः' अस्मिन् विप्रकृष्टे पूर्वस्मिन् काले यथा 'बृहस्पतिः सवितारम्' 'उपाधावत्', तत. तस्मै सविता चांसुज्ञा ददौ, एवम् 'एषः' इदानीं मनुष्योऽपि त मेव 'उपधावति', तस्मै च 'प्रसविता' प्रेरयिता भवति, अनुज्ञातातीत्यर्थः ॥ १५ ॥

"तस्मादाप्तोति। सावित्रहोमस्य सद्भावं सिद्धं दर्शयति— "आ ग्रह.सुत्याया इति। आङ् मर्यादायाम्। 'ग्रहः सुत्याया.' सुत्यादिनात् पूर्वम्, होतव्येत्यर्थः। अत एव कात्यायनः— "प्राक् सुत्यायाः"—इति * ॥ १६ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १४ । १ । १२ ॥

(अथ द्वितीयं ब्राह्मणम्)

अथांशुं गृह्णाति। सर्व्वत्वायैव तस्माद्वा अंशुं गृह्णात्यथैतान् प्रगृहीतानेवाग्निष्टोमिकान् ग्रहान् गृह्णात्याग्रयणात् * ॥ १ ॥

अथ पृष्ठ्यान् गृह्णाति। तद्यद्देवैरेतैर्देवा उदजयंस्तदेवैष एतैरुज्जयति † ॥ २ ॥

अथ षोडशिनं गृह्णाति। तद्यदेवैतेनेन्द्र उदजयत्तदेवैष एतेनोज्जयति ‡ ॥ ३ ॥

अथैतान् पञ्च वाजपेयग्रहान् गृह्णाति। ध्रुवसदं त्वा नृषदं मनःसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येषा वै लोकानामयमेव ध्रुव इयं पृथिवी ममेवैतेन लोकमुज्जयति ॥ ४ ॥

अप्सुषदं त्वा §। घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनि-

---

* ग्रात — इति ग घ। † ‡ वि — इति क।

§ ग घ पुस्तकयोरिह चिह्नितो () नास्ति।

रिन्द्राय त्वा जुष्टतम मिति सादयत्येषां वै लोकाना मय मेव व्योमेद मन्तरिक्षलोक मेवै-तेनोज्जयति ॥ ५ ॥

पृथिविसदं त्वा। अन्तरिक्षसदं* दिविसदं देवसदं नाकसद मुपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येष वै देवसन्नाकसदेव एव देवलोको देव-लोक मेवैतेनोज्जयति ॥ ६ ॥

अपाꣳ रस मुद्वयसꣳ। सूर्ये सन्तꣳ समाहितम्। अपाꣳ† रसस्य यो रसस्तं वो गृह्णाम्युत्तम मुप-यामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येष वा अपाꣳ रसो यो ऽयं पवते स एष सूर्ये समाहितः सूर्यात् पवत एत मेवैतेन रस मुज्जयति ॥ ७ ॥

ग्रहा ऊर्जाहुतयः। व्यन्तो विप्राय मतिम्। तेषां‡ विशिप्रियाणां वो ऽह मिष मूर्जꣳ समग्रभ मुपयाम-

---

* 'अन्तरिक्षसदं'—इति [illegible], घ।

† 'समाहित मपाꣳ'—इति ग, घ।

‡ 'मतिं तेषां'—इति ग, घ।

गृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष * ते योनि-
रिन्द्राय त्वा जुष्टतम मिति सादयत्युभे रसो रस
मेवैतेनोज्जयति ॥ ८ ॥

तान्वा ऽएतान् † । पञ्च व्वाजपेयग्रहान् गृ-
ह्णाति प्रजापतिं वा ऽएष उज्जयति यो व्वाज-
पेयेन यजते संवत्सरो वै प्रजापतिः पञ्च वा
ऽऋतवः संवत्सरस्य तत् प्रजापति मुज्जयति तस्मात्
पञ्च व्वाजपेयग्रहान् गृह्णाति ‡ ॥ ९ ॥

अथ सप्तदश सोमग्रहान् गृह्णाति । सप्त-
दश सुराग्रहान् प्रजापतेर्व्वा ऽएते ऽअन्धसी यत्
सोमश्च सुरा च ततः सत्यं श्रीर्ज्योतिः सोमो
ऽनृतं पाप्मा तमः सुरैते ऽएवैतदुभे ऽअन्धसी
ऽउज्जयति सर्व्वं वा ऽएष इद मुज्जयति यो व्वाज-
पेयेन यजते प्रजापतिर्ह्युज्जयति सर्व्वमु ह्येवेदं
प्रजापतिः ॥ १० ॥

स यत् सप्तदश । सोमग्रहान् गृह्णाति सप्त-
दशो वै प्रजापतिः प्रजापतिर्य्यज्ञः स यावा-

* जुष्ट येमं—इति ग घ।

† 'तान्—इति ग, घ। ‡ 'ति—इति क।

नैव यज्ञो यावत्यस्य मात्रा तावतैवाशैतत् सत्यं श्रिय ज्योतिरुज्जयति * ॥ ११ ॥

अथ यत् सप्तदश। सुराग्रहान् गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ स यावा-नेव यज्ञो यावत्यस्य मात्रा तावतैवाशैतदनृतं पाप्मानं तम उज्जयति ॥ १२ ॥

त उभये चतुस्त्रिंशद् ग्रहाः सम्पद्यन्ते। त्रयस्त्रिंशद्वै देवाः प्रजापति श्चतुस्त्रिंश स्तत् प्रजापति मुज्जयति ॥ १३ ॥

अथ यत्र राजानं क्रीणाति। तद्दक्षिणतः प्रतिवेशत केशवात् पुरुषात्सीसेन परिस्रुत क्री-णाति न वा एष स्त्री न पुमान यत् केशव पुरुषो यदाह पुमांस्तेन न स्त्री यद् केशवस्तेनो † न पुमान्नैतदयो न हिरण्य यत् सीस ‡ नैव सोमो न सुरा यत्परिस्रुत् तस्मात् केशवात् पुरुषात्सीसेन परिस्रुत क्रीणाति ॥ १४ ॥

अथ पूर्वेद्यु। द्वौ खरौ कुर्वन्ति पुरोऽह्न

* ति—इति क।　　† स्तेन—इति ग घ।

‡ सीस—इति ग, घ।

"अथैतानिति। 'प्रधानान्' प्रसिद्धान् 'आग्निष्टोमिकान्' अग्निष्टोमे विहितान् 'ग्रहान्' 'आ आग्रयणात्' आग्रयणपर्यन्तान् गृह्णीयात्। उपांश्वन्तर्यामौ, ऐन्द्रवायव मैत्रावरुणाश्विनान्, शुक्रामन्थिनौ, आग्रयणञ्च गृह्णीयादित्यर्थः॥ १॥

अथातिग्राह्यान् विधत्ते— "अथ पृष्ठ्यानिति। 'पृष्ठ्यान्' अतिग्राह्यान्। ते हि पृष्ठ्यस्तोत्रसम्बन्धात् * पृष्ठ्या इत्यर्थः। पृष्ठ्यषडहे प्रतिदिवस मेकैकस्य, विश्वजिति सर्वपृष्ठे चैकाहे ग्रहणात् एतेषां पृष्ठ्यसञ्ज्ञा। तथाच चतुर्थकाण्डे समाम्नातम् —"अन्तोन्द्रयर्शौ अतिग्राह्यान् गृह्णाति"–इत्यारभ्य, "तान् वै पृष्ठ्ये षडहे गृह्णीयात्, पूर्वे त्र्यहे आग्नेय मेव प्रथमेऽहन्यैन्द्रं द्वितीये सौर्यं तृतीय एव मेवाम्न्यहम्"–इति, तथा "विश्वजिति सर्वपृष्ठ एकाह एव गृह्यन्ते"–इति च †। तेषां मन्त्रानि गता खिल्वसञ्ज्ञैव शाखान्तरस्थत्, मन्त्रान्तरानुपदेशात्। अत्र कात्यायनः— "मातरश्वनोऽतिग्राह्यान् गृहीत्वा षोडशिनम्"– इति ‡॥ २, ३॥

मन्त्रान्तराणि विधत्ते— "अथैतान् पश्चेति। सूचितं हि— "पञ्च चैन्द्रान्, भुवसद मिति प्रतिमन्त्रम्"–इति §। अथैतान् तेषां पञ्चानां ग्रहाणा मपि पञ्च मन्त्रान् विधत्ते–"भुवसद स्वेत्यादिना। तत्र, प्रथमग्रहमन्त्रस्याय मर्थः ‖,— 'भुवसद' भुवे स्थिरे

* 'एकाधकस्तोत्रसम्बन्धात्'—इति च।
† पुरस्तात् ( ४ ४ ५ २—१३ ) द्रष्टव्यम्।
‡ का॰ श्रौ॰ सू॰ १४ १ २८ क।
§ का॰ श्रौ॰ सू॰ १४ १ २८ ख २ १।
‖ वा॰ सं॰ [illegible]

भूलोके सीदन्तम्, 'नृषदं' नृषु नेतृषु सीदन्तम्, 'मनस्सदं' मनसि वर्त्तमानं 'त्वा' त्वा ग्रहम् 'इन्द्राय' 'जुष्टम्' अभिरुचितं 'गृह्णामि' त्वाम्। 'उपयामगृहीतोऽसि' पृथिव्यात्मकेन पात्रेण गृहीतोऽसि; "इयं वा उपयामः"—इति श्रुतेः *। अत्र भिन्नक्रमः, यत उपयामगृहीतोऽसि अतस्त्वा गृह्णामीति। 'ते' तव एष स्थानप्रदेशो 'योनिः' स्थानम्, तस्मात् 'इन्द्राय' 'जुष्टतमम्' अतिप्रियतमं त्वा त्विह सादयामीति। "एष ते योनि"—इति मन्त्रान्त्यभागस्य विनियोग माह—"सादयतीति। मन्त्रगतं ध्रुवपदं व्याचष्टे—"एषां वा इति। 'एषां लोकानां' भूम्यादीनाम् 'अयं' परिदृश्यमानो लोको 'ध्रुवः' इदंशब्दस्यार्थ माह—"इयं वै पृथिवीति ॥ ४ ॥

"अप्सुषद मिति। द्वितीयग्रहमन्त्रस्यायमर्थः †;— अप्सु सीदन्तीत्यप्सुषत् तम्, घृते सीदन्तम्, 'व्योम्नि' अन्तरिक्षे सीदन्तम्। उपयामगृहीतोऽसीत्यादि पूर्वेण समानार्थ इति नेह विव्रियते। व्योमसदितिपदस्य तात्पर्य माह—"इद मेव व्योमेति। विशेषेण ओम् अवनं व्याप्तिर्यस्य तद् व्योम। तदेव 'अन्तरिक्षम्' तद्देवताद्वितीयग्रहरूपेण ‡ जितवान् भवतीत्यर्थः ॥ ५ ॥

"पृथिविषद मिति। तृतीयमन्त्रस्यायमर्थः §;— पृथिव्यादिषु त्रिषु लोकेषु सीदन्त मत एव सदम्। लोकत्रयाभिमानिषु अग्निवायुसूर्येषु, अन्येष्विन्द्रादिषु च आसीदन्तम्। 'नाकसदम्' न विद्यते अकं दुःखं यस्मिन्निति नाकः स्वर्गो देवलोकः। अत एव स्वर्गपदस्य सुखवाचकत्व मन्यत्रोक्तम्—

---

* श॰ ब्रा॰ ३ १ २ ७।　　† वा॰ सं॰ ९ २ २।
‡ ॰तद्द्वितीयग्रहणे —इति घ, छ।　　§ वा॰ सं॰ ९ २ ३।

सैवान्यं पश्चादक्ष मन्यं नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति तस्मात् पूर्वार्द्धे खरौ कुर्व्वन्ति पुरोऽक्ष मेवान्यं पश्चादक्ष मन्यम् * ॥ १५ ॥

अथ यत्र पूर्वया द्वारा । वसतीवरीः प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति दक्षिणत' पात्राण्यभ्यवहरन्ति पुरो ऽक्षमेव प्रत्यङासीनो † ऽध्वर्युः सोमग्रहान् गृह्णाति पश्चादक्षं प्राङासीनो ‡ नेष्टा सुराग्रहांस्सोमग्रह मेवाध्वर्युर्गृह्णाति सुराग्रह नेष्टा सोमग्रह मेवाध्वर्युर्गृह्णाति सुरा नेष्टैव मेवैनाम् व्यत्यासं गृह्णीतः ॥ १६ ॥

न प्रत्यङ्ङ् सह मध्वर्युः । सोमग्रह मतिहरति न प्राङ्ङ् सह नेष्टा सुराग्रहं नेज्ज्योतिश्च तमश्च संपृक्तजाविति § ॥ १७ ॥

उपर्युपर्य्येवाक्ष मध्वर्युः । सोमग्रहं धारयत्यधोऽधोऽक्ष नेष्टा सुराग्रहम् सम्पृचौ स्थः सं मा भद्रेण पृङ्क्तमिति नेत्पाप मिति प्रयाविति तौ पुनर्व्विहरतो व्विपृचौ स्थो वि मा पाप्मना पृङ्क्त

* 'अक्षम्'—इति क, ख । † प्रत्यङ्ङासीनो—इति ग घ ।
‡ 'प्राङ्ङासीनो—इति ग घ । § सम्पृणजाविति'—इति ख ।

मिति तद्यथेषीकां मुञ्जाद्विवृहेदेवमेनᳬ सर्व्वस्मात्पाप्मनो विवृहन्तस्मिन्न तावच्च नैनो भवति यावत्तृणाग्रायं तौ सादयतः * ॥ १८ ॥

अथाध्वर्युः । हिरण्मयपात्रेण मधुग्रहं गृह्णाति तं मध्ये सोमग्रहाणाᳬ सादयत्यथोपांश्वं गृह्णात्यथ ध्रुव मथैतान्त्सोमग्रहानुत्तमे स्तोत्र ऋत्विजां चमसेषु व्यवनीय जुह्वति तान् भक्षयन्त्यथ माध्यन्दिने सवने मधुग्रहञ्च सुराग्रहाणां चोद्यते तस्मातः ॥ १९ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् [१.२.] ॥

एवं विहिते वाजपेये ग्रहविशेषा द्वितीयब्राह्मणेऽभिधीयन्ते, प्राकृतास्त्वतिदिश्यन्ते । तत्र तावदंशुग्रहं विधत्ते— "अंशुं गृह्णातीति । 'अंशु'' सोमग्रहं सोमद्रव्येण गृह्णीयात् । 'सर्वत्वाय' स्वविकृतयुक्तन्यूनतादोषपरिहारेण यज्ञस्य समग्रत्वेत्यर्थः । अंश्वदाभ्ययोरप्राकृतत्वेन चोदकादप्राप्तयोरिह विधानं युक्तम् । अत एवापस्तम्बः— "आग्रयणवतादाभ्यो गृहीतव्यौ अंशुपत्नीग्रहौ न सर्वत्र गृहीतव्यौ वाजपेये राजसूये सत्रे सर्ववेदसे" —इति † । अथ प्रकृतिगतानुपांश्वन्तर्यामादीनतिदिशति—

* 'सादयतः'—इति ग, घ ।

† आप० श्रौ० सू० १२ ८ १२, १३ ।

"यत्र दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्"—इति।

तत्र नाकशब्दं व्याचष्टे— "एष एव देवलोक इति ॥ ६ ॥

"अपां रस मिति। चतुर्थयजुर्मन्त्रस्यायमर्थः *,— 'अपां' 'रसं' सारभूतम्; उदकस्यैव सोमरसत्वेन परिणतत्वात्। 'उद्वयसम्' उत्कृष्टम्। "वी गति-प्रजनन-कान्त्यसन-खादनेषु †"—इत्यस्मादसुनि रूपम्। यद्वा, वय इत्यन्ननाम ‡, उद्गतं वयं जीवनं वा यस्मिन्। सोमरसोऽमृतो जीवनहेतुश्च; "अपाम सोमममृता अभूम §"—इत्युक्तत्वात्। 'सूर्ये' 'सन्तं' विद्यमानं 'समाहितं' तत्रैव सम्यगाहितम्; रसस्योदकादिरूपस्य आदित्ये एवावस्थानात्। 'अपां' 'रसस्य' सारभूतस्य महीरूपेण परिणतस्य सोमस्य 'यो रसः' दशापवित्रात्स्रवमाणः, तम्। आपः। 'वः' युष्माकं सम्बन्धिनम् 'उत्तमम्' उत्कृष्टं स्वरसं 'गृह्णाति' ‖। "उपयामेत्यादि। व्याख्यातम्। मन्त्रं व्याचष्टे— "एष वा अपां रस इति। 'योऽयं पवते' दशापवित्रात् स्रवति, 'सः' अपां रसः। "एषः सूर्ये इति। 'एषः' खलु सोमरसः उदकात्मना पूर्वं 'सूर्ये' 'समाहितः' सम्यगवस्थितः, इदानीं 'सूर्यात्' सूर्यात्मकाद् दशापवित्राद् 'पवते' स्रवति ॥ ७ ॥

"ग्रहा ऊर्जाहुतय इति। पञ्चमयजुर्मन्त्रस्यायमर्थः ¶;— हे ग्रहाः! गृह्यन्त इति 'ग्रहाः' सोमाः। 'ऊर्जाहुतयः' ऊर्जं अन्नं सवनीयपुरोडाशं अभिलक्ष्य हूयमानाः; यद्वा,

* वा० सं० ९.३.१।
† धातु० प० ३९ धा०।
‡ निघ० २.७.७।
§ ऋ० सं० ८.४८.३।
‖ 'गृह्णामि'—इति क, ख।
¶ वा० सं० ९.४.१।

यज्ञाहुतिमूला यूयम्। 'विप्राय' मेधाविने, स्वापेक्षितफलपरि-पूरकाय वा यजमानाय। 'मति' विवक्षिता बुद्धिं 'व्यन्त.' पश्यन्तोऽनुजानन्तो भवतेति शेष। 'शिशिप्रियाणा' "शिप्रे हनू नासिके वा"—इति * यास्कवचनम्; इह हि हनू गृह्येते, तत्र भवं कर्म शिप्रियम्, विगतं शिप्रियं येषां ते। यत्र हनुव्यापाराभावात् शोभनाभिपतनमक्षता इत्यर्थ। यद्वा, विवि धानि शिप्रियाणि हनुस्थानीयानि पात्राणि, तत्पर्यन्तं, तेषा 'व.' युष्माकं सम्बन्धिनम् 'इयम्' एतम् 'ऊर्जम्' बलप्रद सोम रसं 'समयमम्' "ऊर्ध्वोर्मे †" समयच्छम्, सङ्गृह्णामि। शिष्ट पूर्ववत्। ऊर्क् शब्दसूचित मर्थ माह—"ऊर्ग् वै रस इति॥ ८॥

यद्गता पञ्चसङ्ख्या प्रशसति— "तान् वा एतानिति। वाज पेययागस्य स्वरूपावासिसाधनत्वात् प्राजापत्येय संवत्सरात्मतया पञ्चर्तुरूपत्वात् ग्रहाणा पञ्च सङ्ख्या युक्तेत्यर्थ ‡॥ ९॥

ग्रहाणामपि सङ्ख्यापि विधत्ते— "षय सप्तदशेति §। गृह्यन्त इति ग्रहा सोमा, सोमाय ते ग्रहाश्चेति विग्रह', सोमस्य वा ग्रहा। उभयेषां ग्रहाणा द्रव्यद्वय मनूद्य प्रशसति— "प्रजापतेर्वा इति। 'मस्यतौ' पात्रे इत्यर्थ। 'सत्य श्री ज्योति' सोम' सत्य श्री ज्योतिरात्मकत्व सोमस्य, इतरस्यास्तु 'अनृतं पाप्मा तम' अनृतपापतमोरूपत्वम्। पाप्मेति दारिद्र्यम्॥ १०॥

उत्तग्रहमङ्ख्या प्राजापत्यात्मकत्वेन स्तौति— "स यत् सप्त

---

* निरु० ६ ३ १।　　† मा० ८ २ ६२ सू० वा० १।

‡ 'अतिपात्रवद्धोम.—इति का० श्रौ० सू० १४.२ १। 'पञ्चानां मैन्द्राणाम्'—इति तत्र वृत्ति.।

§ 'सप्तदशापरान्'—इति का० श्रौ० सू० १४ २ ३ 'सोमग्रहान्'।

दशेति। प्रजापतौ सप्तदशत्वम् "आश्रावय"–इत्यादि सप्तदशाक्षरमन्त्रात्मकत्वादित्यवगन्तव्यम् *। स एव यज्ञः, आश्रावयेत्यादिमन्त्राभावे यज्ञस्यासिद्धेः। श्रूयते च "प्रजापतिर्वै यज्ञः" –इति †। अत्र 'स यज्ञः' 'यावान्' यत्परिमाणः, कियत्सङ्ख्याकावयव इत्यर्थः। 'यावती' 'मात्रा' परिमितिः, 'तावतैव' सप्तदशसोमग्रहवता यज्ञेन 'सर्वं' कृत्स्नं यज्ञात्मकस्य प्रजापतेः सत्यादिकं यष्टा अर्जितवान् भवतीति ॥ ११ ॥

"अथ यत् सप्तदशेति। यथा सोमग्रहवाक्ये योजितम्, एवं नैव सुराग्रहवाक्ये योज्यम्, एतावांस्तु विशेषः — तत्र सत्यादेः लभ्यप्राप्तिः, अत्रानृतादेर्निरासाभ्यय इति ‡ ॥ १२ ॥

द्विविधग्रहाणां सङ्ख्यां मिलित्वा स्तौति — "त उभये चतुस्त्रिंशदिति। अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रो वषट्कारश्चेति 'त्रयस्त्रिंशत्' देवताः, 'प्रजापतिः' तु 'चतुस्त्रिंशः' इति ॥ १३ ॥

प्राकृतं सोमक्रयणविधिं मनुष्य परिस्रुत्क्रयणं विधत्ते — "अथ यत्रेति। 'यत्र' प्रदेशे 'राजानं' सोमलतां क्रीणीयात् इत्यर्थः, तस्य दक्षिणे प्रतिवेशे स्थाने 'केशवात्' केशा यस्य सन्तीति स तथोक्तः। 'केशाद्वोऽन्यतरस्याम्"–इति §

---

* स एष यज्ञः — "आश्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः" –इति तै० सं० १ ६ ११ १

† पुरस्तात् ( श० ब्रा० १ १ १ १३ ) द्रष्टव्यम्।

‡ नैनाञ्च तावत सौरान् इति का० श्रौ० सू० १५ २ ८।

§ पा० सू० ५ २ १०९।

यप्रत्यय । तस्मात् 'पुरुषात्' सीसद्रव्येण 'परिस्रुतं' क्रीणी-यात् । लोके हि सुरा तत्साधनभूते * परिपक्वद्रव्ये क्रियते, अत्र तु सुरासाधनाय † पर्याप्तपरिपाकैः शष्पैर्निष्पन्नो रसः परिस्रुदित्युच्यते । कात्यायनेन तस्याः साधनद्रव्याणां वा क्रयण-विकल्पेनोक्तम्— "सोमात् क्रीयमाणात् दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात्तद्द्रव्याणां वा"—इति ‡ । तैत्तिरीये तु द्रव्यक्रय एवोक्तः — "सीसेन क्लीबाच्छष्पाणि क्रीणाति"—इति § ॥

"न वा एष स्त्री"—इत्यादिवाक्यस्य अर्थः,— सीसं केशव-परिस्रुताम् ‖ अन्तरालवर्त्तित्व साम्यम् । 'यत्' यतः, परि-स्रुत् क्लेता 'पुमान्' पुरुषत्ववान्, शष्पयुक्त इत्यर्थः, 'तेन' कार-णेन 'स्त्री न' भवति, यस्मात् 'केशवः' केशयुक्तः, 'तेन' केशवाद्गुणवत्त्वेन 'पुमान्' च 'न' भवति, केशवाद्रूप्यं तु स्त्री-साधनम्, अत केशवत्त्वेन ¶ स्त्रिया अधिकः, पुरुषात् न्यूनः ; सीसं अयसोऽधिकं, हिरण्यात् न्यूनम् । परिस्रुच सा रसः **

---

* 'लोके हि सुरा तत्साधनद्रव्ये'—इति क, ख।

† 'सुरासाधनीय'—इति च।

‡ का० श्रौ० सू० १४ १ १४, १५।

§ तै० ब्रा० १ ८ ५ ३। "न वा एतत्स्त्री यत सीसम्, न स्त्री न पुमान् यत क्लीबः, न सोमो न सुरा यत परिस्रुत्" —इति च तत्र तदुत्तरम्।

‖ '०परिश्रिताम्'—इति च।

¶ 'क्लीबपुरुष'—इति क।

** 'परिस्रुत्साधन्या'—इति च, छ, 'परिस्रुत्यसाधनी'—इति च, ग पुस्तके तु नास्त्येव।

धारा न भवतीति ततोऽधिका, सोमवत्पूतत्वाभावात् ततो न्यूना। तस्माद् यथोक्त मेव कर्त्तव्य मिति स्थितम् ॥ १४ ॥

अथ द्वितीय मेव* यथाप्या यथासादन माभूदिति प्रदेश-विशेष विधत्ते— 'अथ पूर्वेद्युर्द्वौ खराविति। 'पुरोऽक्षम्' शकटस्याधस्तात् अक्षस्य पुरोभागे एकम्, 'पश्चादक्षम्' अक्षस्य पश्चाद्भागेऽपरम्, इति 'द्वौ खरौ' 'पूर्वेद्यु' पूर्वदिवसे कुर्य्यात् †। तत्र कारण माह— "नेत् सोमपदानिति। "नेद् सादयामीति। सह सादन मयुक्त मित्यभिप्रायेण पृथक्-सादनार्थं खरद्वय कर्त्तव्य मित्यर्थः। 'नेत्'-इति परिभये ‡ ॥ १५ ॥

अस्तीवरीभ्यां हविर्धानप्रपादन मनूद्य परिस्रुत्प्रपादने कञ्चिद् विशेष विधत्ते— "अथ यन्तेति। 'अपरया' पश्चिमया 'द्वारा' 'नेष्टा' नाम ऋत्विक्, पत्नीसंयाजे वर्त्तते § 'प्रपादयति' प्रवेशयेदित्यर्थः। "दक्षिणत इति। हविर्धानस्य दक्षिणतो द्वारं कृत्वा तेन सोमपदपात्राणि सुराग्रहपात्राणि च प्रवेशयमीत्यर्थः ‖। सूत्रितं हि— "दक्षिणत सन्धिं करोति, यूपवेष्टन समदशभिर्वंशैर्युदगयन वा परिश्रयणकाले, •—• सन्धिना पात्राण्याहृत्य"—इति ¶।

---

* 'कर्त्तव्य मेव—इति च।

† का० श्रौ० १४ १ १८ सू० द्रष्टव्यम्।

‡ 'यथापि नेत्येष इत्येतेन सम्प्रयुज्यते परिभये'—इति निरु० १ ३ ६।

§ तथाचाश्वलायन — "चत्वारस्त्रिपुरुषा तस्योत्तरे अथ — होता •—• अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता"—इति ४ १ ६।

‖ प्रवेशयन्तीत्यर्थं'—इति च क।

¶ का० श्रौ० सू० १४ १ १९—२१।

वर्गद्वयग्रहणे ऋत्विजोर्नियमं दर्शयति— "पुरोऽध्व मित्था दिना। विभागेन धारणाय व्यत्यासं विधत्ते— "सोमग्रह मेवा ध्वर्युरिति। 'व्यत्यासम्' व्यत्यस्य व्यत्यस्येत्यर्थः। अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति, नेष्टा प्रथमं सुराग्रहं गृह्णीयात् *, ततो द्वितीये द्वितीय मिति सोऽयं व्यत्यासः † ॥ १६ ॥

ग्रहाणा मन्यप्रदेशप्रापणं निषेधति— "न प्रत्यङ् मध्य मिति। 'प्रत्यङ् मध्यम्' मध्यस्य पश्चाद् भाग 'प्रति' 'सोमग्रहम्' 'अध्वर्युः' 'न प्रतिहरति' नातिहरेत्, नातिक्रामयेत्। एवं 'नेष्टा' अपि 'सुराग्रह' 'प्राङ् मध्यम्' शकटाक्षस्य पुरोदेशं नाति हरेत्। उभयत्र कारण माह— "नेज्ज्योतिरिति। यदि ग्रहाणा मन्योन्यदेशातिक्रमणं स्यात्, तर्हि तेजस्तिमिरयो सङ्गः स्यात्, स मा भूदिति व्यतिहरणनिषेधः। सोमस्य ज्योती रूपत्वं सुरायास्तु तमोरूपत्वं च प्रागावेदितम् ‡ ॥ १७ ॥

उभयग्रहधारणे कश्चिद् विशेष विधत्ते— "उपर्युपर्यक्षं मध्वर्युरिति। अक्षस्य सविकष्टोपरिभाग एव सोमग्रहस्य, सन्निकृष्टाधःप्रदेश एव सुराग्रहस्य §। "उपर्यधस सामीप्ये"—इति द्विवचनम् ‖। धारणमन्त्र विधत्ते— "सम्पृचौ स्थ इति ¶। तस्यार्थः,— वर्गद्वयमध्ये एकैकस्योपप्रदेशे धारणात् उभयो

* का० श्रौ० १४ ९ ४ सू० द्रष्टव्यम् ।
† का० श्रौ० सू० १४ २ ५ ।
‡ का० श्रौ० सू० १४ २ ६ ।
§ 'सुराग्रह'—इति च छ । मूलस्य प्रतीकग्रहणमिदं स्यात ।
‖ पा० सू० ८ १ ७ ।
¶ वा० सं० ६, ४ २ ।

द्वित्वेन मन्त्रे 'सम्पृचौ'-इति, 'पृङ्क्तम्'-इति च द्विवचनं युक्तम्। हे सोमसुरापयसी ? 'सम्पृचौ' सम्पृक्तौ 'स्थ'। यतो युवां सम्पृक्तावभवतम्, अतो 'मा' माम् अपि 'भद्रेण' प्रजापतिना "प्रजा वै भद्रम्, पशवो भद्रम्"-इति * श्रुतेः। 'पृङ्क्तं' संयोजयत मिति। कात्यायनस्तु शाखान्तरानुसारेण भाष्याकारस्य मन्त्रयोः प्रतीकं बहुवचनत्वेनोदाजहार— "यथाजनितिक्रमण्य ग्रहाप्याम्, उपयुंपर्यंन अध्वर्युर्योरयाथेयो नेष्टा सम्पृचस्थेति, विपृचस्थेत्याहरते"-इति †।

प्रयोजनकथनमुखेन मन्त्रस्य तात्पर्यं माह— "नेत् पाप मिति मन्यावेति। यदुभयोर्यजमानयोर्धारणसमये सम्पर्कं याचक मन्त्रे 'भद्रेण पृङ्क्त मिति' यत् प्रार्थनम्, तत् सद्रापन्न पाप मित्येव नेव मन्यावेत्यभिप्रायेणेत्यर्थः।

अथ पश्चाद्देशात् तयो रुत्तरदेशेऽवस्थापन समन्त्रक विधत्ते— "तौ पुनर्विहरत इति ‡। हे यही ! 'विपृचौ' विपृक्तौ 'स्थ'। यत एवम्, अतो ममापि प्रार्थना वियोजन मिति।

मन्त्रस्योत्तरभाग व्याचष्टे— "तथ्येषीष्टा मिति। यथा 'सुरायाः' सुराद्रव्यात् पयोवाम्' भाण्डवति' अथ 'विहरेत' पृथक् कुर्यात्, 'एवम्' 'एन' यजमान 'सर्वस्मात्' 'पाप्मन' पापात् 'विहरत' हे यही वायव्ये (१)। एतदेवाह— "तद्विय

* "प्रजा भद्रेण एकतोऽभाद् प्रजा वै भद्रम् प्रजाभ्यामेवैनं संसृजति"—इति तै० ब्रा० १ ३ ३ ६।

† का० श्रौ० सू० १४ २ ६ ७, ८।

‡ सुराकुम्भ—इति च, छ।

§ का० श्रौ० सू० १४ २ ८।

तावद्वनेति। 'वत्'-शब्दोऽव्ययं *। यावत् कृत्वायं तावत्प्राय' स्वस्य मपि 'एन.' पापं 'तस्मिन्' 'न' भवति ॥ १९ ॥

अथ मधुग्रहग्रहणं विधत्ते— "अथाध्वर्युरिति। तस्य सादन-प्रदेशं विधत्ते— "तं मध्य इति। अत्र कात्यायनः— "हिर-ण्मयेन मधुग्रह गृहीत्वा खरमध्ये सादयति"–इति †।

अथ प्राकृतानुक्थ्यग्रहपदौ दर्शयति— "अथोक्थ्य मित्यादि.। सूत्रकृता अनयोर्योदकादेव ग्रहणं क्रिय मिति सूचितम्— "उक्थ्यादि"–इति ‡।

पृथग्ग्रहणप्रसङ्गात् त्रिविधग्रहाणां होमकालं भक्षणं च विधत्ते— "अथैतानसोमग्रहानिति। तान् प्रातःसवने गृही-तान् सोमग्रहान् 'उत्तमे स्तोत्रे' तृतीयसवने बृहत्स्तोत्रे वाज-पेयसत्रायणनिमित्ते कृते सति 'ऋत्विजां चमसेषु' 'अवनीय' अवनयनं कृत्वा जुहुयुर्भक्षयेयुश्च।

तत्प्रसङ्गात् सुराग्रहाणां मधुग्रहस्य च माध्यन्दिनसवनमध्ये विनियोगो भविष्यतीत्याह— "अथ माध्यन्दिन इति। 'उद्यते' –इति, "वद व्यक्तायां वाचि" §, कर्मणि यकि सम्प्रसारणम्। एतेषां होमात्प्रागेव तद्विनियोगप्रकारोऽपि "अथाध्वर्युर् यज-मानश्च पूर्वया द्वारा मधुग्रह मादाय निष्क्रामतः"–इत्यारभ्य, "अथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति"–इत्यादिना।

* अम० को० ३ ४ ३।
† का० श्रौ० सू० १४ २ ५।
‡ का० श्रौ० सू० १४ २ १०।
§ धा० पा० १००८ धा०।
‖ प्रथमे आश्रये २९ कण्डी द्रष्टव्या।

अग्निचैत्याध्याये वक्ष्यत इत्यर्थः । "तस्मात् इति । 'अत' सोम-यज्ञहोमभक्षणप्रतिपादनानन्तरं 'तस्य' आम्नातस्य सुराग्रहविनि-योगप्रतिपादकवाक्यस्य पाठानुसन्धानं कार्य्यमित्यर्थः ॥ १८ ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् )

आग्नेयमग्निष्टोम ऽआलभते । अग्निर्वा ऽअग्निष्टोमो ऽग्निष्टोम * मेवैतेनोज्जयत्यैन्द्राग्नमुक्थेभ्य आलभत ऽऐन्द्राग्नानि वा ऽउक्थान्युक्थान्येवैतेनोज्जयत्यैन्द्रꣳ षोडशिन ऽआलभत ऽइन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति ॥ १ ॥

सारस्वतꣳ सप्तदशाय स्तोत्रायालभते । तदे-तदनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वा ऽएष उज्जयति यो वाजपेयेन यजते

---

* 'अग्निष्टोम'—इति ग. च.।

संवत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रि मुख्यति तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते * ॥ २ ॥

अथ मरुद्भ्य उज्जेपेभ्यः। व्यशां पृश्निमालभत इयं वै व्यशा पृश्निर्यदिद् मस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं व्यशा पृश्निरन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयः ह वै नामैतद्यद्वाजपेयं विशो वै मरुतोऽन्नं † वै विश उज्जेपेभ्य इत्युज्जित्या एव दुर्व्वेदे उज्जेपवत्यौ याज्यानुवाक्ये यद्युज्जेपवत्यौ न विन्देदपि ये एव के च मारुत्यौ स्यातां दुर्व्वेदो एष व्यशा पृश्निर्यदि व्यशां पृश्निं न विन्देदपि येव का च व्यशा स्यात् ॥ ३ ॥

तद्वा आहुत ‡। यत्र होता माहेन्द्रं ग्रह मनुशंसति तदेवं वपया प्रचरेयुरैव वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्य मेव स्तोत्रं निष्केवल्यः शस्त्र मिन्द्रो

* क्रियते'—इति ग, घ।

† 'अन्नं'—इति ग, घ।  ‡ 'आहत'—इति ग, घ।

वै यजमानस्तन्मध्यत एवैतद्यजमाने वीर्यं दधाति तस्मादत्रा अत्र वपया प्रचरेयुः ॥ ४ ॥

द्वैधावदानानि श्रपयन्ति । ततो ऽर्वाणां जुह्वा मुपस्तीर्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्य-नक्तावदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभि-घारयति न प्रत्यनक्तावदानानि तद्यदर्वाणां द्वि-र्द्विरवद्यति तथैषा कारस्ना भवत्यथ यदेतैः प्रच-रति तेन दैवीं विश मुञ्जयत्यथयानि मानुष्यै विश उउपहरति तेनो मानुषीं विश मुञ्ज-यति ॥ ५ ॥

तदु तथा न कुर्यात् । छलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं करोति तस्माद्यद्येवेतरेषां पशूनां वपाभिः प्रच-रन्ति तदेवैतस्यै वपया प्रचरेयुरेकधावदानानि श्रप-यन्ति * न मानुष्यै विश ऽउपहरति † ॥ ६ ॥

अथ ‡ सप्तदश प्राजापत्यान् पशूनालभते । ते वै

* 'श्रपयन्ति'—इति च दा०-टीप-इदम् ।
† 'उपहरति'—इति ख, 'उपहरति'—इति ग, घ ।
‡ 'अथ'—इति क ।

सर्वे तूपरा भवन्ति सर्वे श्यामाः सर्वे मुष्कराः प्रजापतिं वा ऽएष उज्जयति यो वाजपेयेन यजते ऽन्नं वै प्रजापतिः पशुर्वा ऽअन्नं तत् प्रजापतिं मुज्जयति सोमो वै प्रजापतिः पशुर्वै प्रत्यक्षꣳ सोमस्तत्प्रत्यक्षं प्रजापतिं मुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजा-मुज्जयति ॥ ७ ॥

ते वै सर्वे * तूपरा भवन्ति। पुरुषो वै प्रजापतेर्नेदिष्ठꣳ सो ऽयं तूपरो † ऽविषाणस्तूपरो वा ऽअविषाणः प्रजापतिः प्राजापत्या एते तस्मात् सर्वे तूपरा भवन्ति ॥ ८ ॥

सर्वे श्यामाः। द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्राजापत्या एते तस्मात् सर्वे श्यामा भवन्ति ॥ ९ ॥

सर्वे मुष्कराः। प्रजननं वै मुष्करः प्रजननं प्रजापतिः प्राजापत्या एते तस्मात् सर्वे

* 'सर्वे'—इति ख, घ।

† ग्रार्द्धचन्द्रचिह्न मध्य पुस्तकाभ्यां सम्पन्न।

मुष्करा भवन्ति दुर्व्विदा एवᳪ समृद्धाः पशवो यद्वे-
वᳪ समृद्धान् न विन्देदपि कतिपया एवैवᳪ समृद्धाः
स्युः सर्वं मु ह्येवेदं प्रजापतिः ॥ १० ॥

तद्धैके । व्वाच उत्तम मालभन्ते यदि वै
प्रजापतेः पर मस्ति व्वागेव तदेतद्वाच मुज्जयाम
इति व्वदन्तस्तदु तथा न कुर्यात् सर्वं वा इदं
प्रजापतिर्यदिमे लोका यदिदं किं च सा यदे-
वैषु लोकेषु व्वाग्वदति तद्वाच मुज्जयति तस्माद्
तन्नाद्रियेत ॥ ११ ॥

नैषा माहत् * । यत्र मैत्राव्वरुणो व्वामदेव्य
मनुशᳪसति तदेषां व्वपाभिः प्रचरेयुः प्रज-
ननं वै व्वामदेव्यं प्रजननं प्रजापतिः प्राजापत्या
एते तस्मादेषा मत्र व्वपाभिः प्रचरेयुः † ॥ १२ ॥

अथैष्टा अनुयाजा भवन्ति ‡ । अव्यूढे स्रुचा-
वथैषाᳪ हविर्भिः प्रचरन्ति सोऽन्तोऽन्तो वै
प्रजापतिरन्तत एवैतत् प्रजापति मुज्जयत्यथ

* 'माहत'—इति अ, च ।

† 'तस्मादेषां व्वपाभिरत्र प्रचरेयुः'—इति अ, च ।

‡ 'भवन्ति'—इति क ।

यत् पुरा प्रचरेद्यथा य मध्वान मेष्यन्त्स्यात्तं गत्वा स क्व ततः स्यादेवं तत्तस्मादेषा मत्र हविर्भिः प्रचरन्ति ॥ १३ ॥

तदु तथा न कुर्यात्। ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं करोति तस्माद्यथैवेतरेषां पशूनां वपाभिः प्रचरन्ति तद्वैवैतेषां वपाभिः प्रचरेयुर्यथैवेतरेषां पशूनाᳲ हविर्भिः प्रचरन्ति तद्वैवैतेषाᳲ हविषा प्रचरेयुरेषानुवाक्या भवत्येषा * याज्यैषा देवत्या हि प्रजापतय ऽइन्द्रस्यपाᳲशूकत्वा छागानाᳲ हविषो ऽनुब्रूहीति प्रजापतय ऽइन्द्रस्येषोपाᳲशूक्त्वा † छागानाᳲ हविः प्रस्थितं प्रेष्येति वषट्कृते जुहोति ॥ १४ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१.३.] ॥

तृतीये पशुतन्त्र मभिधीयते। तत्र तावत् वाजपेयस्य अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थात्मकचतुष्कसद्भावेन सर्वक्रत्ववरोधकत्व मस्तीति वैदिकप्रसिद्धिः ‡ तत्तत्कल्पसाधारणपशुसद्भावे सत्यु-

---

* 'एका'—इत्येव ग, घ।

† 'इन्द्रपाᳲशूक्ता'—इति ग, घ।

‡ 'वैदिकप्रसिद्धिः'—इति घ।

पपद्यते, नान्यथा। तथा च तैत्तिरीयकम्— "ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र, अथ कस्माद् वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति, पशुभिरिति ब्रूयात्"–इति *। यज्ञशब्देन यजतिचोदिता वषट्कारप्रदाना अङ्गप्रधानभूता यागा अभिधीयन्ते। तत्समूहरूप एकफल साधनतायापूर्वेवान् कर्मविशेष क्रतुरित्यर्थं †।

अतस्तानग्निष्टोमादिमतानाग्नेयादिसवनीयपशून् विधत्ते— "आग्नेय मग्निष्टोम इति। तत्राग्निष्टोमस्य द्वादश स्तोत्र शस्त्राणि, उक्थ्यस्य उक्थ्यत्रयेण पञ्चदश, षोडशिन षोडशि स्तोत्रेण सह षोडश, वाजपेयस्य बृहत्स्तोत्रेण सह सप्तदश, अतिरात्रपर्यायत्रयेण ‡ सह षोडशिपदे एकोनत्रिंशत्, अन्यदा अष्टाविंशति पशूनाम्।

तत्तत्क्रतुसाधारण्य द्योतयितु अग्निष्टोमादिपदाभिधानम्। अनेन स्तूयते अग्निरिति अग्निष्टोमो नाम साम, अस्मिन् विषयभूते 'आग्नेय मालभते'। एतेन पशुना अस्मिन् वाजपेये अग्निष्टोमसस्य क्रतु मेवानुष्ठितवान् भवतीत्यर्थं। एव मुत्तरत्रापि योज्यम्। 'उक्थ्येभ्य' तृतीयसवने स्तूयमानेभ्योऽन्येभ्य स्त्रिभ्य § उक्थस्तोत्रेभ्य इन्द्रादिदेवताक ‖ पशुरालभनीय। षोडशिने' षोडशिस्तोत्राय 'ऐन्द्र' पशुम् आलभेत ¶ ॥ १ ॥

"सारस्वत मिति। 'सप्तदशाय' सप्तदशसङ्ख्यापूरकाय बृहत्स्तोत्राय 'सारस्वतं' सरस्वतीदेवताकं* पशु मालभेत। अन्तिम मिदं बृहत्स्तोत्रं वाजपेयस्यासाधारणं लिङ्गम्; श्रूयते हि— "सारस्वा बृहत्स्तोत्रम्"—इति†। अयं वाजपेये अतिरात्रान्तर्भाव इत्याशङ्क्य, अनेन सारस्वतालम्भेनातिरात्रस्यान्तर्भावं दर्शयति— "तदेतदिति। 'अनतिरात्रे, सति प्रकृते वाजपेये यज्ञे अतिरात्रान्तर्भावविधुरे 'तदेतत्' सारस्वतालम्भनं 'रात्रेः' रात्रिपर्यायस्य 'रूपं क्रियते'‡; तेन तदन्तर्भावोऽपि सिद्ध इत्यर्थः। एतेषा माग्नेयादीना मग्निष्टोमादिसंस्थाचतुष्टयसाधनत्वं§ सूत्रे दर्शितम्— "आग्नेयोऽग्निष्टोमे सवनीयः पशुः, ऐन्द्राग्नश्चोक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी"—इति॥।

नन्वतिरात्रान्तर्भावाय रात्रिसामान्यपि कस्मान्न प्रयोक्ष्यन्ते इत्यत आह— "प्रजापति मा एव इति। प्रजापतेस्तु संवत्सरात्मकता सङ्ख्यासाम्यात्; द्वादशमासाः पञ्चर्तव इति संवत्सरस्य सप्तदशत्वम्, प्रजापतेरप्याश्रावयेत्यादिसप्तदशाक्षरमन्त्रात्मकत्वात्¶। अतः सप्तदशेनैव बृहत्स्तोत्रेण सप्तदशात्मकप्रजापतेरुज्जितिः सिद्धेति प्रयोजनाभावात् रात्रिसामानि न प्रयो-

* 'सरस्वतीदेवत्य'—इति च।

† तै० ब्रा० १. ३ ४ २।

‡ 'रात्रेः रात्रिपर्यायस्येत्यर्थः', तद्रूपं क्रियते, अतिरात्रस्यासाधारणं रूपं क्रियते'—इति च।

§ 'अग्निष्टोमसंस्थाचतुष्टयसाधारणत्वं'—इति च।

॥ 'अतिरात्रपशूपालम्भो'—इति का० श्रौ० सू० १४.२.११ क।

¶ पृ० २४ टीप्पनी '*' द्रष्टव्या।

त्वानि। तस्मादुक्तविध एकातिरात्रान्तर्भावः साधीयानित्याह— “तदेतेन सारस्वतेनेति ॥ २ ॥

अथास्य यज्ञस्यासाधारणपशुं विधत्ते— “अथ मरुद्भ्य इति। उज्जेषगुणकेभ्यो मरुद्भ्यो देवेभ्यः ‘पृश्निं’ नानावर्णां ‘वशां’ वन्ध्याम् आलभेत। एतं पशुं भूम्यात्मत्वेन स्तौति— “इयं वै वशेति। ‘इयं’ भूमिः, ‘वशा पृश्निः’। भूमेः पृश्नित्वमुपपादयति— ‘यदिदम्’ ‘अस्याः’ भूमौ ‘मूलि’ मूलवत् स्थावरम्, ‘अमूलं’ पश्वादिकम्; एव मुभयम् ‘अन्नाद्यम्’ आद्यम् अदनीयं सर्वं ‘प्रतिष्ठितम्’, ‘तेन’ अस्याः पृश्नित्वम्। अस्य पशोर्मरुद्देवतात्वं प्रशंसति— “अन्नं वा एष इति। ‘वाजपेयम् इति यत्, तत् अन्नपेयम्’। वाजशब्दोऽन्नवाची। अन्नम् अन्नविकारभूतं सुराद्रव्यं पीयते अस्मिन्निति हि व्युत्पत्तिः। ‘मरुतः’ खलु ‘विशः’ प्रजाः; “मरुतो वै देवानां विशः”— इति श्रुतेः*। अथ तेनावता मरुतां अन्नरूपत्वम्? तदाह— “अन्नं वै विश इति। ‘अन्नं’ ‘वै’ खलु ‘विशः’ प्रजाः; अन्नोपजीवनात् तच्छब्देन व्यपदिश्यन्ते। तेषां उज्जेषविशेषणस्य प्रयोजनमाह— “उज्जेषेभ्य इति।

तत्र वशायागेऽपि उज्जेषपदवत्यौ याज्यापुरोऽनुवाक्ये विधत्ते— “दुर्वेदे उज्जेषवत्याविति। ‘दुर्वेदे’ लब्धुं अशक्ये, अतएव अप्राप्ये इत्यर्थः। तयोरसुलभत्वं मत्वा अथ सैव श्रुतिः पक्षान्तरमाह— “यद्युज्जेषवत्यावित्यादि। ‘मारुत्यौ’ मरुद्देवत्ये भवेतां यद्यपि पृश्निशब्दसाम्नाते पक्षान्तरं दर्शयति— “दुर्वेदौ

* तै० सं० २. २. ५. ७। “विड् वै मरुतः”—इति, तै० ब्रा० २. ७. २९। “विशो वै मरुतः”—इति श० ब्रा० १. ६. २. १३।

एवेत्यादिना। दुर्वेदो खलु मध्यकाः* खलु इति निपातेन सह प्रयोगः। अत एव कात्यायनः— "वशां पृश्निं मरुद्भ्य उक्षेभ्यस्तदभावे पृश्निम्"—इति† ॥ २ ॥

मारुतीवशाप्रचरणं प्राकृतानाम् आग्नेयैन्द्राग्नप्रभृतीनां वपाप्रचरणेन सह विधास्यति। तत्र तावदेषा अत्र सुपश्यति— "तस्या आहुत यत होतेति। 'तस्याः' मारुत्या वशायाः 'आहुत' तम्यम्, वक्ष्यम इति शेषः। यत होता माहेन्द्रं ग्रहम् 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरत्वेन व्याख्येयम्; "माहेन्द्रान्ते वशावपाचरणम्"—इति‡ कात्यायनेन सूत्रितत्वात्। 'तत्' तदा 'अस्यै' अस्या मारुत्याः 'वपया' 'प्रचरेयुः'। प्रचरत्य माहेन्द्र इति यत् 'एष वै इन्द्रस्य' असाधारणो 'ग्रहः'; ग्रहणमन्त्रे केवलेन्द्रस्यैव देवतात्वेन प्रतिपादनात्। निष्केवल केवल मिन्द्रस्य मिति 'निष्केवल्यो ग्रह'। माध्यन्दिने सवने हि माहेन्द्रग्रहग्रहणम्; तच सवन मिन्द्रस्येति नियतम्। श्रूयते हि— "प्रातः सुत मपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते"—इति§।

॥ केवलं माहेन्द्रग्रह एव निष्केवल्यः, अपि तु तद्ग्रहणानन्तरं प्रयोक्ष्ये सुतशस्त्रे अपि केवलेन्द्रदेवताकत्वात् इन्द्रस्यासाधारण मित्यत आह— "अथस्यैतन्निष्केवल्य मेवेति।

अस्तु ग्रहादीनां केवलेन्द्रदेवताकत्व तेन प्रकृते कि मायात

---

* 'दुर्वेदे खल्वु मध्यको'—इति क।

† का० श्रौ० सू० १४ १ ११ ख, १२।

‡ का० श्रौ० सू० १४ २ १६।

§ ऋक्० सं० ४ ३५ ७।

मित्यत आह— "इन्द्रो वै यजमान इति। यस्माद् याग लक्षणेन परमैश्वर्येण योगाद् 'यजमान' इन्द्ररूप। 'वै'-शब्द शाखान्तरीया प्रसिद्धिं द्योतयति, "एष खलु वा एतर्हीन्द्रो यो यजते"-इति तैत्तिरीयके श्रवणात् *। 'यत' इन्द्रयजमानयोस्तादात्म्यात् माध्यन्दिनसवनवर्तिमाहेन्द्रपशौ वपाश्रपणेन यजमाने एव 'यजमाने' 'वीर्यं' निहितवान् भवतीत्यर्थः ॥ ४ ॥

पश्ववदानानां सर्वैकध्येन † श्रपण सिद्धान्तयितुं द्वैविध्यं पूर्वपक्षयति— "द्वेधावदानानि श्रपयन्तीति। कात्यायनस्तु उक्त वपाश्रपण ‡ अवदानानां द्वेधा श्रपणं च विकल्पेन सूत्रयामास— "माहेन्द्राग्नी वपाश्रपणम् अवदानैर्वा द्वेध श्रुतेः"-इति, "यथाभ्याय चोभयोर्यथार्थम्, एकध्यश्च श्रपणम्"-इति § च। शाखायां ॥ "तदु तथा न कुर्यात्"-इत्येवं निषिध्य, अन्यत् सिद्धान्तितम्। कथं अनयोर्विकल्पः सिध्यतीति चेत्, सत्यम्। मतान्तरनिषेधस्तु प्रसक्तिपूर्वको भवितुमर्हति, प्रसक्तिस्तु शाखान्तरीयेति तन्मतानुसारेण सूत्रकृता विकल्प उक्त इत्यविरोधः ‖। हृदय जिह्वा वक्षः यकृद् वृक्कौ सव्यो

---

* तै० सं० ६ १ ११ २।

† 'सर्वैक श्रपणेन'—इति च। 'सर्वैकध्येन'—इति ग, ङ।

‡ 'वपाश्रपण'—इति ङ।

§ का० श्रौ० सू० ६ २ १६ १७ २२—२४।

‖ 'पूर्वेभ्यो दैवतान्यिष्टकृद्भ्य अवद्यति, उत्तराणि त्रिधा ददाति' —इति का० श्रौ० सू० ६ ७ १८, १६। 'पूर्वाणि हृदयादीनि, उत्तराणि शस्त्राणि' —इत्यादिविवरणस्य समालोचनम्।

दोरुभे पार्श्वे दक्षिणा श्रोणिः गुदस्तृतीय मिति दैवतानि; दक्षिणो दोः सव्या श्रोणिः गुदस्तृतीय मिति सौविष्टकृता-नीति। एतानि सर्वाण्यवदानानि द्विधा पृथक् श्रपयन्ति पक्वानि कुर्युः। दैवतानां हृदयादीनां सौविष्टकृतानां दोरादीनां च पृथक् श्रपण मित्यर्थः।

हविषा अवदानप्रकार माह— "तस्योऽर्धाना मिति। अथ जुह्वा माज्येनोपस्तरणं कृत्वा 'अर्धानां' प्रधानहविषां हृदया-दीनां मध्ये एकैकस्माद् 'द्विर्द्विः' अवद्येत्। एव मेकादशा-वदानान्यवदाय पुनराज्येनैकवार मभिघारणं कुर्यात्। एव मुपस्तरण-द्विरवदान-पुनरभिघारणैर्हविषो चतुरवत्तत्वं सम्पादि-तम्। अनन्तरं स्विष्टकृदर्थान्यवदानानि तृतीय प्रत्यच्छागात्।

"अथोपस्तृणीति, वाक्यं स्पष्टार्थम्। अत्र उपस्तरणावदाने सकृत् सकृद्, द्विरभिघारण मिति चतुरवदानसम्पत्तिः। अत्र स्विष्टानि * अवत्तान्यपि न प्रत्यच्छागात्; उत्तरत्र विनि-योगाभावात्।

एतेषां द्विरवदानं प्रशंसति— "तस्यदर्धाना मिति। अर्धानां हृदयादीनां प्रत्येकं देवतार्थे स्विष्टकृदर्थे च द्विरवद्यतीति 'यत्', तेन द्विरवदानेन 'एषा' वपा 'कृत्स्ना' सम्पूर्णा भवति, यथेतरः पशुस्तथेत्यर्थः।

अथैतेषां प्रचरणं स्तौति— "अथ यद्देवेरिति। "दैवीं विश मिति। अवदानानां देवतोद्देशेनाग्नौ प्रक्षिप्तत्वात् तेन प्रचरणेन 'दैवीं' देवसम्बन्धिनीं 'विशम्' प्रजाम् 'उच्छ्रयति'।

एवं सर्वासां हविषां विनियोग मभिधाय, अर्थान्तरस्यापि

* 'अपानस्थितानि'—इति क, ख।

मित्यत आह— "इन्द्रो वै यजमान इति। यस्माद् याग-लक्षणेन परमैश्वर्येण योगाद् 'यजमानः' इन्द्ररूपः। 'वै'-शब्दः शाखान्तरीयां प्रसिद्धिं द्योतयति; "एष खलु वा एतर्हीन्द्रो यो यजते"-इति तैत्तिरीयके श्रवणात् *। 'अतः' इन्द्रयज-मानयोस्तादात्म्यात् माध्यन्दिनसवनवर्तिमाहेन्द्रग्रहान्ते तथा-चरणेन यजमाने एव 'यजमाने' 'वीर्यं' निहितवान् भव-तीत्यर्थः ॥ ४ ॥

पञ्चावदानानां मध्येकाध्येन † अवत्तं विधास्यंस्तु द्वैविध्यं पूर्वपक्षयति— "द्वेधावदानानि अवद्यतीति। कात्यायनस्तु यथाप्रवचन ‡ मवदानानां द्वेधा अवत्तं च विकल्पेन सूत्र-यामास— "माहेन्द्राग्ने यथाग्रयणम् अवदानेषु द्वैधं गतैः"-इति, "यथाम्नायं सोमयोः यथायाय, यथाध्वम् अवयवम्"-इति § च। ब्राह्मणे तु "तदु तथा न कुर्यात्"-इत्येकं निषिध्य, पश्चात् सिद्धान्तितम्। कथं अनयोर्विकल्पः सिध्यतीति चेत्, सत्यम्। मतान्तरनिषेधस्तु प्रशंसापूर्वको भवितुमर्हति, प्रशंसितं शाखान्तरीयमिति तन्मतानुसारेण, सूत्रकृता विकल्पः कृत इत्यविरोधः ‖। हृदयं जिह्वा वक्षो यकृद्-वृक्कौ सव्यौ

---

* तै० सं० ६. १. ११. ९।

† 'मध्येक मध्यमेन'—इति च। 'मध्येकाध्येन'—इति ग, छ।

‡ 'यथाग्रयण'—इति छ।

§ का० श्रौ० सू० १२. ९-१६, १०. ९२—९३।

‖ 'पूर्वाभ्यो देवताभ्यश्चतुरवत्तं जुहोति, उत्तराणि विशे ददाति' —इति का० श्रौ० सू० १४. ९. १८, १९। 'पूर्वाणि जुहोति, उत्तराणि ब्राह्मणेभ्यः'—इत्यादिरीतिरत्र च तत्रत्याः।

दोरसे पार्श्वे दक्षिणा श्रोणिः गुदत्तृतीय मिति दैवतानि ; दक्षिणो दोः सव्या श्रोणिः गुदतृतीय मिति सौविष्टकृता-नीति। एतानि सर्वाण्यवदानानि द्विधा पृथक् अवद्यन्ति पञ्चानि कुर्युः। दैवतानां हृदयादीना सौविष्टकृतानां मदग्राणां च पृथक् श्रपण मित्यर्थः।

हविषा अवदानप्रकार माह— "ततोऽर्द्धाना मिति। अथ जुह्वा माज्येनोपस्तरणं कृत्वा 'मर्द्धाना' प्रधानहविषा हृदया-दीनां मध्ये एकैकस्मात् 'द्विर्द्विः' अवद्येत्। एव मेकादशा-वदानान्यवदाय पुनराज्येनैवाभिघारणं कुर्यात्। एव मुपस्तरण-द्विरवदान पुनरभिघारणैर्हविषां चतुरवत्तत्वं सम्पादि-तम्। अनन्तरं स्विष्टकृदर्थान्यवदानानि सूत्रेण प्रत्यवधारात्।

"अथोपस्तृणीति, वाक्य' स्पष्टार्थम्। अत्र उपस्तरणावदाने सकृत् सकृत्, द्विरभिघारण मिति चतुरवदानसम्पत्तिः। अत्र स्थितानि * अवसर्थाणि न प्रत्यवधारात् ; उत्तरत्र विनि-योगाभावात्।

एतेषां द्विरवदानं प्रशंसति— "सर्वाद्वर्द्धाना मिति। अर्द्धाना हृदयादीनां प्रत्येकं देवतार्थं स्विष्टकृदर्थं च द्विरवद्यतीति 'यत्', तेन द्विरवदानेन 'एषा' यज्ञा 'कृत्स्ना' सम्पूर्णा भवति, यदीतरः पशुस्तद्वेत्यर्थः।

अथैतेषां प्रचरणं स्तौति— "अथ यदेतैरिति। "दैवीं विश मिति। अवदानाना दैवतोद्देशेनाग्नौ प्रक्षिप्तत्वात् तेन प्रचरणेन 'दैवीं' देवसम्बन्धिनीं 'विशम्' प्रजाम् 'उज्जयति'।

एवं सर्वांनां हविषां विनियोग मभिधाय, अर्द्धान्तरस्यापि

---

* 'अपत्रसितानि'—इति क, ख।

दर्शयति— "अथाङ्गानीति । यागार्थाद्धविष पृथक् पक्वानि अङ्गानि 'मानुष्यै' मनुष्यसम्बन्धिन्यै 'विशे' प्रजायै 'उपहरति' ददाति । 'तेन' दानेन 'मानुषीं' प्रजां जितवान् भवतीति । अतएव सूत्रितम्— 'पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यत्युत्तराणि विशे ददाति"—इति *। अत्र पूर्वोत्तरशब्दौ कर्कोपाध्यायेनैव व्याख्यातौ— "पूर्वाणि हृदयादीनि, उत्तराणि परङ्गानि"—इति ॥ ५ ॥

तदिदमाद्रिक † माहेन्द्राग्नौ वपायाश्च हविषा द्विधा श्रपणं च दूषयति— 'तदु तथा न कुर्यादिति । कारणं प्रत्यवायं दर्शयति— "ह्वलति वा एष इति । 'यो यज्ञमार्गादेः सकाशाद् 'एति' प्रच्युतो भवति, स 'ह्वलति' विभ्रष्टो भवतीत्यर्थः । कस्य यज्ञपथाद् भ्रंशनम्? तत्राह— "एति वा एष इति । 'एवम्' उक्तरीत्या 'वपया' प्रातस्सवनकर्त्तव्यं वपाहोमं माहेन्द्राग्नौ श्रपणञ्च करोति, स यज्ञमार्गात् प्रच्युतो भवेत्, अतस्तथा न कुर्यादिति सम्बन्धः ॥

अथ माध्यन्दिनसवनवपाप्रचरणकाले ‡ मारुती वपा प्रचरण्य हविषा तेनांशेन श्रपणञ्च विधत्ते— "तस्माद् यद्वैवेत्यादिना §। अस्मिन् पक्षे अङ्गेभ्य स्विष्टकृद्यागावदानमिति पृथक्पक्वस्य हविषोऽभावात् मानुष्यै विशे अवदानमिति विशेषः ॥ ६ ॥

* का० श्रौ० सू० १४ २ १८, १९।

† 'तन्दि'—इति ख ।

‡ इत उत्तरम् [=प्रातस्सवने]—इत्यधिकं क पुस्तके ।

§ यथाप्याय योभयो°, यथायथ°, ऐकध्यञ्च श्रपणम्—इति का० श्रौ० सू० १४ १ २२, २३, २४।

पञ्चदशानि * विधत्ते— "अथ सप्तदशीनि । 'प्राजापत्यान्' प्रजापतिदेवताकान् सप्तदशसङ्ख्याकान् पशून् आलभेत । अत्र देवतासङ्ख्यालक्षणद्वयविशिष्टपशुविधिः । तेषु पशुषु गुणत्रयं विधत्ते —"ते वै सर्वे तूपरा इति । 'तूपराः' अविषाणा इत्यर्थः । 'श्यामाः' शुक्लकृष्णवर्णाः, 'मुष्कराः' मुष्कौ येषां सन्तीति । "ऊषसुषिमुष्कमधो रः"—इति † मत्वर्थीयो र-प्रत्ययः । मुष्कवृद्धिः सर्वाङ्गवृद्धिं अन्तरेण न घटते इति सर्वे पुष्टाङ्गा भवेयुरित्यर्थः ॥

पशुतन्त्ररूपेण प्रत्यक्षसोमात्मना च स्तुवन् तदात्मक-प्रजापतिप्राप्तिं प्रतिपादयति— "प्रजापतिर्वा इत्यादिना । सोमवत् पश्वोरपि सवनत्रयव्यापित्वात् साप्तदश्यम्, अत्र देवतार्थपारोक्ष्याभावात् प्रत्यक्षत्वम् ॥ ७ ॥

पशुगतां सङ्ख्यां मुपजीव्य प्रशंसति— "ते वै सर्वे तूपरा इति । अस्यायमर्थः ;— यस्मात् 'पुरुषः' 'प्रजापतेः' 'नेदिष्ठम्' अन्तिकतमं वस्तु, सत्त्वप्रवृत्तेः प्रथमभावित्वात् ; 'सः' 'अयं' पुरुषः 'तूपरः' । तूपरशब्दार्थं स्वयमेव दर्शयति— "अविषाण इति । पुरुषत्वादविषाणः, ततः प्रजापतिदेवत्यानां पशूनां तूपरत्वगुणेन भाव्यमिति ॥ ८ ॥

श्यामत्वमनूद्य व्याचष्टे— "सर्वे श्यामा इति । शुक्लकृष्णवर्णद्वयात्मकं श्यामत्वमित्यर्थः । द्वित्वमामनन्य प्रशंसति— "द्वन्द्वं वा इति । 'प्रजापतिः प्रजननम्' ; सर्वोत्पादकत्वात् ॥ ९ ॥

"सर्वे मुष्करा इति, वाक्यं निगदव्याख्यातम् । उक्तत्रिविधगुणानां पशूनां मङ्गलत्वप्रतिपादनपूर्वकं पक्षान्तरमाह—

---

* 'पञ्चदशानि'—इति क ख ।

† पा० सू० ५. २. १०७ ।

"दुर्वेदा इति। उक्तगुणानां पशूनां मध्यात्रे कतिपया एव पशवो गुणत्रयवन्तो भवेयुः। अत्र सूत्रम्— "प्राजापत्याय ससदश श्याम तूपरान् वस्त्वाद्यगुणाभावे सर्वेषा मेकदेशोऽपि" -इति *। यद्येवं तर्हि कतिपयपशूनां वर्णान्तरयुक्तत्वेऽपि कामं गौणत्वैकस्य परिहरति— 'सर्वं वा होति। प्रजापतेः सर्वात्मकत्वात् वर्णान्तरयुक्तस्य पशूनां प्राजापत्यत्वं न विरुध्यत इत्यर्थः ॥ १० ॥

अत्र केचित् सप्तदशप्राजापत्यपशूनां मध्ये वाग्देवत्यं पशुम्, तत्र चोपपत्तिं वदन्ति, तेषां पक्षं निरसितुमनुवदति— "तद्वेके वाच इति †। एके शाखान्तरीया 'वाचे' वाग्देवतार्थे 'उत्तमम्' अन्ते कर्तव्यत्वाच्चरम मित्यर्थः, तम् 'आलभन्ते'। न हि 'प्रजापतेः' 'परम्' उत्कृष्टं पूर्वभावि किंचिदपि 'अस्ति', यदर्थं पश्वालम्भः स्यात्, यद्यस्ति, 'वागेव' अस्ति, तस्याः कन्यप्रभृतिकन्येन पूर्वं सवस्थानादिति भावः। ताम् 'उत्तमाम्' साधयाम 'इति' बुद्ध्या वाग्देवत्यः पश्वालम्भनीय इति। तद् दूषयति— "तदु तथेति। 'सर्वं वा इदमिति। अस्यायमर्थः,— प्रजापतेः सर्वात्मकत्वेन लोकात्मकत्वम्, तथा चराचरसर्वभूतात्मकत्वञ्चास्त्येव, अतो लोकेषूद्यमाना वाक् अपि प्रजापतिरूपैवेति [प्रजापतिसदावाक्तेवाऽपि विभातत्वात् ‡] तदर्थं वाग्देवत्यपश्वालम्भन नादरणीय मिति ॥ ११ ॥

---

* का॰ श्रौ॰ सू॰ १४ २ १२ १४।

† वाच उत्तम एके—इति का॰ श्रौ॰ सू॰ १४ २ १५।

‡ अपि प्रजापतिरूपैवेति—इत्यस्य स्थाने मन्मतौऽपि तत्र पाठः एव एव प॰ ब॰ पाठ॰ मर्दन म एव गुण मशुद्ध इत्येवाकलय्यायम्याल मिति।

उक्तानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्यागस्य च प्राकृतपशुवपाहविर्भिः सह होमकालं विधास्यति, तत्र तावत् पूर्वपक्षमाह— "मैत्रा मारुद्र यजेति। 'मैत्रावरुणः' नामर्त्विक् माध्यन्दिने सवने 'वामदेव्यं' साम 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरतया व्याख्येयम्। अतएव कात्यायनः—"वामदेव्यप्रशान्ते प्राजापत्यानाम्"-इति*। अनुष्ठानमिति शेषः। तदा एषां सप्तदशानां वपायागः कर्त्तव्य इत्यर्थः॥ १२ ॥

"अधीष्टा इति। तृतीयसवने अनुयाजयागानन्तरं स्रुग्व्यूहनादर्वागेषां प्राजापत्यानां हविर्यागः कर्त्तव्यः। अत्र कात्यायनः— "स्रुग्व्यूहनात् प्राग्घविषा"-इति†। तं कालं प्रशंसति— "सोऽन्त इति। 'सः' एव कालः 'अन्तः' सवनीये कर्त्तव्यानां यागानां अवधिः। प्रजापतेः सर्वान्तमत्वादन्तत्वम्। तस्मादन्तरूपे तस्मिन् काले क्रियमाणेन हविर्होमेन 'प्रजापतिमेव' उज्जितवान् भवतीत्यर्थः। "अथ यत् पुरेति। अस्यार्थः;— 'यत्' यदि उक्तकालात् 'पुरा' प्राकृत एव काले वपाहविर्भिः प्रचरेत्, तर्हि व्यर्थमेव प्रजापतिप्राप्तिलक्षणकर्मफलापकरणं प्रयुक्तमितीममर्थं प्रदर्शयितुं दृष्टान्तः— "यथाय मिति। 'यथा' लोके पुरुषो यं मार्गं गमिष्यन् भवेत्, 'तं' मार्गं देशं प्राप्य 'क' कुत्र गच्छति; तत्प्राप्तेः सिद्धत्वात्। 'एवम्' एतत्काले होमकरणफलरूपप्रजापतिप्राप्तेः सिद्धत्वात्, उपरितनकर्मानुष्ठानं निष्फलं स्यात्। तस्मादनुयाजान्ते स्रुग्व्यूहनात् प्राक् पशुहविर्होम इति सिद्धान्तितम् ॥ १३ ॥

* का० श्रौ० सू० १४ २ २० ।

† का० श्रौ० सू० १४ २ २१ ।

तदुपपन्नं विधानयति—"तदु तथेति। अत्र सूत्रम्— "यथा-न्याय वोभयो"-इति *। 'उभयो.' वपापुरोडाशयोः यथा न्याय प्रकृतिवत् कर्त्तव्य मित्यर्थः। "एतेषां पशूना मिति। लक्षितत्वात् पृथक् पृथक् देवतासम्बन्धप्रतिपादकेन † समदश यागात्मकत्वात् प्रतियाग याज्यापुरोऽनुवाक्याभेद प्रासङ्ग देव तैक्यात् सह प्रदान मिति मन्वानो याज्यापुरोऽनुवाक्ययो रैक्य माह— "एकानुवाक्येति। यत एते पशव प्रजापत्यैक देवत्या, तस्माद् याज्यानुवाक्ययोरैक्य मित्यर्थः। यद्वाक्या पाठात् प्राग्ध्वर्युणा कर्त्तव्येऽनुवचनप्रैषे विशेष विधत्ते— "प्रजापतय इति। देवतावाचक पद मुपांशूक्त्वा छागाना मित्यादिक मुच्चैर्ब्रूयादित्यर्थ। हे मैत्रावरुण। 'प्रजापतये' देवतायै 'छागाना' पशूना 'हविष' अवदीयमानस्य अर्थाय 'अनुब्रूहीति' अनुवचन कुर्विति तस्यार्थ ॥

याज्यायणादनन्तरकर्त्तव्ये प्रैषेऽपि ‡ विशेष विधत्ते— "प्रजापतय इति। अत्रापि मैत्रावरुण सम्बोध्य। अथ होतु कर्त्तव्य दर्शयति— "वषट्कृत मिति। होता याज्यान्ते वषट् कारे कृते सति 'जुहोति', अध्वर्युरिति शेष ॥ १४ ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे प्रथमाध्यायस्य तृतीय ब्राह्मणम् ॥

---

* का० श्रौ० सू० १४ ५ २२।

† एषामिति कमिह च-पुस्तके। ज-पुस्तके त्वेव पाठो भाष्येन।

‡ "०कर्त्तव्ये प्रैषेऽपि —इति च।

( अथ चतुर्थं ब्राह्मणम्. )

तं वै माध्यन्दिने सवने ऽभिषिञ्चति । माध्यन्दिने सवन ऽआजिं धावन्त्येष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतस्येवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत एवैतत् प्रजापति मुज्जयति ॥ १ ॥

अगृहीते माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्य मेव स्तोत्रं निष्केवल्यꣳ शस्त्र मिन्द्रो वै यजमानस्तदेनꣳ स्व ऽएवायतने ऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे * ॥ २ ॥

अथ † रथ मुपावहरति ‡ । इन्द्रस्य वज्रो ऽसीति वज्रो वै रथ इन्द्रो वै यजमानस्तस्मादाहेन्द्रस्य वज्रो ऽसीति वाजसा इति वाजसा हि रथस्त्वयायं वाजꣳ सेदित्यन्नं वै वाजस्त्वयाय मन्न मुज्जयत्वित्येवैतदाह ॥ ३ ॥

---

* 'माहेन्द्रे'—इति ग, घ ।

† 'अथ'—इति क । ‡ 'ति'—इति ग, घ ।

तं पूर्वार्द्धेन मन्त्रवेद्याभ्यववर्तयति । वाजस्य नु प्रसवे मातरं महीमित्यन्नं वै वाजो ऽन्नस्य नु प्रसवे मातरं महीमित्येवैतदाहादितिं नाम वचसा करामह ऽइतीयं वै पृथिव्यदितिस्तस्मादाहादितिं नाम वचसा करामह ऽइति यस्यामिदं विश्वं भुवनमाविवेशेत्यस्याᳩ हीदᳩ सर्वं भुवनमाविष्टं तस्यां नो देवः सविता धर्म साविषदिति तस्यां नो देवः सविता यजमानᳩ सुवतामित्येवैतदाह ॥ ४ ॥

अथाश्वानद्भिरभ्युक्षति । स्नपनायाभ्यवनीयमानान्स्नपितान्वोदानीतानद्भ्यो ह वा ऽअग्रे ऽश्वः सम्बभूव सो ऽद्भ्यः सम्भवन्नसर्वः समभवदसर्वो हि वै समभवत्तस्मान्न सर्वैः पद्भिः प्रतितिष्ठत्येकैकमेव पादमुदच्य तिष्ठति तद्यदेवास्याप्स्वहीयत तेनैवैनमेतत् समर्द्धयति कृत्स्नं करोति तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्स्नपितान्वोदानीतान् * ॥ ५ ॥

---

* -तान्—इति अ, ब ।

सो ऽभ्युक्षति* । अप्स्वन्तरमृत मप्सु भेषज मपा मुत प्रशस्तिष्वश्वा भवत व्वाजिन इत्यनेनापि देवीरापो यो व ऊर्मिः प्रतूर्त्तिः ककुन्मान्वाजसास्तेनायं व्वाजए सेदित्यन्नं वै व्वाजस्तेनाय मन्न मुज्जयत्वित्येवैतदाह† ॥ ६ ॥

अथ रथं युनक्ति । स दक्षिणायुग्य मेवाग्रे युनक्ति सव्यायुग्यं वा ऽग्रये मानुषे ऽथैवं देवत्रा‡ ॥ ७ ॥

स युनक्ति । व्वातो वा मनो वेति न वै व्वातात् क्षिप्रनाशीयो ऽस्ति न मनसः क्षिप्रनाशीयो ऽस्ति तस्मादाह व्वातो वा मनो वेति गन्धर्व्वाः सप्तविएशतिस्ते§ ऽग्रे ऽश्व मयुञ्जन्निति गन्धर्व्वा ह वा ऽग्रे ऽश्वं युयुजुस्तद्ये ऽग्रे ऽश्व मयुञ्जंस्ते त्वा युञ्जन्त्वित्येवैतदाह तेऽअस्मिन् जव मादधुरिति तद्ये ऽस्मिन् जव मादधुस्ते त्वयि जव मादधत्वित्येवैतदाह ॥ ८ ॥

---

* 'ति'—इति ख, घ।  † 'ह'—इति ग, घ।

‡ 'देवत्र'—इति क, 'देवत्रा'—इति ग, घ।

§ 'सम्भविष्यति। ते'—इति क, ख।

अथ सव्यायुग्यं युनक्ति। वातरंहा भव वाजिन् युज्यमान इति वातजवो भव वाजिन् युज्यमान इत्येवैतदाहेन्द्रस्येव दक्षिणः श्रियैधीति यथेन्द्रस्य दक्षिणः श्रियैवं यजमानस्य श्रियैधीत्येवैतदाह युञ्जन्तु त्वा मरुतो विश्ववेदस इति युञ्जन्तु त्वा देवा इत्येवैतदाहाते त्वष्टा पत्सु जवं दधात्विति नात्र तिरोहितमिवास्त्यथ दक्षिणाप्रष्टिं युनक्ति सव्याप्रष्टिं वा ऽध्वर्यो मानुषे ऽथैवं देवत्रा* ॥ ९ ॥

स युनक्ति। जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो ऽअचरच्च वात ऽइति जवो यस्ते वाजिन्नप्यन्यत्रापिनिहितस्तेन न इमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुरित्यन्नं वै वाजो ऽन्नजिच्च न एध्यस्मिंश्च नो यज्ञे देवसमन ऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह ॥ १० ॥

---

* देवत्रा—इति ग, घ।

ते वा ऽएत ऽएव त्रयो युक्ता भवन्ति । त्रि-वृद्धि देवानां तद्धि देवत्राधिप्रष्टियुग एव चतुर्थो ऽन्वेति मानुषो हि स तं यत्र दायन् भवति तच्चतुर्थं मुपयुज्य ददाति तस्मादपीतरस्मिन्यज्ञ ऽएत ऽएव त्रयो युक्ता भवन्ति त्रिवृद्धि देवानां तद्धि देवत्राधिप्रष्टियुग एव चतुर्थो ऽन्वेति मानुषो हि स तं यत्र दायन् भवति तच्चतुर्थं मुपयुज्य ददाति * ॥ ११ ॥

अथ यार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति † । अन्नं वा ऽएष उज्जयति यो व्वाज-पेयेन यजते ऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्य-देवैतदत्र मुदजैषीत्तदेवास्मा ऽएतत् करोति ॥ १२ ॥

अथ यद्बार्हस्पत्यो भवति । बृहस्पतिर्ह्येत मग्र ऽउदजयत्तस्माद्बार्हस्पत्यो भवति ॥ १३ ॥

अथ यन्नैवारो भवति । ब्रह्म वै बृहस्पति-रेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति सप्तदशशरावो भवति सप्तदशो वै प्रजा-पतिस्तत् प्रजापति मुज्जयति ॥ १४ ॥

* 'ददाति'—इति क । † 'ति'—इति क ।

त मश्वानवघ्रापयति । वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजो ऽन्नजित इत्येवैतदाह वाजꣳ सरिष्यन्त इत्याजिꣳ हि सरिष्यन्तो भवन्ति बृहस्पतेर्भाग मवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भाग मवजिघ्रतेति तद्यदश्वानवघ्रापयतीम मुज्जयानीति तस्माद्वा ऽअश्वानवघ्रापयति ॥ १५ ॥ ४ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [१,४,] ॥

अथ माध्यन्दिने सवने कर्तव्यः प्रयोगोऽभिधीयते ।—

तत्र, यजमानाभिषेक माजिधावन ( च * ) प्राधान्येन विधत्ते — "स वै माध्यन्दिन इति । अभिषेकाजिधावनयोः स्वरूप मुपरिष्टा विशदीभविष्यति । "एष वा इति । 'य एष यज्ञः' सवनत्रयात्मना 'तायते' विस्तार्यते, 'एषः' एव खलु सः 'प्रजापतिः', 'यस्मात्' 'इमाः प्रजाः' मनुष्याद्याः उत्पन्नाः । 'एतर्हि' इदानीम् 'अपि' 'एत मेव' यज्ञात्मकं प्रजापतिम् 'अनु'-लक्ष्य, प्रजा उत्पद्यन्ते । 'तत्' तेन माध्यन्दिने सवने अभिषेकेण आजिधावनेन च यज्ञमध्ये एव तं 'प्रजापतिं' जितवान् भवतीति ॥ १ ॥

* इद मधिकं च-पुस्तके ।

शब्दः सर्वत्र प्रसिद्धिद्योतनार्थः। श्रुतिस्तूदाहृता, मन्त्र-व्याख्यानेनैव गतार्थं मन्तव्यम् ॥ ३ ॥

धूर्गृहीतस्य रथस्य वेदिमध्येऽभ्यावर्तनं समन्त्रकं विधत्ते— "तं धूर्गृहीत मिति। धूरिति अश्वमन्तःस्थानं युगम्, 'अन्तर्वेदि' सौमिकवेदिमध्ये प्राक्शिरोमार्गवेदित्यर्थः। अत्र सूत्रम्— "दक्षिणेन चात्वालं मावर्तयति वाजस्येति"—इति *।

धूर्गृहीत मिति † मन्त्रस्यार्थः;— 'वाजस्य' अन्नस्य 'प्रसवे' प्रेरणे अनुष्ठानविषये 'वदामहे'—इति ‡ सम्बन्धः। 'मातरम्' अन्नस्य निर्मात्रीं, 'महीं' वेदिरूपां पृथिवीम्, 'अदितिं नाम' अखण्डनीयामेव 'वचसा' वेदवाक्येन मन्त्रेण 'करामहे' अन्नप्रदात्रीं करवामहे 'इति'। 'यस्यां' पृथिव्याम् 'इदं विश्वं भुवनं' सर्वं भूतजातम् "आविवेश" 'आविष्टम्'। 'तस्यां' पृथिव्यामेव 'सविता' प्रसविता 'देवः' 'नः' अस्माकं 'धर्म' धरणं अनुष्ठानं 'साविषत्' अनुजानातु। मन्त्रप्रतिपाद्यं समूहं व्याचष्टे— "अन्नं वै वाज इति। व्याख्यातम् § ॥ ४ ॥

अश्वानां प्रोक्षणं तत्कालञ्च विधत्ते— "अश्वानभ्युक्षति। 'उपनाय' अश्वाननाय समापयन् 'अभि' लक्ष्य 'नीयमानान्', 'अवितान्' रक्ष्यमाणान्, 'उदानीतान्' आगतान् वा प्रोक्षेत्। अपनयार्थं गमनकाले तदुत्तरकाले वा प्रोक्षण मित्यर्थः ||। अथ क्रियमाणं प्रोक्षणं प्रशंसति— "अश्वो ह वा इति।

---

* का० श्रौ० सू० १४ । ३ । २।

† वा० सं० ९ । ५ । ३।    ‡ 'करवामहे'—इति च, छ।

§ पुरस्तात् ३ब्रा० ३क० (पृ०६८ पं०१०) द्रष्टव्यम्।

|| का० श्रौ० सू० १४ । १ । ३।

निघर्षितवान्, 'वाजसाः' अन्नस्य संभक्ताः, स एवंविधः 'तेन' 'अयम्' अश्वः प्रोक्षितः सन् 'वाजम्' अन्नं 'जेत्' जिगीयात्, साधयतु चेति। तत्र द्वितीयमन्त्रगतं 'वाज जेत्'–इति पदं व्याचष्टे— "अन्नं वा इति ॥ ६ ॥

अथाश्वेन रथयोजनं विधत्ते— "अथ रथ मिति *। तत्र, 'अग्रे' प्रथमं 'दक्षिणा' दक्षिणतः 'युग्य' युगस्य दक्षिणम् अश्वं युञ्ज्यात्। "सव्यायुग्य मिति। अस्याय मर्थः;— लोके 'मानुषे' मनुष्यसम्बन्धिनि कर्मणि 'सव्यायुग्य' सव्यभागयोजनीय मेवाश्वं प्रथमं युञ्जन्ति। दीर्घश्छान्दसः †। अत्र तु दक्षिणस्य प्रथमं योजनम्, 'एवं देवत्रा' देवयोग्य मेव ‡ कर्म कृतवान् भवतीति। 'देवत्रा' देवशब्दात् दैवार्थे सप्तम्यर्थे वा त्रा-प्रत्ययः ॥ ७ ॥

योजन मनूद्य मन्त्रं विधत्ते— "स युनक्ति वातो वेति §। 'वा'-शब्दः समुच्चयार्थः। वायुश्च मनश्च सप्तविंशतिसङ्ख्याकाः 'गन्धर्वाः' नक्षत्राभिमानिनः। 'ते' सर्वे 'अग्रे' अस्मत्तः पुरा रथे 'अश्वं' योजितवन्तः। 'ते' पुनः 'अस्मिन्' अश्वे 'जवं' वेगम् 'आदधुः' स्थापितवन्तः। लोडर्थे लिट्; अस्मिन्नश्वे त्वपि जव मादधत्विति। व्याचष्टे— "न वै वातादिति। 'वातात्' वायोः 'मनसः' च 'आशीयः' आशुतरं किञ्चिदपि वस्तु अतिवेगवत् 'न अस्ति'। उत्तरवाक्यं स्पष्टम् ॥ ८ ॥

---

* का० श्रौ० सू० १४ ३. ६।
† पा० सू० ६ ३ ११३।
‡ 'प्रथमयोजनेन देवयोग्य मेव'—इति ह।
§ वा० सं० ९. ७. ३।

अथ सव्यस्याश्वस्य रथे योजनं समन्त्रकं विधत्ते— "अथ सव्यायुग्य मिति *। 'सव्यायुग्य' सव्ये भागे योजनीयम्। यत्-प्रत्ययश्छान्दसो द्रष्टव्यः। हे 'वाजिन्' अश्व। युज्यमानस्त्वं 'वातजवः' † वायुवेगो 'भव'। 'इन्द्रस्य' अश्व, 'इव' 'दक्षिण' प्रहस. पुष्टाङ्ग. [illegible] 'श्रिया' शोभनया युक्तः 'एधि' भव। यद्वा, श्रीशब्दात् परस्य शोर्यादेश.; 'यथेन्द्रस्य' पश्वस्य श्रीर्भवति, 'एवं यजमानस्य' श्रीर्भव। 'विश्ववेदस' सर्वज्ञाः 'मरुतो देवाः' 'त्वा' त्वाम् अश्वं 'युञ्जन्तु'। 'त्वष्टा' 'ते' तव रथे युक्तस्य 'पत्सु' पादेषु 'जवं' वेगं 'दधातु' 'इति'। "नाव तिरश्चिन्न मिति। मन्त्रगतचतुर्थपादे धनवयुक्तोऽर्थो माध्वीत्यर्थः ‡॥

तृतीयस्याश्वस्य योजनं विधत्ते— "अथ दक्षिणैति। प्रष्टि-मांस पादवर्योर्पितो ओषधपाचादेराधारः §, तदनु। पश्चे-

त्रिभिर्युक्तं रथं कुर्यात्* । अत पूर्वं अश्वद्वयस्य युक्तत्वात् तृतीयस्य प्रष्टित्व युक्तम् । अत एवापस्तम्ब:— "प्रष्टिवाहिनं रथं युनक्ति"—इति । तृतीयेनाश्वेन रथं युञ्ज्यादित्यर्थः । तं 'दक्षिणा' दक्षिणतः प्रथमं युञ्ज्यात् । "सव्यप्रष्टि मित्यादि, पूर्ववद् व्याख्येयम् † ॥ ८ ॥

योजन मनूद्य मन्त्रं विधत्ते—"स युनक्ति जवो य इति ‡ । हे वाजिन् ! 'ते' तव हृदये 'यः' 'जवः' वेगः 'गुहा' गुहायां गूढप्रदेशे 'निहित.' स्थापितः, 'श्येने' पक्षिणि च यो जवः 'परीत.' व्यवस्थितः, यो वेगो 'वाते' वायौ 'अचरत्' तिष्ठति । हे 'वाजिन्' । तेन बलेन बलवान् त्वं 'नः' अस्माकं बलेन 'वाजजित् भव' अन्नस्य जेता दाता भव । 'समने' यज्ञेऽपि सङ्ग्रामे पारयिष्णुः पारयिता पारगमनशीलश्च भवेति ॥

त मिमं मन्त्रं व्याचष्टे— "जवो यस्त इति । "अप्यन्य त्रापिनिहित इति । 'अन्यत्र' गुहायमित्यध्युपलक्ष्यते, प्रदेशान्तरे 'अपनिहितः' निहितः । पूर्वार्द्धस्य तात्पर्यं माह—"तेन न इति । यजमानपत्न्योस्तादात्म्यं युक्तम् । 'समने पारयिष्णुः' -इत्यस्याभिप्रायं माह— "अस्मिन्नो यज्ञ इति । 'देवसमने' समन मिति सङ्ग्रामनाम §, देवसमाजनयोऽस्मिन् यज्ञे । गतार्थं मन्यत् ॥ १० ॥

---

"मयणावी रथस्य येषां प्रष्टी युक्ता धुर्मंवहनि।
अध्यात मस्य दक्षे न यावं परं नेदीयोऽत्तर' इतीयः"—इति ।

* का० श्रौ० सू० १४ ३ ८ ।

† ४७ पृ० १९ पं० अथ दक्षिणेत्यादि द्रष्टव्यम् ।

‡ वा० सं० ९. ९. १ ।

§ निघ० २ १७ १६ ।

उक्तानां मन्त्राणां नित्यसङ्ख्या मनूद्य प्रशंसति— "ते वा एत इति। त्रिवृत्त्वं त्रिरावृत्तिः। दैवे कर्मणि प्रोक्षणादौ प्रसिद्धे 'हि'-शब्दार्थः। चतुर्थस्याश्वस्यानुगमनं विधत्ते— "अधिपश्यतीति। तृतीयस्याश्वस्य युगप्रदेशे। 'अधिः' सप्तम्यर्थानुवादी। अन्येन पुनः पश्चेवानुगच्छेत्। यस्मात् च चतुर्थो 'मानुषः' मनुष्यसम्बन्धी; मानुषे हि कर्मणि चतुर्णां वाहानां योजनं दृष्टम्। अत्र मानुषरूपव्युदासाय मन्त्रायोजन मिति। अत्र सूत्रम्— "अनुत्तमयद्धुर्योऽनुगच्छति"-इति *।

यदेव चतुर्युक्तो † रथोऽध्वर्यवे दीयते, तस्मिन् प्रदानसमये चतुर्थस्य रथे योजनं दर्शयति— "तं ब्रह्म दास्यमिति। तदुक्तं सूत्रे— "चतुर्थं युक्ताऽध्वर्यवे ददाति"-इति ‡। अत्रार्थं मन्त्रमाख्यातिदिशति— "अध्वादपीति। 'इन्द्रस्थिरम्' राजसूयादावित्यर्थः। शिष्टं गतार्थम्॥ ११॥

विधत्ते— "अथ बार्हस्पत्य मिति। अत्र द्रव्यदेवताविशिष्टचरुविधिः। "सप्तदशशराव मिति। सप्तदशशरावपरिमितम्। मुष्टिपरिमितिशिथिलेन शरावस्य सप्तदशावृत्याख्यानात् प्रकृतिगतमुष्टिसङ्ख्यानिवृत्तिः। तथाच कात्यायनः— "माध्यन्दिनीयैः सह नैवारचरुर्बार्हस्पत्यः सप्तदशशरावः, सङ्ख्यामुष्टिनिवृत्तिः"-इति §। चरुविधिं प्रशंसति— "सर्वं वा एष इति।

---

* का० श्रौ० सू० १४ ३ ९।

† 'चतुर्युङ्क्तो'-इति क, ख, ग।

‡ का० श्रौ० सू० १४ ४ १२।

§ का० श्रौ० सू० १४ २ २६. २७। कर्कोपाध्यायमते तु 'न यथासिद्धत्वात्'—इति तदुत्तरपक्षमारभ्याहित्य न बहुबाधः।

"तद्यदेवेत्यादि। तत्र वाजपेये 'यत्' 'एतत्' अन्नम् 'उदजैषीत्', पुरा बृहस्पतिरनेन क्रतुना यदेतत्फलभूतं सर्वं साधितवान्, 'तदेव' अन्नम् 'अस्मै' बृहस्पतये 'एतत्' एतेन चरुणा 'करोति' ॥ १२ ॥

देवतागतत्वसङ्ख्याविधिमनूद्य प्रशंसति— "अथ यदित्यादिना। पुरा बृहस्पतिः 'एतं' चरुं साधितवान्, अतोऽस्य चरोर्बृहस्पतिर्देवतेति युक्तम् ॥ १३ ॥

"अथ यदेवार इति। "नीवारा इति। यद् 'एते' 'अकृष्टपच्या' एव 'पच्यन्ते', न तु कृष्टक्षेत्रोत्पन्नशाल्यादिवत्, अतः कृष्टाभावात् पक्वा नीवाराः अकृष्टपच्यस्य बृहस्पतेर्योग्या इत्यर्थः ॥ १४ ॥

विधत्ते— "स अश्वानवघ्रापयतीति *। 'सं' चरुम् 'अश्वान्' रथे युक्तान् अवघ्रापयेत्। "आ गन्धीपादानि" †। तत्र मन्त्रमाह— "वाजिन इति ‡। हे 'वाजिनः' 'अश्वाः' 'वाजजितः' अन्नस्य जेतारः, 'वाजं'='अन्नम्' अन्नसाधनमाजिं प्रति सरिष्यन्तो यूयम्, 'बृहस्पतेर्भागम्' 'अवजिघ्रत' अवघ्राय गन्धोपादानं कुरुतेति तदर्थः §।

तद् व्याचष्टे— "वाजिनो ह्यश्वा इति। "वाजिष्य हि सरिष्यन्त इति। साधनभूतान्नवाची वाजशब्दः उपचारात् तत्साधने आजौ वर्तते इत्यर्थः। अवघ्रापणस्य प्रयोजनमाह— "तद्य-

---

* का० श्रौ० सू० १४ । ३ । १० ।

† आ० प० ८२६ पा० ।

‡ वा० सं० ९. ९ २ ।

§ 'अवघ्राणमात्रसंस्कारः आजिधावनार्थः। ततश्च जित्वरथे तद्दूरत्वात् न भवति'—इति का० श्रौ० सू० १४ । ३ । १० वृत्तिः।

दघ्नानिति। इमं यज्ञं साधयामीति बुद्ध्वा 'यज्ञान्' पलायापयेत् ॥ १६ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम्. )

तद्यदाजिं धावन्ति। इम मेवैतेन लोक मुज्जयत्यथ यद् ब्रह्मा रथचक्रे साम गायति नाभिदघ्न ऽउद्धिते ऽन्तरिक्षलोक मेवैतेनोज्जयत्यथ यद्यूपꣳ रोहति देवलोक मेवैतेनोज्जयति तस्माद्वा ऽएतत् त्रयं क्रियते * ॥ १ ॥

स ब्रह्मा रथचक्र मधिरोहति। नाभिदघ्न ऽउद्धितं देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पते रुत्तमं नाकꣳ रुहेय मिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः † ॥ २ ॥

---

* 'क्रियत'—इति ख।　　† '०णः'—इति ग, घ।

अथ यदि राजन्यो यजते। देवस्याहᳫं सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकᳫं रुहेय मिति यद्यᳫं ह्यैन्द्रः यदᳫं राजन्यः ॥ ३ ॥

त्रिः सामाभिगायति। त्रिरभिगीयावरोहति देवस्याहᳫं सवितुः सवे सत्यप्रसवसो बृहस्पते-रुत्तमं नाक मरुह मिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः * ॥ ४ ॥

अथ यदि राजन्यो यजते। देवस्याहᳫं सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाक मरुह मिति यद्यᳫं ह्यैन्द्रः यद्यᳫं राजन्यः ॥ ५ ॥

अथ सप्तदश दुन्दुभीननुवेद्यन्तᳫं समिन्वन्ति। प्रतीच आग्नीध्रात् प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमा मेवैतद्वाचं परमं प्रजापति मुज्जयति सप्त-दश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति ॥ ६ ॥

* ब्राह्मणः—इति ग, घ।

अथैतेषां दुन्दुभीनाम् *। एकं यजुषाहन्ति तत् सर्वे यजुषाहता भवन्ति ॥ ७ ॥

स आहन्ति। बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयतेति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः † ॥ ८ ॥

अथ यदि राजन्यो यजते। इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयतेति क्षत्रं हीन्द्रः क्षत्रं राजन्यः ‡ ॥ ९ ॥

अथैतेष्वाजिसृत्सु रथेषु। पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहरति तत् सर्वे यजुषोपावहृता भवन्ति ॥ १० ॥

स उपावहरति। एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत § बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वमिति

---

* ॰नाम्—इति ग घ ।

† 'ब्राह्मण'—इति ग, घ ।

‡ 'राजन्य'—इति क । 'राजन्य'—इति ख ।

§ मजीजपत—इत्येव ख पुस्तके ।

अथ यदि राजन्यो यजते। देवस्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयमिति यजत्ꣳ ह्यैन्द्रः यजत्ꣳ राजन्यः ॥ ३ ॥

त्रिः सामाभिगायति। त्रिरभिगीयावरोहति देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकं रुहेयमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः * ॥ ४ ॥

अथ यदि राजन्यो यजते। देवस्याहꣳ सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकं रुहेयमिति यजत्ꣳ ह्यैन्द्रः यजत्ꣳ राजन्यः ॥ ५ ॥

अथ सप्तदश दुन्दुभीननुवेद्यन्तꣳ समिन्वन्ति। प्रतीच आग्नीध्रात् प्रजापतिं वा ऽएष उज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापतिमुज्जयति ॥ ६ ॥

---

* ब्राह्मणः—इति ग, घ।

अथैतेषां दुन्दुभीनाम् *। एकं यजुषाहन्ति तत् सर्वे यजुषाहता भवन्ति ॥ ७ ॥

स आहन्ति। बृहस्पते व्वाजं जय बृहस्पतये व्वाचं व्वदत बृहस्पतिं व्वाजं जापयतेति यदि ब्राह्मणो यजते ब्रह्म हि ब्बृहस्पतिर्ब्रह्म हि ब्राह्मणः † ॥ ८ ॥

अथ यदि राजन्यो यजते। इन्द्र व्वाजं जयेन्द्राय व्वाचं व्वदतेन्द्रं व्वाजं जापयतेति क्षत्रᳫ हीन्द्रः क्षत्रᳫ राजन्यः ‡ ॥ ९ ॥

अथैतेष्वाजिसृत्सु रथेषु। पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहरति तत् सर्वे यजुषोपावहृता भवन्ति ॥ १० ॥

स उपावहरति। एषा वः सा सत्या संवागभूद्यया बृहस्पतिं व्वाजमजीजपताजीजपत § बृहस्पतिं व्वाजं व्वनस्पतयो विमुच्यध्व मिति

---

* ०नाम्—इति ख, घ।

† 'ब्राह्मणः'—इति ग, घ।

‡ 'राजन्य,'—इति क। 'राजन्यः'—इति ख।

§ 'मजीजपत'—इत्येव 'ग' पुस्तके।

यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः * ॥ ११ ॥

अथ यदि राजन्यो यजते । एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजिपताजीजिपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वमिति क्षत्रं हीन्द्रः क्षत्रं राजन्यः † ॥ १२ ॥

अथ वेद्यन्तात् । राजन्य उदङ् सप्तदश प्रव्याधान् प्रविध्यति यावान्वा ऽएकः प्रव्याधस्तावांस्तिर्यङ् प्रजापतिरथ यावत् सप्तदशप्रव्याधास्तावानन्वङ् प्रजापतिः ॥ १३ ॥

तद्यद्राजन्यः प्रविध्यति । एष वै प्रजापतेः प्रत्यक्षतमं यद्राजन्यस्तस्मादेकः सन् बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यस्तस्माद्राजन्यः प्रविध्यति सप्तदश प्रव्याधान् प्रविध्यति सप्तदशो वै प्रजापतिस्तत् प्रजापतिमुज्जयति ‡ ॥ १४ ॥

अथ यं यजुषा युनक्ति । तं यजमान आति-

---

* 'ब्राह्मणः'—इति ग, घ।

† 'राजन्यः'—इति क, ख। ‡ 'ति'—इति क।

इति देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृह-
स्पतेर्वाजजितो वाजं जेषमिति ॥ १५ ॥

तद्यथैवादो बृहस्पतिः। सवितारं प्रस-
वायोपाधावत् सविता वै देवानां प्रसवितेदं मे
प्रसुव त्वत्प्रसूत इद मुज्जयानीति तदस्मै स-
विता प्रसविता प्रासुवत्तत्सवितृप्रसूत उदजयदेव
मेवैष एतत् सवितार मेव प्रसवायोपधावति स-
विता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत
इद मुज्जयानीति तदस्मै सविता प्रसविता प्रसौति
तत् सवितृप्रसूत उज्जयति * ॥ १६ ॥

अथ यथाध्वर्युः। अन्तेवासी वा ब्रह्मचारी
वैतद्यजुरधीयात् सो ऽन्वारभ्य वाचयति वाजिन
इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति
वाजजित इत्यन्नं वै वाजो ऽन्नजित इत्येवैत-
दाहाध्वन स्कभ्नुवन्त इत्यध्वनो हि स्कभ्नुवन्तो
धावन्ति योजना मिमाना इति योजनशो हि
मिमाना अध्वानं धावन्ति काष्ठां गच्छतेति
यथैनानन्तरा नाष्ट्रा रक्षाꣳसि न हिꣳस्युरेव

* °ति—इति क ।

यजते ऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवै-तदन्न मुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳस्पृशते तदात्मन् कुरुते ॥ २५ ॥

स उप स्पृशति । आ मा वाजस्य प्रसवो जगम्यादित्यन्नं वै वाज आ मान्नस्य प्रसवो जगम्यादित्येवैतदाहेमे द्यावापृथिवी विश्वरूपेऽइति द्यावापृथिवी हि प्रजापतिरा मा गन्तां पितरामातरा चेति मातेव च हि पितेव च प्रजापतिरा मा सोमो ऽअमृतत्वेन गम्यादिति सोमो हि प्रजापतिः ॥ २६ ॥

स अश्वानवघ्रापयति । वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजो ऽन्नजित इत्येवैतदाह वाजꣳ ससृवाꣳस इति सरिष्यन्त इति वा ऽअग्र ऽअथाह सरिष्यन्त इव हि तर्हि भवन्त्यथाह ससृवाꣳस इति ससृवाꣳस इव ह्यत्र भवन्ति तस्मादाह ससृवाꣳस इति बृहस्पतेर्भागमवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति निमृजाना

इति तद्यजमाने व्वीर्यं दधाति तद्यदश्वानवघ्रा-
पयतीम मुज्जयानीति वा ऽअश्वे ऽवघ्रापयत्य-
थाचम मुदजैष मिति तस्माद्वा ऽअश्वानवघ्रा-
पयति * ॥ २७ ॥

अथैतेषा माजिसृताꣳ † रथानाम् । एक-
स्मिन् वैश्यो वा राजन्यो वोपास्थितो भवति स व्वेदेरुत्तरायाꣳ श्रोणा ऽउपविशत्यथाध्वर्युश्च यजमानश्च पूर्व्वया द्वारा मधुग्रह मादाय निष्क्रामतस्तं वैश्यस्य वा राजन्यस्य वा पाणावाधत्तो ऽथ नेष्टापरया द्वारा सुराग्रहाणामादाय निष्क्रामति स जघनेन शालां पर्य्येत्यैकं वैश्यस्य वा राजन्यस्य वा पाणावादधदाहानेन त्वा ऽमुं निष्क्रीणामीति सत्यं वै श्रीर्ज्योतिः सोमो ऽनृतं पाप्मा तमः सुरा सत्य मेवैतच्छ्रियं ज्योतिर्य्यजमाने दधात्यनृतेन पाप्मना तमसा वैश्यं विध्यति तैः स यं भोगं कामयते तं कुरुते ऽथैतꣳ सहिरण्यपात्र मेव मधुग्रहं ब्रह्मणे

* ति'—इति क।

† 'माजिसृताꣳ'—इति ग, घ।

मेतदाह धावन्त्याजिं मा घ्नन्ति दुन्दुभीनभि साम गायति ॥ १७ ॥

अथैताभ्यां जगतीभ्याम् । जुहोति वानु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुः ॥ १८ ॥

स जुहोति । एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो ऽअपि कक्ष ऽआसनि । क्रतुं दधिक्रा अनु सꣳसनिष्यदत् पथा * मङ्काꣳस्यन्वापनीफणत् स्वाहा ॥ १९ ॥

उत स्म । अस्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः । श्येनस्येव ध्रजतो ऽअङ्कसम् परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहेति † ॥ २० ॥

अथोत्तरेण त्रिचेन । जुहोति वानु वा मन्त्रयते द्वयं तद्यस्माज्जुहोति वानु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुरेतानेवैतदश्वान् धावत उपवाजयत्येतेषु वीर्यं

* 'पथा'—इति ग, घ ।

† 'स्वाहीति'—इति ख, 'स्वाहेति'—इति ग ।

दधाति तिस्रो वा ऽइमाः पृथिव्य इय महैका द्वे ऽअस्याः परे ता एवैतदुज्जयति ॥ २१ ॥

सो ऽनुमन्त्रयते। शं नो भवन्तु व्वाजिनो हवेषु देवताता मितद्रवः स्वर्काः *। जम्भयन्तो ऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद् युयवन्नमीवाः ॥ २२ ॥

ते नो ऽअर्वन्तः। हवनश्रुतो हवं विश्वे शृण्वन्तु व्वाजिनो मितद्रवः। सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे † ॥ २३ ॥

व्वाजे व्वाजे ऽवत। व्वाजिनो नो धनेषु विप्रा ‡ अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति § ॥ २४ ॥

अथ बार्हस्पत्येन चरुणा प्रत्युपतिष्ठते। त मुपस्पृशत्यन्नं वा ऽएष उज्जयति यो व्वाजपेयेन

---

* स्वर्का — इति ग घ।

† रे — इति ग घ।

‡ व्विप्रा — इति क।

§ ॰रिति — इति ख, ॰रिति — इति ग, घ।

ददाति तं ब्रह्मणे ददद्मृतमायुरात्मन् धत्ते ऽमृतं ह्यायुर्हिरण्यं तेन स यं भोगं कामयते तं कुरुते ॥ २८ ॥ ५ ॥

॥ इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् [१.५.] ॥

विहितं वाजिसामान मनूद्य प्रशंसति— "तद् यदिति। वाजिसाम्नेन भूर्लोकं जितवान् भवतीत्यर्थः ॥ १। अथ सामगानं यूपारोहणं च सार्थवादं विधत्ते— "अथ यद् ब्रह्मेत्यादि। 'ब्रह्मा' नामर्त्विक् 'नाभिदघ्ने' नाभिसमाने 'उच्छ्रिते' उन्नते 'रथचक्रे' स्थित्वा 'साम' गायेत्। 'एतेन' भूम्यूर्ध्वप्रदेशयोर्मध्यदेशे गीयमानेन साम्ना 'अन्तरिक्षलोकं' जितवान् भवति। चक्रादुन्नतस्य सप्तदशारत्निपरिमितस्य यूपस्यारोहणेन तृतीयलोकमेव स्वाधीनं कृतवान् भवति ॥ १ ॥

ब्रह्मणो रथचक्रे गानं विहितम्, तत् आरोहणं मन्त्रेण न सम्भवतीति तदिदानीं विधत्ते— "स ब्रह्मेति †। तत्र वाजपेये द्वावधिकारिणौ, ब्राह्मणो राजन्यश्चेति; तत्र यजमानभेदेन मन्त्रभेदं विवक्षुः प्रथमं ब्राह्मणपक्षे मन्त्रं पठति— "देवस्याहमिति ‡। 'सत्यसवस' सत्यानुज्ञानस्य 'सवितुः' सर्वस्य प्रसवितुर्देवस्य 'सवे' प्रसवे अनुज्ञायां वर्तमानो हि 'बृह-

---

* अत्र निमन्त्रेण पठ्यते, पठ्यते वा ब्रह्मसामनिक्रया गीयं गायन्ति। यदोधस्व वाजिसाम्नेनोच्यते —इति का॰ श्रौ॰ १४ ३ २१ सूत्रवृत्तिः।

† का॰ श्रौ॰ सू॰ १४ ५ १२।

‡ मा॰ सं॰ ९. १०. १।

सवितुः' सम्बन्धिनः 'उत्तमम्' उत्कृष्टं 'नाकं' स्वर्गं 'रुहेयम्' आरोहणं करवै। रुहेराशीर्लिङि, 'लिङाशिष्यङ्'-इत्यङ्*। "ब्रह्मेति। देवानां मध्ये बृहस्पतिर्ब्राह्मणजातिः ॥ २ ॥

राजन्यपक्षेऽपि मन्त्रं पठति— "अथ यदीति। बृहस्पतेरित्यस्य स्थाने इन्द्रस्येति विशेषः†। अर्थस्तु पूर्ववत्। "क्षत्रं वीन्द्र इति। देवानां मध्ये इन्द्रः क्षत्रियजातिः ॥ ३ ॥

विविक्तस्य ब्रह्मकर्तृकस्य सामगानस्य त्रित्वमङ्गत्वं विधत्ते— "त्रिः सामेति‡। 'त्रिः' त्रिवारं त्रित्वर्थः। "देवस्य वयम्" -इति, "रुहेम"-इति च बहुवचनान्तः शाखान्तरीयो मन्त्रः। तथैव कात्यायनोऽपि सूत्रयामास— "देवस्य वय मिति ब्रह्मा रथचक्रं सारोहति"-इति§। अत्र "अहम्"-इति, "रुहेयम्"-इति च एकवचनान्तत्वेन सचितायां शाखाभावात्‖ न तत्-स्त्वेव शाखायां विहित मित्यविरोधः।

प्रसङ्गाद् ब्रह्मणो रथावरोहणं वक्ति— "विरश्मिगीयावरोहतीति। प्रयोगक्रमस्तु सूत्रे दर्शित ¶— "ब्रह्मा त्रि साम गायति, दुन्दुभीन् वादयति, वयस्य इति प्रत्यृचं जुहोति"-

---

* पा० सू० ३ १ ८६।

† वा० सं० ६ १० २। का० श्रौ० सू० १४ ३ १६।

‡ का० श्रौ० सू० १४ ४ १।

§ का० श्रौ० सू० १४ ३ १२। अस्मद्दृष्टपुस्तके तु देवस्याह मित्येकवचनान्त एव पाठः।

‖ माध्यन्दिनीया मिति यावत्।

¶ का० श्रौ० सू० १४ ४ १—८। अत्र तु कात्यायनस्य च देवस्याह मिति पाठे सम्मतिः सौत्रमा साम्यमेवेति ध्येयम्।

इत्युपक्रम्य, "प्रदक्षिणं कृत्वा यन्ति, यागतेषु ब्रह्मावरोहति देवस्याह मिति"–इति ।

अत्रापि पूर्ववद् यजमानभेदेनावरोहणं मन्त्रभेदं दर्शयति —"देवस्याह मिति *। "वरुण मिति, यद्येतुं हि "क्ष-त्र इ वर्धिष्य."–इति † पुरडादेयः ॥ ४, ५ ॥

विधत्ते— "अथ समदयोति। समदयसञ्ज्ञकाम् 'दुन्दु-भीम्' 'पशुवेष्यन्तं' वेदिसमीपे 'प्रतीचः आग्नीध्रीयात्' आग्नी-ध्रीयपश्चिमप्रदेशे स्थिताम् 'अभिघ्नन्ति' वादयितुं मारयन्ती-त्यर्थ.। अत्र सूत्रम्— "समदय दुन्दुभीनाघ्नन्त्युत्तरवेदि पश्चा-दाग्नीध्रात्"–इति ‡।

"एषा वा इत्यादिकस्याय मर्थः;— दुन्दुभीना नादस्य सर्वत्वात् परमवाक्त्वम्; अतो वाजप्रसवायत्युक्त्यर्थेऽतुदुन्दुभि वाद इत्यर्थ.। गत मन्यत् ॥ ६ ॥

विधत्ते— "अथैतेषा मिति। समदयाना दुन्दुभीना मध्ये एकं दुन्दुभिम् "इहसवि वाजम्"–इति वक्ष्यमाणेन मन्त्रेण समाहन्यात्। इतरान् योदय दुन्दुभीन् तूर्णी वादयेत्।' एकस्य समन्त्रकाहननेन सर्वेऽपि दुन्दुभयस्तन्न्यायेन सम-न्त्रकं मेवाहताः ताड़िता वादिताः स्युरित्यर्थः। अत्र सूत्रम् — "इहसवि वाज मित्येकां दुन्दुभि माहन्ति, तूष्णी मित-रान्"–इति § ॥ ७ ॥

---

* वा० सं० ९. १० २, ४।
† भा० मू० ३ १ ५९।
‡ का० श्रौ० सू० १४ ३ १४।
§ का० श्रौ० सू० १४ ३. १५।

हवनविधि मनूद्य मन्त्रं * विधत्ते— "स धाङ्क्षीति। हे 'बृहस्पते।' 'वाजम्' अन्नं 'जय'। हे दुन्दुभयः। 'बृहस्पतये' बृहस्पतेरर्थाय 'वाचं' सत्यभूता यूयं 'वदत'। 'बृहस्पतिं' 'वाजम्' अन्नं 'जापयत' अन्नविषयं जयं प्रापयत। बृहस्पतिः स्वय मेव वाजं जयति, तं जापयत। जयतेर्णन्तस्य "क्रीङ्-जीनां णौ ‡" –इत्यात्वे कृते पुगागमः ॥ ८ ॥

राजन्ययज्ञभेदं दर्शयति— "अथ यदीति। बृहस्पतिस्थाने इन्द्र पदं प्रक्षेपणीयम् ☆। अन्यत् समानम् ॥ ९ ॥

विधत्ते— "अवैतेष्विति। 'दधेषु' 'आजिसृत्सु' लक्ष्यस्थानं प्रति धावत्सु गतवत्सु 'पुनराव्रतेषु' पुनरागतेषु सत्सु 'एतेषां' एवैषां 'दुन्दुभीनां' मध्ये 'एकं' प्राग् 'यजुषा' मन्त्रेण 'उपावहरति' अवरोहयेत्; अन्येषाम् तूष्णीं मित्यर्थः ¶ ॥ १० ॥

"स उपावहरतीति। अवरोहणमन्त्रस्याय मर्थः ‖ ;— हे दुन्दुभयः। 'वः' युष्माकं सम्बन्धिनी 'सा सत्या' 'संवाक्' समुदिता वाक् 'अभूत्', 'यया' वाचा 'बृहस्पतिं' 'वाजम्' 'अजीजपत' अन्न विषयं जयं प्रापयत। एतस्यैव पुनर्वचनं सञ्जीजपतेति वाक्यम्। हे 'वनस्पतय।' कार्यं कारणशब्दः, वानस्पत्या दुन्दुभयः 'विमुच्यध्वम्' विमुक्ता भवतेति ॥ ११ ॥

"अथेति। अत्रापि पूर्ववद्यज्ञभेदो "यदि राजन्य इत्यादिना प्रदर्शितः ¶ ॥ १२ ॥

अथैवैयुक्तस्य रथस्य यजमानकर्तृकं समन्त्रक मारोहणं विधत्ते —अथ य मिति । उक्तं सप्तदशप्रव्याधान्तपथाजिधावनं कर्तुम् 'आतिष्ठति' आरोहेदित्यर्थः । अत्र सूत्रम्— "देवस्याह मिति यजुर्युक्त मारोहति यजमानः"–इति * । आरोहणमन्त्रस्यायमर्थः † ;—'सत्यसवसः' यथार्थप्रसवस्य 'सवितुर्देवस्य' 'सवे' अभ्यनुज्ञायां वर्त्तमानः 'अहम्' 'वाजजितः' अन्नस्य जेतुः 'बृहस्पतेः' सम्बन्धि 'वाजम्' अन्नम् 'जेषम्' जीयास मिति । सवितुरनुज्ञयैव प्रवर्त्तमाने वाजोत्पत्तौ भवतीत्यर्थः ॥ १५ ॥

इम मर्थं बृहस्पतिदृष्टान्तेन द्रढयति— "तद्यथैवाद इत्यादिना । 'अदः' अमुष्मिन् विप्रकृष्टे काले, आजिधावनकाले 'बृहस्पतिः' 'सवितारम्' अनुससार । "एव मेवैष इत्यादिना दार्ष्टान्तिके योजयति ॥ १६ ॥

विधत्ते— "अथ यदीति । 'अथ' यजमानस्य रथारोहणा नन्तरम्, 'अध्वर्योः' शिष्यो ‡ वा, अन्यो 'ब्रह्मचारी' वा 'यत्' वक्ष्यमाणं मन्त्रम् 'अधीयात्' स्मरेत्; 'सः' त मेव रथम् 'अभ्यारुह्य' तूष्णी मारुह्य "वाजिनः इति" मन्त्रं § 'वाचयति', यजमान मिति शेषः । अत्र सूत्रम्— "अध्वर्योर्वा तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय"–इति, "वाजिन इति वाचयति"–इति ‖ च । हे 'वाजिनः' अश्वाः । 'वाजजितः'

* का० श्रौ० सू० १४ ३ १८ ।
† वा० सं० ९. १३ १ ।
‡ 'अध्वर्युशिष्यो —इति क, ग ।
§ वा० सं० ९. १९. २ ।
‖ का० श्रौ० सू० १४ ३ १९, २२ ।

अश्वस्य जेतारः 'अध्वन्' मार्गान् 'स्कभ्नुवन्तः'। "स्कभि स्तभि प्रतिबन्धे" *। स्कम्भनं नाम वेगेनाक्रमणम्, मार्गान् पृष्ठतः कृत्वा पुरोगमनम्। तत् कुर्वन्तः, सोऽभयस्तो वा 'योजना' योजनानि 'मिमानाः'। "माङ् माने" †। शीघ्रगत्या परिच्छिन्दन्तः शीघ्रगामिनः, 'काष्ठाम्' आजिधावनस्यावधिभूताम्। "आक्रान्तोऽपि काष्ठेत्युच्यते"-इति ‡ हि यास्कः। सप्तदशप्रव्याधान्ते निर्मिता औदुम्बरी शाखा लक्ष्यभूतस्वर्गात्मिकाम्; "स्वर्गो वै लोकः काष्ठा"-इति श्रुतेः §। वेगेन गच्छथेति।

स मिम' व्याचष्टे— "वाजिनोऽश्वा इति। "योजनशो हीति। लोके 'हि' अश्वाः 'योजनशः' एकैकं योजनं 'मिमानाः' परिच्छिन्दन्तो महान्तम् 'अध्वानं' 'धावन्ति' गच्छन्ति, एवं मदश्वा अपीति।

"यथैतानिति। अस्यायमर्थः;— 'अस्मिन्' आजिधावन मध्ये 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'एतान्' अश्वान् 'यथा' 'न हिंस्युः', तथा लक्ष्यस्थानं गच्छतेति।

विहितानामाजिधावनदुन्दुभ्याहननब्रह्मकर्तृकसामगानानां प्रयोगकालं विधत्ते— "धावन्त्याजिमिति। अत्र सूत्रम्— "अन्तेवासी वा वाचनाय"-इत्येतस्मादनन्तरम् "आजिं धावयन्ति, वाजिन इति वाचयति, ब्रह्मा त्रि. साम गायति, दुन्दुभीन् वादयन्ति"-इति ‖ ॥ १० ॥

---

* धा० पा० ३८७ धा०।
† दि० धा० २६ धा०। ‡ निरु० २ ५ १।
§ तै० ब्रा० १ ३ ६ ५।
‖ का० श्रौ० सू० १४ ३ १६, २१, २२ ४ १ ७।

'ये' 'अर्वन्तः' गतिकुशला अश्वाः, 'हवनश्रुतः' अस्मदाह्वान-श्रोतारो 'वाजिनः' अन्नवन्तोऽश्वाः सर्वेऽपि 'नः' अस्माकं 'हवम्' आह्वानम् अस्मद्वचनं 'शृण्वन्तु'। 'मितद्रवः' पूर्ववत्। 'सहस्रसाः' सहस्रोऽन्नस्य सम्भक्तारो दातारः। 'मेधसाता' यज्ञे। सुप आकारः *। 'सनिष्यवः' सनिं दानम् † अस्माकं इच्छन्तः। ईदृशाः 'ये' अश्वाः 'समिथेषु' सङ्ग्रामेषु 'महः' मंहितः महीः 'धनम्'। मह इति धनविशेषणं वा, महद्धनं 'जभ्रिरे' आहृतवन्तः। शृण्वन्त्विति पूर्वेणान्वयः ॥ २१ ॥

"वाजे वाजेऽवत इति ‡। तृतीयमन्त्रस्यायमर्थः;— हे 'वाजिनः' अश्वाः। 'वाजे-वाजे' तत्तदन्ननिमित्ते धननिमित्ते च 'नः' अस्मान् 'अवत'। 'विप्राः' मेधाविनः 'अमृताः' अमरणधर्माणः 'ऋतज्ञाः' ऋतं सत्यं गन्तव्यदेशं जानन्तः। तादृगश्वाभिमानिनो हे देवाः। 'अस्य मध्वः पिबत' इदं धावनात् पूर्वं यथावघ्रायमाणं मधुसमानं नैवारचरुमयं पिबत। पीत्वा च 'मादयध्वम्' हृष्टा भवत। ततः 'तृप्ताः' सन्तो 'देवयानैः पथिभिः' देवाधिष्ठितैर्मार्गैः अस्माभिराजिं प्रति 'यात' इति ॥ २४ ॥

विधत्ते — "अथ वार्हस्पत्येनेति §। 'प्रत्युपतिष्ठते' आजिधावनं कृत्वा तीर्थदेशं ‖ प्रत्यागच्छतोऽश्वान् प्रति नैवारचरुणा

---

* पा० सू० ७ १ ३९।
† सन्यदान—इति च।
‡ वा० सं० ९. १८. १।
§ का० श्रौ० सू० १४ ३ ११।
‖ इह चात्वालोत्करयोर्मध्यदेशस्तीर्थो ज्ञेयः।

अहं गच्छेदित्यर्थः। तस्य चरो मन्त्रं विधत्ते— "त सुपैति। तत् प्रशंसति— "अव वेत्यादिना। 'एता गतिम्' आजिधावनलक्षणां गत्वा चक्रपरिवर्तनेन एतदाजिधावनोर्जित मन्त्र मैवात्मनि निहितवान् भवतीत्यर्थः ॥ २५ ॥

उपस्पर्शने मनुष्य मन्त्रं विधत्ते— "स उपैति। मन्त्रस्याय मर्थः * ;— 'वाजस्य' अन्नस्य 'प्रसवः' अभ्यनुज्ञा उत्पत्तिर्वा 'मा' मा 'आजगम्यात्' आगच्छतु। 'विश्वरूपे' नानारूपे 'इमे' 'द्यावापृथिवी' द्यावापृथिव्यौ प्रजापत्यात्मिके, तत्पुत्रत्वात् 'आगन्ताम्' आगच्छताम्। "पितरामातरा च छन्दसि"—इत्यानङ् † निपात्यते। अस्मदीयौ पिता माता च मां प्रत्यागताम्; चिरं जीवित्वा आगच्छताम्। यद्वा, द्यावापृथिव्यौ पितेति मातेति च परोक्षनाम्ना निर्देशः। तत्र पितृरूपा द्यौः, मातृरूपा पृथिवीति, "द्यौर्मे पिता पृथिवी माता"—इति श्रुते ‡। 'सोम' च 'अमृतत्वेन' देवत्वेन मां प्रति 'आगम्यात्' आगच्छतु; "अपाम सोमं अमृता अभूम"—इति § अन्यत्र श्रुतम्। मन्त्र प्रतिपाद्य मनुष्य द्यावापृथिव्यादिके प्रजापत्यात्मना स्तौति—"आ मा वाजस्येति। ॥ २६ ॥

विधत्ते— "त मन्वानिति ¶। 'तम्' उपस्थापित चषम्

* शुक्लयजुः वा० सं० ९. १९. १।
† पा० सू० ६. ३. ३३।
‡ ऋ० सं० १. १६२. ६।
§ ऋ० सं० ८. ४८. ३।
|| शा० ब्रा० ५. १९. २।
¶ का० श्रौ० सू० १४. ५. १२।

अपि च 'अस्य' यजमानस्य रथे नियुक्तस्य 'द्रवतः' गच्छतः 'तुरण्यतः' तूर्णं मध्वान मनुधावतस्य 'प्रगर्धिनः' अधिकं प्राप्तु मभिकाङ्क्षतोऽश्वस्य 'अङ्कसं' शृङ्गारचिह्नं* चमरचामरादिकं 'परि' सर्वमपि देहे वर्त्तमानम् अनुगच्छति। तत्र दृष्टान्तः — 'वेः' पक्षिणः 'पर्णं न' वातोद्धृतं पत्रम् इव। यथा त्वरया गच्छतः पक्षिणः पत्र उत्थितो गच्छन् भासतोपयते, तथेत्यर्थः। शीघ्रधावने श्येनो दृष्टान्त्यते— 'ध्रजतः' परिधावतः 'श्येनस्य इव' 'दधिक्राव्णः' धारकपर्वतादिसिक्रामिणोऽश्वस्य 'ऊर्जा' बलेन 'सह' 'तरित्रतः' स्वयं तरतोऽश्वस्येति योज्यः। 'स्वाहा' -इति पूर्ववत् ॥ २० ॥

कर्त्तव्यान्तरं विधत्ते— "पयोऽसरैवेति †। वक्ष्यमाणेन अनेन हवन मनुमन्त्रणं वा कुर्यात्। "इयं तदिति। अस्याय मर्थः— 'जुहोत्यनुमन्त्रयते वा'-इति यत्, तद् इयं सत्यानृतात्मकत्वेन द्विप्रकार मिति; "इयं वा इदं न तृतीय मस्ति, सत्यञ्चैवानृतञ्च"-इति श्रुतेः ‡। हवनानुमन्त्रणयो-रुभयत्रार्थवादवाक्यशेषः समान इत्याह— "यदि जुहोतीति। 'बन्धु.' वाक्यशेषः समानः; आगतमन्त्रकरणयोस्तु प्रकरणयोश्च हवनानुमन्त्रणयोस्तावकवाक्यशेषः समान इत्यर्थः। कः पुन-रसावित्याह—"एतामेवैतदिति। हवनानुमन्त्रणार्थवादवाक्यशेष ॥

"तिस्रो वा इत्यादिकं ग्रन्थेन त्रित्वसङ्ख्यार्थवादब्राह्मणम्। 'पृथिव्यादित्रय.'; "त्रयो वा इमे त्रिवृतो लोकाः"-इति

* 'शृङ्गारचिह्न'-इति च, छ।

† का॰ श्रौ॰ सू॰ १४ ४ २। 'अ-अन्दान जुहोति अनु मन्त्रयते वा'-इति तत्र वृत्तिः।

‡ श॰ ब्रा॰ १ १ १ ४।

एकैकस्य व्रह्मकाल्युतेः। तत्र 'इयं' परिदृश्यमाना भूमिः 'एका', 'अस्या' भूमेः 'परे' उपरि दृश्यमाने 'द्वे' पृथिव्यौ ; 'ताः' तिस्रो भूमीः हवकरणकेन होमेनानुमन्त्रणेन वा उज्जितवान् भवति ॥ २१ ॥

तत्रानुमन्त्रण मनूद्य मन्त्रद्वयं पठति— "शं नो भवन्तु" इति। मन्त्रद्वयस्योपलक्षकम् ; यथानुमन्त्रणानुवादत्वात्, मन्त्रान्ते हवनं वा कार्यम् ; वचनबलादित्यवगन्तव्यम् *। तत्र, प्रथममन्त्रस्याय मर्थः † ;— 'वाजिनः' अश्वाः 'हवेषु' यज्ञेषु, सङ्ग्रामेषु वा 'नः' अस्माकं 'शं भवन्तु' सुखप्रापका भवन्तु। 'देवताता' देवयोग्याः। यद्वा, देवास्तन्यन्ते विस्तार्यन्ते यत्र सा देवतातिर्यज्ञः, तस्मिन्। 'हवेषु' आह्वानेषु शं भवन्त्विति योजना। 'मितद्रवः' मितं अल्पं द्रवन्ति गच्छन्तीति मितद्रवः, 'स्वर्काः' शीघ्रधावनेन सुप्रशंसनीयाः 'अहिं' 'वृकं' 'रक्षांसि' सर्पवत् घातकादवत् बाधकान् राक्षसान् 'जम्भयन्तः' जम्भन्तः, वर्णव्यत्ययः, क्षोभयन्तः। 'सनेमि'–इति पुराणनाम ‡, इव 'तु' चिप्रवचनम्। शीघ्रम् 'अमीवान्' रोगान् 'अस्मत्' अस्मत्तः 'युयवन्' वियोजितवन्त इत्यर्थः ॥ २२ ॥

"ते नो अर्वन्तः" इति §। द्वितीयमन्त्रस्याय मर्थः ;—

---

* पूर्वकल्पे द्रष्टव्या। "अनुमन्त्रयते वा, जुहोति च त्रिभिः"— इति का० श्रौ० सू० १४ ४ ४, ५। 'च-शब्दात् जुहोति अनुमन्त्रयते वा'—इति च तत्र कर्कः।

† वा० सं० ९ १६ १।

‡ निघ० ३ २८ ४।

§ वा० सं० ९ १७ १।

'अश्वान्' अवघ्रापयेत्। तन्मन्त्रस्यायमर्थः ;— हे 'वाजिनः' अश्वाः ! 'वाजजितः' वाजस्यान्नस्य जेतारः, वाजं मर्यं जेतुमिति शेषः। 'सस्वांसः' आजिसरणं कृतवन्तः सन्तो 'बृहस्पतेः' सम्बन्धिनं 'भागम्' अन्नभागम् 'अवजिघ्रत' अवघ्राणं कुरुत। 'निमृजानाः' अवलेपनिमार्जनं कुर्वाणाः 'इति'। मन्त्रं पदशोऽनुद्य व्याचष्टे— "वाजिनो ह्यश्वा इति। सस्वांस इति भूतार्थविहितक्तवसुप्रत्ययेन प्रयोगस्याभिप्रायमाह— "सरिष्यन्त इति। पूर्वं आजिधावनप्रस्तावे अनारब्धेऽवघ्रापणं विहितम्; तन्मन्त्रे 'वाजं सरिष्यन्तः'-इति तु भविष्यन्तत्वेन प्रयुक्तम्; आजिधावनस्य करिष्यमाणत्वात्, अत्र तस्य कृतत्वात् तदन्ते विधीयमाने अवघ्रापणमन्त्रे सस्वांस इति भूतार्थवाचकत्वेन प्रयोगो युक्त इत्यभिप्रायः। निमृजाना इत्यस्य तात्पर्यमाह— "तद्यजमान इति। अवलेपनिमार्जनस्य वीर्यहेतुत्वात् 'तत्' तेन 'निमृजाना इति'-पदेन 'यजमाने' 'वीर्यं' स्थापितवान् भवति ॥

आजिधावनस्यादौ तदन्ते च विहितस्य अवघ्रापणस्य प्रयोजनभेदं दर्शयति— "तद्यदस्मानिति। 'अग्रे' पूर्वं वाजोज्जित्यर्थम्, अत्र जुज्जितस्य वाजस्य स्वाधीनकरणार्थम्; अतः पूर्वमिमं वाजं उज्जयानीति, अन्तेमं वाजमुदजैषमित्यर्थौ दर्शनाद् भूतार्थवाचि च पदं युक्तमित्यर्थः ॥ २७ ॥

सुराग्रहाणां मधुग्रहस्य च विनियोगप्रकारो माध्यन्दिने सवने वक्ष्यत इति द्वितीयब्राह्मणान्ते * प्रतिज्ञातम्, तमिदानीमवसरप्राप्तं दर्शयितुमाह— "अथैतेषामिति। 'आजिसृत्याम्' आजिं प्रति सरिष्यतां रथानां यजमानरथार्थितरिक्तानाम्

* 'द्वितीयब्राह्मणे'—इति ज। १६पृ० १७पं० (२.१८.) द्रष्टव्यम्।

मेकस्मिन् रथे वैश्यराजन्ययोरन्यतरः सुराग्रहान् प्रतिग्रहीतु-मासीनो भवति। अत्र कात्यायनो यजुर्युक्तरथारोहण मध्वर्यु-शिष्यस्य यजमानवाचनार्थं मुक्त्वा * सूत्रयामास— "इतरेषा-मेकस्मिन् राजन्यो वैश्यो वा सौरप्रतिग्रहायाजिनं शीर्णं यन्ति" -इति †।

"स वेदेरिति। अस्यायमर्थः ;— 'सः' वैश्यराजन्ययो-रन्यतरो रथादवरुह्योत्तरस्यां 'श्रोणौ' उपविशेत्। 'अथ' अनन्त-रम् अध्वर्युयजमानौ 'पूर्वया द्वारा' हविर्धानस्य पूर्वद्वारेण 'मधु-ग्रहम्' आदाय, निष्क्रम्य, वैश्यराजन्ययोरन्यतरस्य हस्ते निद-ध्याताम् ‡। 'नेष्टा' अपि हविर्धानस्य पश्चिमद्वारेण 'सुराग्रहान् आदाय' निष्क्रम्य 'शालां जघनेन' पत्नीशालायाः पश्चिम प्रदेशादागत्योत्तरस्या वेदिश्रोण्यामुपविश्य तयोरन्यतरस्य पाणा-वेकं सुराग्रहं प्रयच्छन् "अनेन त इमं निष्क्रीणामि"-इति वाक्यं पठेत् §। 'अनेन' सुराग्रहेण 'ते' तव सम्बन्धिनम् 'इमं' मधुग्रह 'निष्क्रीणामि' स्वाधीनं करोमीति तस्यार्थः।

तमिमं निष्क्रयं प्रशंसति— "सत्यं वै श्रीरिति। सोमस्य सत्यात्मकत्वम्, इतरस्य अनृतात्मकत्वं च प्रागेव व्याख्या-तम् ‖। सुराग्रहप्रतिग्रहीतारं 'वैश्यं' 'विध्यति' बाधते। अनेन

* "देवस्याहमिति ( वा० ९ १३ ) यजुर्युक्त मारोहति यज-मानः, अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय"—इति का० श्रौ० सू० १४. ३. १८, १९ द्रष्टव्यम्।

† का० श्रौ० सू० १४ ३ २०, २१।

‡ का० श्रौ० सू० १४ ४ १५।

§ का० श्रौ० सू० १४ ४ १६।

‖ पृ० २२ पं० १३ द्रष्टव्यम्।

राजन्य च विप्रशीलयोर्नम्य , वैश्यराजन्ययोरन्यतरस्य हस्ते प्रदानस्योक्तत्वात् ।

प्रतिग्रहीतॄणां तु सुरापहाणां मैच्छिकव्यवहारं दर्शयति— 'तं स य भोग मिति। प्रतीतस्य मधुग्रहस्य दान विधत्ते— "प्रच्छेत मिति । 'एत' मधुग्रह हिरण्यपात्रसहित ब्राह्मणे दद्यात् *। आपस्तम्बेन सौवर्णपात्रपरिमाण मुक्तम् — "ब्राह्मणे ददाति हि मधुग्रहानञ्च सौवर्ण शतमानस्य कृतम्"-इति †।

तद् दान प्रशसति— "तं ब्राह्मणे इति। 'तं' मधुग्रह 'ब्राह्मणे' 'ददत्' प्रयच्छन्। शतौ प्रत्यय । हिरण्यदानेन 'अमृतम्' अमरणशीलम् 'आयु' 'आत्मन्' आत्मनि निहित वान् भवतीति। ब्राह्मणप्रतिग्रहीतस्य मधुग्रहस्यैच्छिक व्यवहार दर्शयति— "स य भोग मिति। "ब्राह्मणे मधुग्रह ददाति सपात्रम्, त स यथेष्ट कुरुते"-इति ‡ हि कात्यायनेन सूचित मिति ॥ २८ ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य पञ्चम ब्राह्मणम् ॥

---

* का० श्रौ० सू० १४ ४ १७

† आप० श्रौ० सू० १८ ५ ५। मधुग्रहानञ्च —इति तत्रत्यपाठ ।

‡ का० श्रौ० सू० १४ ४ १७ १८ ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं श्रीसहस्रं कनककल्पतरुलापुरुषौ स्वर्णगर्भम् ,
सप्ताम्भोधीन् * पञ्चसीरी † त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रा रुक्मवाजिद्विपरथविततयो माधवः ‡ मिश्रधार्यौ § ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुलं स्वर्णजं स्वर्णसुख्यः ,
कार्पासीयं क्षमावान् गुडकृत मकडो ‖ राजतं राजपूज्यः ।
साज्यौतं प्राज्यजन्मा ¶ लवणज मल्पः शार्करं चार्कतेजाः ,
रत्नाढ्यो रत्नकूप गिरि मकृत मुदा पादपाश्विप्रणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायः समाप्तः ॥ १ ॥

---

* 'सप्ताब्धीन्'—इति ठ (१)। † 'सप्तसीरीं'—इति ठ।
‡ 'माधवः' स्यात्। § स्यात् 'मिश्रधार्यौ'।
‖ मकड—इति ठ। ¶ 'प्राज्यबुद्धिः'—इति ठ।
(१) ठ इति प्रथमकाण्डीयसम्पादकोक्तिः निम्न द्रष्टव्यम्।

( अथ द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् । )

अथ स्रुवं चाज्यविलापनीं चादाय। आह-वनीयमभ्येति स एता द्वादशाप्रीर्जुहोति वा व्याघयति वा यदि जुहोति यदि व्याघयति समान एव बन्धुः ॥ १ ॥

स जुहोति। आपये स्वाहा स्वापये स्वाहा-ऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहा-ऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनंशिनाय स्वाहा विनंशिन ऽआन्त्यायनाय स्वा-हाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहा-ऽधिपतये स्वाहेत्येता द्वादशाप्रीर्जुहोति द्वादश वै मासा * संवत्सरस्य संवत्सरः प्रजापतिः प्रजा-पतिर्यज्ञस्तद्यैवास्याप्रियो सम्पत् ता मेवैतदुक्थयति ता मात्मन् कुरुते † ॥ २ ॥

अथ षट् कृत्वी। जुहोति वा व्याघयति वा यदि जुहोति यदि व्याघयति समान एव बन्धुः ॥ ३ ॥

---

* मासा —इति ग घ । † कुरुते—इति ग घ ।

स व्याचयति * । आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामित्येताः षट् कॢप्तीर्व्याचयति षड् वा ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्य कॢप्तिर्या सम्पत्ता मेवैतदुज्जयति ता मास्मिन् कुरुते ॥ ४ ॥

अष्टाश्रिर्यूपो † भवति । अष्टाक्षरा वै गायत्री गायत्रं मध्यन्दिनम्छन्दो देवलोक मेवैतेनोज्जयति सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा व्ययितो वा भवति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति ॥ ५ ॥

गौधूमं चषालं भवति । पुरुषो वै प्रजापतेर्नेदिष्ठꣳ सो ऽय मत्वगेते वै पुरुषस्यौषधीनां नेदिष्ठतमा यद्गोधूमास्तेषां न त्वगस्ति मनुष्यलोक मेवैतेनोज्जयति ॥ ६ ॥

गर्त्तन्वान् यूपो ऽतीत्वाग्यो भवति । पितृ

* ति—इति क । † अष्टा०—इति ग, घ ।

देवल्लो वै गर्त्तः पितृलोक मेवैतेनोज्जयति समु-
द्रवारन्निर्भवति सप्तदशो वै प्रजापतिस्तत् प्रजा-
पति मुज्जयति ॥ ७ ॥

अथ नेष्टा पत्नी मुदानेष्यन् । कौशं वासः
परिधापयति कौशं वा चण्डातक मन्तरं दीक्षित-
वसनाञ्जघनार्द्धो वा ऽएष यज्ञस्य यत् पत्नी ता
मेतत् प्राचीं यज्ञं प्रसादयिष्यन् भवत्यमित्रं वै
पत्न्या अमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भा-
स्तद्यदेवास्या अमेध्यं तदेवास्या एतद्दर्भैर्मेध्यं कृत्वा-
ऽथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नी
मुदानेष्यन् कौशं वासः परिधापयति कौशं वा
चण्डातक मन्तरं दीक्षितवसनात् ॥ ८ ॥

अथ निश्रयणीं * निश्रयति । स दक्षिणत
उदङ् रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वे-
वोदङ् रोहेत् तथा ह्युदग् भवति † ॥ ९ ॥

स रोक्ष्यन् जाया मामन्त्रयते । जाय ऽएहि
स्वो रोहावेति रोहावेत्याह जाया तद् यज्जाया

* निश्रेणीं – इति मा० मक्षम इति डा० वेबर, ।
† 'भवति – इति ग घ ।

मामन्त्रयते ऽर्द्धो ह वा ऽएष आत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत् प्रजायते ऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दते ऽथ प्रजायते तर्हि हि सर्व्वो भवति सर्व्व एतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते ॥ १० ॥

स रोहति । प्रजापतेः प्रजा अभूमेति प्रजापतेर्ह्येष प्रजा भवति यो वाजपेयेन यजते * ॥ ११ ॥

अथ गोधूमानुपस्पृशति † । स्वर्देवा अगन्मेति ‡ स्वर्ह्येष गच्छति यो वाजपेयेन यजते ॥ १२ ॥

तद्यद्गोधूमानुपस्पृशति § । अन्नं वै गोधूमा अन्नं वा ऽएष उज्जयति यो वाजपेयेन यजते ऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्न

---

* यजत — इति क ख ।

† ०ति — इति ग घ ।  ‡ ०ग्मेति — इति क,

§ ०ति — इति क  ०ति — इति ग, घ ।

मुदजैषीत्तेनैवैतदेतां गतिं गत्वा संस्पृशते तदात्मन् कुरुते तस्माद्गोधूमानुपस्पृशति* ॥ १३ ॥

अथ शीर्ष्णा यूप मत्युज्जिहीते। अमृता अभूमेति देवलोक मेवैतेनोज्जयति † ॥ १४ ॥

अथ दिशो ऽनुवीक्षमाणो जपति। अस्मै वो ऽस्त्विन्द्रिय मस्मै नृम्ण मुत क्रतुरस्मै वर्चांसि सन्तु व इति सर्वं वा ऽएष इद मुज्जयति यो वाजपेयेन यजते प्रजापतिं ह्युज्जयति सर्वं मु ह्येवेदं प्रजापतिः सो ऽस्य सर्वस्य यश इन्द्रियं वीर्यं ‡ संवृज्य तदात्मन्धत्ते तदात्मन् कुरुते तस्माद्दिशो ऽनुवीक्षमाणो जपति § ॥ १५ ॥

अथैन मूषपुटैरनूदस्यन्ति। पशवो ऽवा ऽऊषा अन्नं वै पशवो ऽन्नं वा एष उज्जयति यो वाजपेयेन यजते ऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद् यदेवैतदन्न मुदजैषीत् तेनैवैतदेतां गतिं

---

* °स्पृशति —इति क।  † '°ज्जयति —इति क।
‡ इन्द्रियं वै वीर्यं —इति क पुस्तके।
§ '°जपति —इति क।

गत्वा सर्ट्स्पृशते तदात्मन् कुरुते तस्मादेन मुप पुटैरनूदृश्यन्ति * ॥ १६ ॥

आश्वत्थेषु पलाशेषूपनद्धा भवन्ति। स यदे-वादो ऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्र-यत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति विशो ऽनूदृश्यन्ति विशो वै मरुतो ऽन्नं विशस्त-स्माद्विशो ऽनूदृश्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथेमा मुपावहमाणो जपति ‡। नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इदूति बृहस्पतेर्ह वा ऽअभिषिषिचानात् पृथिवी बिभयाञ्चकार महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै मायं नाव-दृणीयादिति बृहस्पतिर्ह पृथिव्यै बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेय मकुरुत न हि माता पुत्रट्ठ हिनस्ति न पुत्रो मातरम् ॥ १८ ॥

---

* ०दृश्यन्ति—इति क। † 'मुज्जयति'—इति क।
‡ जपति——इति पाठ ग पुस्तके।

बृहस्पतिसवो वा ऽएष यद्वाजपेयम्। पृ-
थिव्यु हैतस्माद्बिभेति महद्वा ऽअयमभूद्यो ऽभ्य-
षिचि यद्वै मायं नावदृणीयादित्येष उ हास्यै
बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्र-
धेयं कुरुते न हि माता पुत्रं हिनस्ति न
पुत्रो मातरम् ॥ १९ ॥

अथ हिरण्य मभ्यवरोहति। अमृत मायुर्हिरण्यं
तदमृत ऽआयुषि प्रतितिष्ठति * ॥ २० ॥

अथाजर्षभस्याजिन मुपस्तृणाति। तदुपरिष्टाद्रुक्म
मिदधाति त मभ्यवरोहतीमां चैव † ॥ २१ ॥

अथास्मा ऽआसन्दी माहरन्ति उपरिसद्यं वा
ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेन मुप-
र्यासीन मधस्तादिमाः प्रजा उपासते तस्मादस्मा
ऽआसन्दी माहरन्ति ‡ ॥ २२ ॥

औदुम्बरी भवति §। अन्नं वा ऽऊर्गुदुम्बर
ऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति

---

* 'तिष्ठति'—इति क। † 'चैव'—इति ग, घ।
‡ 'आहरन्ति'—इति क। § 'भवति'—इति क।

ता मध्येन हविर्द्धाने जघनेनाहवनीयं निद-
धाति * ॥ २३ ॥

अथाजर्षभस्याजिन मास्तृणाति। प्रजापति-
र्वा एष यदजर्षभ एता वै प्रजापतेः † प्रत्यक्ष-
तमां यदजास्तस्मादेतास्त्रिः संवत्सरस्य विजाय-
माना द्वौ त्रीनिति जनयन्ति तत् प्रजापति
मेवैतत् करोति तस्मादजर्षभस्याजिन मास्तृ-
णाति ॥ २४ ॥

स आस्तृणाति। इयं ते राडिति राज्य
मेवास्मिन्नेतद् दधात्ययैन मासादयति यन्तासि यमन
इति यन्तार मेवैन मेतद् यमन मासां प्रजानां
करोति ध्रुवोऽसि धरुण इति ध्रुव मेवैन मेतद्-
धरुण मस्मिंल्लोके करोति कृष्यै त्वा क्षेमाय
त्वा रय्यै त्वा पोषाय त्वेति साधवे त्वेत्ये-
वैतदाह ॥ २५ ॥ ६ ॥

॥ इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् [२.१.] ॥

* 'निदधाति'—इति क, ख।
† प्रजापति'—इति क।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्यायस्य प्रथमब्राह्मणे यूपारोहण मुच्यते। तत्र प्रथम माप्तिहोमं विधित्सुराह— "अथ स्रुव मिति। आज्यं विलाप्यतेऽस्या मित्याज्यविलापनी स्थाली; स्रुवपर्णं स्रुक्पर्णमित्यर्थम्। अत्र सूत्रम्— "द्वादश स्रुवाहुतीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं, वाचयति वा"—इति *। होमं विधत्ते— "स एता द्वादशेति। द्वादशसंख्याकाः आप्तिसाधनत्वादाप्त्याख्याः आज्याहुतीर्जुहुयात्। "आपये स्वाहा"—इत्याप्तिविशिष्टमन्त्रयोगात् प्राणभृत उपदधातीतिवत् आप्त्यनामिप्तसमुदाये आप्तिशब्दः। विकल्पेन यजमानवाचनं विधत्ते— "वाचयति वेति। आप्तीर्जुहुयाद्, यजमानं वा वाचयेदित्यर्थः। अत्रोभयत्रार्थवादवाक्यशेषः, तमाह इत्याह— "यदि जुहोतीति। 'मन्वः' वाक्यशेषः, "द्वादश वै मासाः"—इत्यादिना गम्यते † ॥ १ ॥

होममन्त्रेषु द्वादश मन्त्रान् विधत्ते— "स जुहोत्यापये स्वाहेति ‡। संवत्सरस्य यज्ञात्मकप्रजापतेरेतानि नामानि। आप्नोतीत्याप्तिः, तस्मै 'स्वाहा' सुहुत मस्तु। 'स्वापये' शोभन माप्नुवते देवाय। 'अपिजाय' अनु जाताय। 'क्रतवे' सङ्कल्पाय, यज्ञाय वा। 'वसवे' वासकाय। अह्नाम्पतिः अहर्पतिः संवत्सरः, तस्मै। "मुह वैचित्त्ये" §, अपकर्षु प्रजानते 'मुग्धे'.

* का० श्रौ० सू० १४. ५. ३।

† इत उपरिष्टादेव कण्डिकायाम् ( ८६ पृ० ११पं० = ९४पृ० ११पं० )।

‡ वा० सं० ९. २०. १—११।

§ दि० प० ६१ धा०।

दिवसाय ; 'षष्ठे सुम्भाय'—इत्येकं नाम। एवमुत्तरत्रापि विशेषणयुक्त मेकैकं नाम। 'वैनंशिनाय' विनाशयुक्तेषु हितकारित्वेन वसतीति वैनंशिनः, विनंशिनः पुत्रो वा वैनंशिनः, तस्मै। एवमुत्तरत्राप्यपत्यार्थे प्रत्यय इति वेदितव्यम्। 'विनंशिने' सनुविनाशकाय। अन्त्ये अयने भवः आन्त्यायनः, अन्त्यायनस्य पुत्राय वा, तस्मै। 'आन्त्याय' अन्ते भवाय 'भौवनाय' भुवनस्यापत्याय। 'भुवनस्य पतये'—इत्येकं नाम, भुवनस्य पतिः प्रजापतिः, "प्रजापतिर्वै भुवनस्य पतिः"—इति * हि तैत्तिरीयकम्। तथा 'अधिपतये'—इति, अधिपतिः प्रजापत्यात्मको वाजपेययज्ञः। अत्र स्वाहान्त एकैको मन्त्र इत्यर्थः।

आहुतिगतां द्वादशसङ्ख्यां प्रशंसति— "द्वादश वै मासा इति। अर्थ आवपनेयो होमवापनयोरुभयोरपि समानः— "तयैवाप्तिरिति। 'मास' संवत्सरस्य प्रजापत्यात्मकस्य यज्ञस्य 'या' 'आप्तिः' सर्वात्मकत्वेन व्यापकशक्तिः, 'या' 'सम्पत्' संवत्सरसमृद्धिः, सर्वात्मकता, ता मेता मुभयी मेवैताभिर्होमैर्जितवान् भवति; जित्वा च 'ताम्' 'आत्मनि' स्वस्मिन् कृतवान् भवति ॥ २ ॥

विधत्ते— "अथ यद् कृसीरिति †। 'कृसीः' कृषिधातुनिष्पन्नशब्दयुक्तमन्त्रकारयित्वा आहुतीर्जुहुयात्। मन्त्रावा वाचनं कार्यं मिति वा ॥ ३ ॥

---

* तै० सं० १ ७ ८ ६ ४ ७ ११ २, ५ ३ ३ १६, तै० ब्रा० १ ३ ७। श० सं० ४ ५३ १प्रभृतिष्व द्रष्टव्यम्।

† "धटकोचरा."—इति का० श्रौ० सू० १४ १ २। "कुदोति वाचयति वा"—इति मत इति.।

वाचनं मनूद्य मन्त्रान् विधत्ते— "स वाचयतीति। अत्र वाचनविवक्षया मन्त्रान्ते स्वाहाशब्दो न प्रयुक्तः; वचनबलाद् हवनं वा कार्यम्, तदा स्वाहाशब्दः प्रयोक्तव्यः। मन्त्रार्थस्तु— 'आयुः' मदीयं, 'यज्ञेन' वाजपेयाख्येन 'कल्पतां' समर्थं भवतु। 'पृष्ठं' रथन्तरादि; यद्वा 'पृष्ठं' वंशवदायुःप्राणादेराधारभूतो मध्यदेहः। 'यज्ञः' विष्णुः। अन्यत् स्पष्टम् *।

ता निमाः षट्संख्या प्रशंसति— "षड् वा ऋतव इति। हवनवाचनयोरयं वाक्यशेषः समान इत्यर्थः। "तद् यैवास्य क्लृप्तिरित्यादि, पूर्ववद् योज्यम् ॥ ४ ॥

क्लृप्तिवाचनमन्त्रतदर्थाभिज्ञस्य यजमानस्य यूपारोहणं विवक्षुरादौ स्वर्गत्वेन निरूपयिष्यमाणस्य यूपस्य प्राकृतं गुणमनुवदति— "अष्टाश्रिर्यूप इति। अश्रिगतामष्टसंख्यां प्रशंसति— "अष्टाक्षरेति। यतः '[illegible] छन्द गायत्रम्' ततस्तद्रूपत्वाद् देवलोकजयहेतुरष्टाश्रिर्यूप इत्यर्थः। यूपस्य वेष्टनं विधत्ते— "सप्तदशभिरिति। 'वेष्टित' यथा यूपो न दृश्यते, तथाऽऽच्छादनं 'वा' कार्यम्, 'नियमितः' यूपस्यैकस्य प्रदेशे वाससा प्रव्ययनं † 'वा' कार्यम्। वासोगतां संख्यां प्राजापत्यात्मना स्तौति— "सप्तदश इति ‡ ॥ ५ ॥

अथास्तनामकस्य यूपशकलस्य दारुमयत्वापवादाय विधत्ते— "गोधूममिति। गोधूमपिष्टमयं चषालं कुर्यादित्यर्थः। "पुरुषो

---

* तेषट् मन्त्रास्तु वा० सं० ९ २१ १—६।

† 'प्रव्ययनं'—इति क ख, ङ।

‡ 'यूपवेष्टनं सप्तदशभिर्वस्त्रैर्दूष्यस्य वा परिव्ययकाले'—इति का० श्रौ० सू० १४ १ २०।

ष इत्यादि। अस्यायमर्थः,— 'पुरुषो' नु 'प्रजापतेः' 'नेदिष्ठम्' अन्तिकतमं वस्तु ; पुरुषसृष्टेः प्रथमभावित्वात् । 'सोऽयम्' 'यजमानः' अञ्जल्यादिहस्त इव बाह्यत्वमधिगतः ; 'घोध-धीमा' मध्ये एते 'गोधूमाः' अपि 'पुरुषस्य' सन्निहिततमं वस्तु, तत्कारित्वात् । तेषां तु त्वगभावः प्रसिद्धः । अतो गोधूम-चषालकरणेन 'मनुष्यलोकमेव' जितवान् भवतीति * ॥ ६ ॥

तस्मिन् यूपे गुणविशेषं विधत्ते— "गर्तम्यानिति । गर्त-मान्, यूपस्याधो निखातप्रदेशः कार्यः । 'गर्तम्यान्' † "गर्तो गुट्"-इति ‡ अत्र गर्तात्परस्य मतुपो मुडागमो विहितः , व्यत्ययेनाकारान्तादपि भवति । 'गर्तोत्सापे.' खातपूरणाय , स्थूलाग्रप्रदेशो भवेत् । गर्तं पितृलोकात्मना प्रशंसति— "पितृदैवत्य इति । "पितृणा सदन मसि"-इत्यादिमन्त्रवर्णात् यूपावटस्य पितृदेवतास्थानत्वं प्रतीयते । अत एव तैत्तिरीयके यूपस्य सर्वदेवतामयत्वकथनप्रस्तावे— "पितृणा निखात मनुष्याणा मूर्ध्वं निखातात्"-इति § गर्तावच्छिन्नस्य यूपभागस्य पितृदेवत्यत्वम् । ईदृशो प्रसिद्धिरत्र 'वै' शब्देन द्योत्यते । आरोहणीययूपस्य षोडशप्रमाणं मपवदितुं परिमाणान्तरं विधत्ते— "सप्तदशेति । चतुर्विंशत्यङ्गुलपरिमितोऽरत्निः ; सप्तदशसङ्ख्याका अरत्नय प्रमाणं यस्य यूपस्येति विग्रहः ॥ ७ ॥

विधत्ते— "अथ नैष्टेति । 'उदानेषन्' आग्नीध्रो निर्गमयिष्यन्, 'क्षौमं' दर्भमयं 'वासः' पत्नीं परिधापयेत् ‖ । अत्र

---

* 'उत्क्षीर्यमाणो गोधूमचषालः'—इति का० श्रौ० सू० १४. १ २२।

† 'गर्तवान्'—इति च।       ‡ पा० सू० ८ २ १६।

§ तै० सं० ६ ३. ४ १८ ।       ‖ का० श्रौ० सू० १४ ५ ३।

स्थापादकत्व माह— "बर्हिषा वा इति। यज्ञीसम्बन्धिनाभिर्यद् प्राचीन मङ्गम्, तद् 'अमेध्यम्' अपवित्रम्, तत्प्रदेशे मेध्य दर्भमयवासःपरिधापनेन तदङ्ग परिहृत्य 'कृत्वा', 'एना' 'प्राचीं' 'यज्ञ' प्रापितवान् भवति। दर्भाणां मेध्यत्वम् "पवित्रं वै दर्भा पुनात्येवैनम्'—इति * श्रुत्यन्तरादवगम्यते। "तस्माद्वेष्टे-त्यादि, प्रतिज्ञार्थनिगमनम् ॥ ८ ॥

विधत्ते— "अथ निश्रेणी मिति †। 'निश्रेणीम्' निश्रेणी यूपारोहणार्थं सोपानसदृश काष्ठनिर्मितपदार्थं, 'निदधाति' यूपे निदध्यात्। तथा साधनेन यजमानस्य यूपारोहणे कञ्चिद् विशेष विधत्ते— "स दक्षिणत इति। दक्षिणप्रदेशा दुदङ्मुखो यूप मारोहेत्, उदक्प्रदेशाद् दक्षिणमुखो वा आरोहेदिति विकल्पः। तमेक पक्ष सिद्धान्तयति— "दक्षिणत इति। 'तु' शब्द पक्षान्तरव्यावृत्त्यर्थः। तथाहि एव सती सति 'उदग् भवति' कामध उदगपवर्गता सिद्ध्यति, तस्मा दय मेव पक्ष श्रेयान् ॥ ९ ॥

रोहणकाले जायामन्त्रण विधत्ते— "स रोक्ष्यन्निति। रोहण करिष्यन्, हे 'जाये।' 'एहि' आगच्छ, 'स्व' स्वर्ग 'रोहाव' आरोहण करवावेति ‡। जायाया प्रत्युक्तिं दर्शयति— "रोहावेत्याह जायेति §। अथान्वयव्यतिरेकाभ्यां जाया रहितस्य सम्पूर्णावयवत्व प्रतिपादयन् जायामन्त्रण विधत्ते—

* तै० ब्रा० १ ३ ७ १।

† का० श्रौ० सू० १४ ५ ४। तत्र निश्रयणीं दृश्यते।

‡ का० श्रौ० सू० १४ ५ ६।

§ का० श्रौ० सू० १४ ५ ७।

"तस्यदिति। प्रथमपर्याये असर्व इति परिच्छेदः, असम्पूर्ण इत्यर्थः। 'ह' यस्माद् यजमानस्य 'अर्द्धः एषः यत् जाया आत्मनः', तदभावे प्रजोत्पत्त्यभावः, यदा * जायासाहित्यं तदा प्रजोत्पादनसमर्थत्वम्। तथाच 'सर्वः' सम्पूर्णावयवोऽस्मि-त्याह— "एतां गति मिति। 'एतां' यूपारोहणलक्षणां 'गतिं' 'गच्छामि' प्राप्स्यामीत्यभिप्रायेण जायामन्त्रणं कार्यं मिति ॥ १० ॥

एतद्यूपारोहणं समन्त्रं विधत्ते— "स रोहतीति †। 'प्रजापतेः' 'प्रजाः' अपत्यभूताः 'अभूम' इति ‡ ॥ ११ ॥

गोधूममयमयान्नस्पर्शनं समन्त्रकं विधत्ते— "अथ गोधू-मानिति §। वयं देवाः सन्तः 'स्वः' स्वर्गम् 'अगन्म' गत-वन्त इति मन्त्रस्यार्थः ‖ ॥ १२ ॥

"तद् यद् गोधूमानित्यादि। गोधूमस्पर्शनेन वाजपेयजितं सर्वं स्वाधीनं कृतवान् भवतीति तात्पर्यार्थः ॥ १३ ॥

विधत्ते— "अथ शीर्ष्णेति ¶। 'शीर्ष्णा' शिरसा 'यूपम्' 'अत्युज्जिहीते' अतिक्रम्योद्गमयति। यूपं शिरसा स्पृशन् तमतिक्रम्य स्वशिर उन्नमयेदित्यर्थः। 'अमृताः' अमरणधर्माणो 'अभूम' सम्भूता इति उद्गमनमन्त्रस्यार्थः **। 'एतेन' यूपाग्रात् स्वशिरस उन्नमनात् यूपस्यातिक्रान्तत्वात् देवलोकजयः ॥ १४ ॥

---

* 'यदा'—इति क, ख, ङ, च पुस्तके नास्त्येव।
† का० श्रौ० सू० १४ ५ ८।
‡ वा० सं० ९. २१ ७।
§ का० श्रौ० सू० १४ ५ ९।
‖ वा० सं० ९. २१ ८।
¶ का० श्रौ० सू० १४ ५ १०।
** वा० सं० ९. २१. ९।

विधत्ते—"अथ दिश इति *। यूपे तिष्ठन्नेव यजमानः सर्वा दिशोऽनुक्रमेण पश्यन् "अप्से"-इति † मन्त्रं जपेत्। मन्त्रस्यायमर्थः,—हे दिशः। 'वः' युष्मत्सम्बन्धि 'इन्द्रियं' वीर्यम् 'मह्ये' मयास्तु 'अस्तु'। तथा 'हृदयं' युष्मत्सम्बन्धि मनम् 'मह्ये' मयास्तु 'अस्तु'। 'उत' अपि च 'क्रतु' सङ्कल्पः, तद्रूपको यत्नोऽपि 'मह्ये' अस्तु। 'वः' वर्चांसि' युष्मदीयानि तेजांसि 'मह्ये' मयास्तु 'सन्तु' इति। इन्द्रियादीनां मायाहरण युक्त मित्याह—"सर्वं वा इत्यादि। प्रजापते सर्वात्मकत्वात् वाजपेयेन च प्रजापतिप्राप्तत्वात् 'एतस्य सर्वस्य' जगतो यद्यमादिकं 'सम्भृत्य' विभज्याधाय स्वात्मनि धारयति, परन्तर स्वात्मनि कुरुते, आत्मसात् कृतवान् भवतीत्यर्थं ॥ १२ ॥

अथ कात्यायन— "अपदयात्मत्यपरोपमतापूषपुटादुदस्य त्यर्मे विश प्रतिस्वमात्येनानितिः‡ यदस्तयत्, तत् कर्मैव विधत्ते—"अथैन मिति। 'आपपुटे' ऽश्वपात्रयं § जपा, शानस्यत्यपवे पुटोकायं तै पुटे यूपेऽवस्थित यजमानमभि लक्ष्य 'उदस्यन्ति' ऊर्द्धान् प्रतिदिशं प्रक्षिपेयुरित्यर्थं। अतएव आपस्तम्ब—"त माश्वत्थैरापपुटैरूषपुटैरमथैर्वा विश प्रतिदिशं मर्पयन्ति"-इति ॥। "पशवो वा ऊषा"-इत्यादिकस्यायमर्थं,—ऊषाणां ग्रामीणा पशुसाधनत्वात् तात्कृप्यम्। पशूनाञ्च

* का० श्रौ० सू० १४ ५ ११।

† का० स० ६. २२ १

‡ का० श्रौ० सू० १४ ५ १२ १३।

§ अपचेत्रपांश्र —इति क।

॥ आप० श्रौ० सू० १८ ५ १६।

अन्नत्वं क्षीरादिस्रावकत्वेन प्रसिद्धम् । अत अश्वत्थपत्रस्थानां अन्नत्वा-दूपपुटहननेन यजमानोऽन्न मेव निहितवान् भवतीति ॥ १६ ॥

विधत्ते— "आश्वत्थेष्विति । अश्वत्थपत्रार्पितपूपनहनान् सप्तदशान् कुर्यात् । आश्वत्थैरेव करणे कारण माह— "स यदेवेति । 'अदः' अमुष्मिन् विप्रकृष्टे काले, 'अश्वत्थे' अवस्थितान् 'मरुतः' 'इन्द्रः' आह्वयन्ती । एव मय मश्वत्थो देवविशां मरुता माश्रयभूतः । अतस्तदीयेषु पर्णेषु अन्नसंस्तुतानां पूपाना मुपनिबन्धनं प्रशस्त मित्यर्थः । अपपुटेषु वैषम्यकार्त्स्न्यं विधत्ते— "विश इति । 'विशः' वैश्याः पर्णेषु । मरुतां विट्त्व मिन्द्रस्य प्रजात्वात् ; अतो मनुष्यविशा अपि तत्साजात्येन तदात्मकत्वम् । तेषां वैश्यानां मन्नत्वं अधीनत्वात् । अपपुटानां संख्यां विधत्ते— "सप्तदशेति ॥ १७ ॥

तत्रैव यजमानस्य भूम्यवेक्षणं समन्त्रकं विधत्ते— "अथेमा मिति *। 'मात्रे' सर्वस्य निर्मातृत्वात् मातृभूतायै 'पृथिव्यै' 'नमः' 'इति' † । आदरार्थो मन्त्रवाक्याभ्यासः । मन्त्रगत मातृशब्दस्य जननीवाचकत्वं विवक्षित मिति वदन् भूम्यवेक्षणं बृहस्पतिदृष्टान्तमुखेन प्रशंसति — "बृहस्पतेरिति । पूर्वं वाज-पेययाजी बृहस्पतेरभिषिक्तात् भूमिर्बिभेति स्म । भयकारण माह — "योऽभ्यषेचीति । यत् 'अयम्' अभिषिक्तः पुरुषो 'महद-भूत्' इत्यस्य. । 'यद्' यस्मात् अभिषेकेण महत्त्वगुणवान् 'अयं' बृहस्पतिः 'मा' मां भूमिम् 'न अवदृणीयात्' नाव दारयेत् 'इति', अतो हेतोः 'मित्रधेय मकुरुत'–इति उत्तर-

* नमो मात्र इति भूमि मवेक्षते'—इति का० श्रौ० सू० १४ ५, १४ ।
† वा० सं० ९ २२ २ ।

वाक्यशेषसम्बन्धः। तथा 'बृहस्पतिः' अपि भूम्याः सकाशाद् बिभेति स्म ; 'यद्' यस्मात् 'इयं' भूमिः 'मा' माम् अभिषिक्तं 'नावधून्वीत' न विघातयेत् 'इति'। 'तत्' तस्मात् कारणात् 'अनया' पृथिव्या सह 'एव' 'एतत्' निरीक्षणरूपं 'मित्रधेयं' मैत्रीम् 'अकुरुत' भूमिरपि तस्य मकरोदित्यर्थः। उपक्रमोपसंहाराभ्या मवगम्यते,— उपक्रमे तावदुभयोरपि भीतिरुक्ता, तद्दोषपरिहाराय मित्रधेयकरण मिति चोक्तम्; उपसंहारेऽपि 'न पुत्रो मातरम्' इति मातुः पुत्रकर्तृकोपद्रवस्य निषेधात् ॥ १८ ॥

इदानीं मनुष्यानेऽपि भूम्यवेक्षणं मित्रत्वप्रयोजन मित्याह— "बृहस्पतिसवो वा इति। "वाजपेय मिति। यदेव, 'बृहस्पतिसवः' बृहस्पतेरभिषिक्तो यस्मिन्निति स तथोक्तः। शिष्टं पूर्वपर्यायवत् व्याख्येयम् ॥ १९ ॥

विधत्ते— "अथ हिरण्य मिति। 'हिरण्यम्' 'अभि' लक्ष्य मुपादवरोहेत्; यतः 'हिरण्य' मरणरहितायुरात्मकम्, तन्नावरोहणेन तथाविधे 'आयुषि' एव प्रतिष्ठितो भवतीत्यर्थः ॥ २० ॥

हिरण्यनिधानार्थं वस्त्राजिनास्तरणं विधत्ते— "पदाजीति। तदास्यादाक्रोशाजपदर्पणः 'उपरिष्टात्' 'रुक्म' निदध्यात्। हिरण्ये अवरोहणं वैकल्पिक मित्याह— "इमां वैवेति। रुक्मे वावरोहेदिति। अत एव कात्यायनः— "स रुक्मे पदा चर्मण्यवरोहति, भूमौ वा"–इति * ॥ २१ ॥

---

* का० श्रौ० सू० १४ ५ १५, १६। 'रुक्मः परिमण्डलः सौवर्णाभरणविशेषः, वस्त्रो सम्फरः साक्षम्भाता.'–इति तत्र वृत्तिः। "हिरण्य मध्यवरोहति"–इत्यादि च तै० ब्रा० १ ३ ७. ७।

विधत्ते— "अथास्या इति। 'अथो' यूपादवरोहाय। आसन्दी मथय सूत्रं कात्यायनेन— "औदुम्बरी मासन्दीं नाभिदघ्नां मरत्निमात्राद्गी मूता माहरन्ति"—इति *। 'उपरिसदम्'-इत्यस्याय मर्थ ,— वाजपेयेन यागेन 'उपरिसद्यम्' उपरिसदम 'जयति' भद्रपीठादेरुपर्यवस्थान प्राप्नोति। एतदुपपादनायाह— "यो जयतीति। 'य' यूपारोहणेन 'मन्तरिक्षसद्यम्' आकाशे उपवेशन 'जयति', 'अप' इति पूर्वेण सम्बन्ध ॥ २२ ॥

'औदुम्बरीति। उदुम्बरनिर्मिता आसन्दी †। 'ऊर्ग् वा उर्गिति। यदेतद् 'ऊर्ग्' बलकरम् 'अन्नम्', तदात्मक 'उदुम्बर' एव , तज्जन्यत्वात्। श्रूयते हि— 'देवा वा ऊर्जं व्यभजन्त, तत उदुम्बर उदतिष्ठत्'—इति। "तां मध्येणेति। अस्यार्थ ,— 'हविर्धाने'—इति द्वितीयाद्विवचनान्तं पदम्, ते 'मध्येन' तयोरन्तःप्रदेशम् आहवनीय अग्नीन् सोमाहुत्यधिकरणाग्ने पश्चिमप्रदेशे 'ताम्' आसन्दीं निदध्यात्। अत्र सूत्रम्— "उत्तरवेदि मपरेणोदुम्बरी मासन्दीं वस्तचर्मणा स्तृणातीय ते"—इति ‡। २३ ॥

आसन्द्या मजाजिनेनाच्छादनं विधत्ते— "अथाजर्षभस्याजिन मिति। अत्रतमजापत्योर्बहुप्रजोत्पादकत्वादैकरूप्यं समर्थयते— "एता वा इत्यादि। 'एता' प्रजा 'प्रजापते' 'प्रत्यक्ष

समाम्' अतिशयेन प्रत्यक्ष रूपम्, यस्मादेवं 'तस्मात्' संवत्सर मध्ये 'त्रि' त्रिवारं 'द्वौ त्रीन्' वा पुत्रान् 'विजायमानाः' सुवाना भवन्ति * ॥ २४ ॥

आसन्द्यामनूद्य मन्त्रं † विधत्ते— "स आसन्द्यामासादयतीति। हि अभिषेक्ष्यमाणं वाजपेययाजिनम्। 'ते' तव 'इयम्' आसन्दी 'राट्' राज्यसाधनम्, पीठादिवत्परिसरम् एव राज्यमित्यर्थः। तस्याभिप्रायमाह— "राज्यमिति। तदेवैनमासन्द्यारोहणेन यजमानं राज्यं निहितवान् भवति ॥

विधत्ते— "यन्तेति ‡। 'एनं' यजमानम् आसन्द्याम् उपवेशयेत्। तन्मन्त्रस्यायमर्थः;— हे यजमान! 'यन्ता' सर्वस्य नियन्ता 'असि', 'यमनः' 'प्रजानां' नियमिता असि, 'ध्रुवः' स्थिरः 'असि', 'धरुणः' धारकः असि। 'कृष्यै' कर्षणाय 'त्वा' त्वाम्, उपवेशयामीति शेषः। एवमुत्तरत्रापि योज्यम्। 'क्षेमाय' लब्धवस्तुपरिपालनाय, 'रय्यै' धनाय, 'पोषाय' इति §।

मन्त्रं व्याचष्टे— "यन्तारमिति। "ध्रुवमेवैनमिति। 'अस्मिन् लोके' 'ध्रुवं' सन्तम् 'एव' 'एनं' यजमानम् 'एतत्'

---

* आग्नेय यूपं नवकाभिर्व प्राचीनग्रीव गात्रलोमान्यवीर्ये, तस्मिन्नाजमानं हिरण्य निधायाभ्यसमभीति हिरण्ये दधिच पादं यजमान. प्रतिष्ठापयते, शुचिरसि प्रजनन मसीति मध्यम्, तत्रासन्दीमारोचति—इति आप० श्रौ० सू० १८। ५१। ६ १—१।

† वा० सं० ९ २२ १।

‡ का० श्रौ० सू० १४ ५ १८।

§ मन्त्रपाठस्तु वा० सं० ९, २२ ३।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

यद्वा

द्वितीयेऽध्याये द्वितीयं ब्राह्मणम्।

॥ हरिः ॐ ॥

बार्हस्पत्येन चरुणा प्रचरति। तस्यानिष्ट एव स्विष्टकृद्भवत्यथास्मा ऽअन्तः सम्भरत्यन्नं वा ऽएष ऽउज्जयति यो वाजपेयेन यजते ऽन्नपेयᳫ्ँ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्न मुदजैषीत्-तदेवास्मा ऽएतत् सम्भरति * ॥ १ ॥

औदुम्बरे पात्रे †। अन्नं वा ऽऊर्गुदुम्बर ऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे सो-ऽप एव प्रथमाः सम्भरत्यथ पयो ऽथ यथोपस्मार मन्नानि ॥ २ ॥

* 'सम्भरन्ति'—इति क।

† पात्रे'—इति ग 'पात्रं'—इति घ।

एतेन मन्त्रभागेन 'धरुण' धारकं 'करोति'। कृष्यादिपदाना मर्थं सङ्कलय्याह— "साधवे त्वेति। श्रेयसे त्वा मुपवेशया-मीति। अनेन कृष्यादिश्रेयांसि, अन्यान्यपि सङ्गृहीतानि भवन्तीत्यर्थं ॥ २५ ॥ ६ [२. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

॥ इति पञ्चमकाण्डे प्रथमः प्रपाठकः * ॥

---

* इत उत्तर मित्र 'कण्डिका' ११७—इति क, कण्डिका सङ्ख्या ११७—इति ख, ग, घ। तत्र १ ब्रा० १९ क०, २ ब्रा० १८ क०, ३ ब्रा० १8 क०, 8 ब्रा० १५ क० ५ ब्रा० २८ क०, ६ब्रा० २५ क०। एवमस्मिन् अष्टप्रपाठके प्रपाठके षट्सु ब्राह्मणेषु ११७ कण्डिका सम्पन्ना इति भ्रमः ॥

व्वाजस्येमाम्। प्रसवः शिश्रिये दिव मिमा च व्विश्वा भुवनानि सम्म्राट् *। अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्व्ववीरं नियच्छतु स्वाहा ॥ ६ ॥

व्वाजस्य नु। प्रसव आबभूवेमा च व्विश्वा भुवनानि सर्व्वतः। सनेमि राजा परियाति विद्वान् प्रजा पुष्टिं व्वर्द्धयमानो ऽअस्मे स्वाहा ॥ ७ ॥

सोमꣳ राजानम्। अवसे ऽग्निꣳ सन्वारभामहे। आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥ ८ ॥

अर्य्यमणं बृहस्पतिम्। इन्द्रं दानाय चोदय। व्वाचं व्विष्णुꣳ सरस्वतीꣳ सवितारं च व्वाजिनꣳ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा। वदेह नः प्रति नः सुमना भव। प्र नो यच्छ † सहस्रजित्त्वꣳ हि धनदा असि स्वाहा ॥ १० ॥

---

* सम्प्राट —इति ग. सम्माट —इति घ।

† यच्छ —इति च रा० वेबरश्च ।

तद्धैके । सप्तदशान्नानि सम्भरन्ति सप्तदशः प्रजापतिरिति * वदन्तस्तदु तथा न कुर्यात् प्रजापतेर्न्वेव सर्वं मन्न मनवरुद्धं क उ तस्मै मनुष्यो यः सर्वं मन्न मवरुन्धीत † तस्मादु सर्व्व मेवान्नं यथोपस्मारᳪं सम्भरन्नेव मन्नं न सम्भरेत् ॥ ३ ॥

स यत्र सम्भरति । तस्योद्ब्रुवीत तस्य नाश्नीयाद्यावज्जीवं तथा नार्त्ति मेति तथा ज्योग्जीवति स एतस्य सर्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्याभ्य एवैतद्देवताभ्यो जुहोति ता अस्मै प्रसुवन्ति ताभिः प्रसूत उज्जयति तस्माद्वाजप्रसवीयानि जुहोति ॥ ४ ॥

स जुहोति । वाजस्येमं प्रसवः सुषुवे ऽग्रे सोमᳪं राजान मोषधीष्वप्सु ‡ ता अस्मभ्यं मधुमतीर्भवन्तु वयᳪं राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ ५ ॥

---

* 'प्रजापतिरिति'—ग पुस्तके ।

† 'मवरुन्धति'—इति क ख ।

‡ °प्सु'—इति ग '°प्सु —इति घ ।

व्वाजस्येमाम्। प्रसवः शिश्रिये दिव मिमा च व्विश्वा भुवनानि सम्म्राट्*। अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं नियच्छतु स्वाहा ॥ ६ ॥

व्वाजस्य नु। प्रसव आबभूवेमा च व्विश्वा भुवनानि सर्वतः। सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं व्वर्द्धयमानो ऽअस्मे स्वाहा ॥ ७ ॥

सोमꣳ राजानम्। अवसे ऽग्निं मन्वारभामहे। आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥ ८ ॥

अर्यमणं बृहस्पतिम्। इन्द्रं दानाय चोदय। व्वाचं व्विष्णुꣳ सरस्वतीꣳ सवितारं च व्वाजिनꣳ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा। वदेह नः प्रति नः सुमना भव। प्र नो यच्छ† सहस्रजित्त्वꣳ हि धनदा असि स्वाहा ॥ १० ॥

---

* सम्म्राट्'—इति ग सम्म्राट'—इति घ।

† यच्छ'—इति च डा॰ वेबरस्य।

तद्धैके । सप्तदशान्यानि सम्भरन्ति सप्तदशः प्रजापतिरिति * वदन्तस्तदु तथा न कुर्यात् प्रजापतेर्न्वेव सर्व्वं मन्न मनवरुद्धं क उ तस्मै मनुष्यो यः सर्व्वं मन्न मवरुन्धीत † तस्मादु सर्व्व मेवान्नं यथोपस्मारꣳ सम्भरन्नेक मन्नं न सम्भरेत् ॥ ३ ॥

स यन्न सम्भरति । तस्योद्ब्रुवीत तस्य नाश्नीयाद्यावज्जीवं तथा नार्त्ति मेति तथा ज्योग्जीवति स एतस्य सर्व्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्यान्ये वैतद्देवताभ्यो जुहोति ता अस्मै प्रसुवन्ति ताभि प्रसूत उज्जयति तस्माद्वाजप्रसवीयानि जुहोति ॥ ४ ॥

स जुहोति । वाजस्येमं प्रसवः सुषुवे ऽग्रे सोमꣳ राजान मोषधीष्वप्सु ‡ ता अस्मभ्यं मधुमती र्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ ५ ॥

---

* 'प्रजापतरिति — ग पुस्तके ।

† मवरुन्धति — इति क ख

‡ ०प्सु — इति ग ०प्स — इति घ ।

वाजस्येमाम्। प्रसवः शिश्रिये दिवमिमा
च विश्वा भुवनानि सम्राट्*। अदित्सन्तं
दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं निय-
च्छतु स्वाहा ॥ ६ ॥

वाजस्य नु। प्रसव आबभूवेमा च विश्वा
भुवनानि सर्वतः। सनेमि राजा परियाति
विद्वान् प्रजां पुष्टिं वर्द्धयमानो ऽअस्मे
स्वाहा ॥ ७ ॥

सोमꣳ राजानम्। अवसे ऽग्निमन्वारभा-
महे। आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृह-
स्पतिꣳ स्वाहा ॥ ८ ॥

अर्यमणं बृहस्पतिम्। इन्द्रं दानाय चो-
दय। वाचं विष्णुꣳ सरस्वतीꣳ सवितारं
च वाजिनꣳ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा। वदेह नः प्रति नः सु-
मना भव। प्र नो यच्छ† सहस्रजित्त्वꣳ हि
धनदा असि स्वाहा ॥ १० ॥

---

* सम्राट — इति ग. सम्राट — इति घ।

† यच्छ — इति च दा० वेबरदृष्ट ।

प्र नः । प्र ऋत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहेति * ॥ ११ ॥

अथैनं परिशिष्टेनाभिषिञ्चति । अन्नाद्येनै-वैन मेतदभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद् दधाति तस्मादेन परिशिष्टेनाभिषिञ्चति † ॥ १२ ॥

सो ऽभिषिञ्चति । देवस्य त्वा सवितुः प्र-सवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मिति देवहस्तैरेवैन मेतदभिषिञ्चति सरस्वत्यै वाचो यन्तुर्यन्त्रियै ‡ दधामीति वाग्वै सरस्वती तदेन वाच एव यन्तुर्यन्त्रियै दधाति ॥ १३ ॥

तदु हैक ऽआहुः । विश्वेषां त्वा देवानां यन्तुर्यन्त्रियै दधामीति सर्व्वे वै विश्वे देवा-स्तदेनं सर्वेषामेव यन्तुर्यन्त्रियै दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रियै दधा-मीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रियै दधाति बृहस्पतेष्ट्वा साम्राज्येनाभि-

* स्वाहेति—इति क। स्वाहेति ख ग।

† ॰षिञ्चति—इति ग घ।

‡ यन्तुयन्त्रे—इति आ सम्मत इति डा॰ वेवर ।

पिस्वाभ्यसाविति नाम गृह्णाति तद् बृहस्पते-
रेवैन मेतत्सायुज्यएं सलोकतां गमयति ॥ १४ ॥

अथाह । सम्राडय मसौ सम्राडय मसाविति
निवेदित मेवैन मेतत्सन्त' देवेभ्यो निवेदयत्ययं
महावीर्यो यो ऽभ्यषेचीत्यय' युष्माकोऽभूत्तं
गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि
यज्ञः * ॥ १५ ॥

अथोज्जितीः । जुहोति वा वाचयति वा
यदि जुहोति यदि वाचयति समान एव
बन्धुः ॥ १६ ॥

स वाचयति । अग्निरेकाक्षरेण प्राण मुद-
जयत्त मुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्त-
दशएं स्तोम मुदजयत्त मुज्जेष मिति तद्यद्देवै-
ताभिरेता देवता उदजयंस्तद्देवैष एताभिरुज्ज-
यति सप्तदश भवन्ति सप्तदशो वै प्रजापति-
स्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति । तद्य-

---

* यज्ञ —इति म, 'यज्ञ —इति घ ।

† 'मुच्चयति —इति क ।

प्र नः । यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहेति * ॥ ११ ॥

अथैनं परिशिष्टेनाभिषिञ्चति । अन्नाद्येनैवैन मेतदभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद् दधाति तस्मादेनं परिशिष्टेनाभिषिञ्चति † ॥ १२ ॥

सो ऽभिषिञ्चति । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मिति देवहस्तैरेवैन मेतदभिषिञ्चति सरस्वत्यै वाचो यन्तुर्यन्त्रिये ‡ दधामीति वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रिये दधाति ॥ १३ ॥

तदु हैक ऽआहुः । विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामीति सर्व्वं वै विश्वे देवास्तदेनꣳ सर्वस्यैव यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रिये दधामीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रिये दधाति बृहस्पतेष्ट्वा साम्राज्येनाभि-

---

* स्वाहेति—इति क। 'स्वाहेति ख, ग।

† ॰षिञ्चति'—इति ग, घ।

‡ यन्तुर्यन्तो'—इति मा-मध्यात इति डा॰ वेबर्.।

विष्ठाश्यसाविति नाम गृह्णाति तद् बृहस्पते-रेवैन मेतत्सायुज्यए सलोकतां गमयति ॥ १४ ॥

अथाह । सम्राडय मसौ सम्राडय मसाविति निवेदित मेवैन मेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो ऽभ्यषेचीत्ययं युष्माकैको ऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि यज्ञः * ॥ १५ ॥

अथोज्जितीः । जुहोति वा व्याचयति वा यदि जुहोति यदि व्याचयति समान एव बन्धुः ॥ १६ ॥

स व्याचयति । अग्निरेकाक्षरेण प्राण मुदजयत्त मुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशए स्तोम मुदजयत्त मुज्जेष मिति तद्यद्देवताभिरेता देवता उदजयंस्तद्देवैष एताभिरुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति । तद्य-

* 'यज्ञः'—इति ग, 'यज्ञः'—इति घ ।

† 'साधयति'—इति क ।

दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत एवैतत् प्रजापति मुज्जयति तस्मादन्तरेणाहुती ऽएतत् कर्म क्रियत * ऽआश्राव्याहाग्निं स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ १८ ॥

अथेडा मादधाति। उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्र मुपाकरोति तं स्तोत्राय प्रमीवति स उपावरोहति सो ऽन्ते स्तोत्रस्य भवत्यन्ते यज्ञस्य ॥ १९ ॥

तद्धैके। एतत् कृत्वाथैतत् कुर्वन्ति तदु तथा न कुर्यादात्मा वै स्तोत्रं प्रजा यज्ञ मेतस्माद स यजमानं प्रणाशयति। स जिह्म एति स ह्वलति तस्मादेतदेव कृत्वाथैतत् कुर्यात् ॥ २० ॥

अथेडा मादधाति। उपहूतायामिडायामप

---

* क्रियत—इति ख।

उपसृष्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्र मुपाकरोति तत् स्तोत्राय प्रणीयति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २१ ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२.२.] ॥

अथ नैवारचरुप्रचारं विधत्ते—"बार्हस्पत्येनेति * । प्रधान-नैवाराहुतेरनन्तरं कर्त्तव्यं वाजप्रसवीयहोमं विधातुं कालं विधत्ते— "तस्मान्निष्ट एवेति । 'तस्य' नैवारस्य 'स्विष्टकृत्' 'अनिष्टः' अनिष्टकृद् 'भवति', प्रधानयागादूर्ध्वं स्विष्टकृतः प्रागित्यर्थः । होमार्थं अन्नसम्भरणं विधत्ते— "अथास्मा इति । 'अस्मै' यजमानाय तं अभिषेकार्थम् 'अन्न' सम्भरेत् ॥ १ ॥

अन्नसम्भरणार्थं पात्रविशेषं विधत्ते— "औदुम्बर मिति † । तत्र प्रथम मपां सम्भरणं विधत्ते—"सोऽप एवेति । प्रथमम् 'अप' अन्नानि सम्भरेत् । 'अथ पयः' क्षीरं तदनन्तरम् । 'यथोपस्मारम्' उपस्मृति मनतिक्रम्य 'अन्नानि' सम्भरेत्, यानि तदा स्मृतिपथ मवतरन्ति तानीत्यर्थः ‡ । तत्र ग्राम्यारण्य-भेदेन चतुर्दशधान्यान्यापस्तम्बेन सूचितानि, तान्यपि यथो-पस्मारपदेन ग्राह्याणि— "तिलमाषा व्रीहियवाः प्रियङ्ग्वणो

* 'नैवारेण प्रचरति'—इति का० श्रौ० सू० १४ ५ १६ ।

† का० श्रौ० सू० १४ ५ २० ।

‡ का० श्रौ० सू० १४ ५ २१ क । 'सप्त ग्राम्या ओषधयः, सप्तारण्या'—इति च तै० ब्रा० १ ३ ८ १ द्रष्टव्यम् ।

गोधूमाः वेणुश्यामाकनीवारा अचिंत्यम गवीधुका अरण्यजा मर्कटका विज्ञेया ग्राम्यास्तुसप्तमा कुलत्थसप्तमा वा"–इति *। तुच्छिस्थानि यानि वा, तानि सम्भरेत् ॥ २ ॥

'यथोपस्मारं सम्भारान् सम्भरेत्'–इत्यत्र सङ्ख्याया अनुक्तेः यावन्ति उपस्मर्यमाणानि तावन्ति सम्भरेदित्यर्थो भवति, तत्र सङ्ख्याविशेषं पूर्वपक्षयति— "तदेक इति। 'सप्तदश' सप्तदशसङ्ख्याकानि 'अन्नानि' 'सम्भरन्ति'। तत्रोपपत्तिमाह— "सप्तदश प्रजापतिरितीति। प्रजापतेः सप्तदशत्वं प्रागुक्तम् †॥

तन्मतं निराचष्टे— "तदु तथेति। 'प्रजापतेः'–इति। मध्याय मर्यः,— पूर्वं प्रजापतेरपि सकलं सत्त्वं न यथोक्तम्, इदानीं 'तस्मै' प्रजापतये 'मनुष्य' 'कः' समर्थः सर्वान्नावरोधने; तस्मात् यावच्छक्ति सम्भरिष्यामीति। तुच्छिस्थानामपि सर्वेषां सम्भरणे प्राप्ते एकस्य निषेधति— "एकमन्न मिति ‡॥ ३॥

अकृष्यमाणान्नविषयं कञ्चिद् विशेषं विधत्ते— "स यदिति। 'यत्' अन्नं 'न' सम्भरेत्, 'तस्य' 'उदगृह्णीत' न सम्भृतं निश्चिते तन्नाम ब्रूयात्, यथा असम्भृतस्य अन्नस्य यावज्जीवनभोजनेन 'अन्नं' विनाश्य 'न एति', 'ज्योक्' चिरकालं 'जीवति'। भोक्तव्यस्य सर्वस्य भोगे सति विनाशो भवति, अतस्तदेकं अवशिष्य भुञ्जीतेति तात्पर्यम् §॥

---

* आप० श्रौ० सू० १७ ११ २। अत्र व्याख्या हर्षे, श्यामाकगा भ्यहर्षे—इति तद्वेष।

† १प्र० २ब्रा० (२८ पृ० २ पं०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १४ ५ २१ सू०।

§ का० श्रौ० सू० १४ ५ २२।

विधत्ते— "स एतस्येति। मिलितस्य 'एतस्य' 'सर्वस्य' अन्नस्य * एकदेशं 'स्रुवेण' 'उपघातम्' उपहत्योपहत्य गृहीत्वा 'वाजप्रसवीयानि जुहोति' वाजप्रसवशब्दयुक्तमन्त्रकरणकहोमान् कुर्यादित्यर्थः †। "तद्यास्य इति। मान्त्रवर्णिकाभ्यो 'याभ्यः' अग्न्यादिदेवताभ्यो हूयते तदेव। 'ताः' 'अस्मै' यजमानाय एतद्यागफलभूतमन्नमवरोद्धुं 'प्रसुवन्ति' अनुजानन्ति, ताभिरनुज्ञातः अन्नम् स्वाधीनं करोतीत्यर्थः॥४॥

होममनूद्य मन्त्रान् विधत्ते— "स जुहोति वाजस्येममिति। सर्वत्र 'स्वाहा' शब्दो हवनलिङ्गम्। प्रथमस्यायमर्थः ‡;— 'अग्रे' पूर्वं 'वाजस्य' अन्नस्य 'प्रसवः' उत्पादकः परमेश्वरः 'ओषधीषु' 'अप्सु' च सारभूतम् 'इमं' सोमवल्लीरूपं 'राजानं' 'सुषुवे' उत्पादयामास, 'ताः' ओषधय आपश्च 'अस्मभ्यम्' अस्मदर्थं 'मधुमतीः' माधुर्योपेता भवन्तु। 'वयम्' अपि अस्मिन् 'राष्ट्रे' 'पुरोहिताः' यागानुष्ठानादौ पुरोगामिनो 'जागृयाम' जागरूका भूयास्मेति॥५॥

अथ द्वितीयः §;— "वाजस्येमामिति। 'वाजस्य प्रसवः' ईश्वरः 'इमां' भूमिं 'दिवम्' इमानि चान्यानि सर्वाणि 'भुवनानि' 'शिश्रिये' आश्रितवान्। स च 'सम्राट्' सर्वेषां भुवनानां भूत्वा 'अदित्सन्तं' दातुमनिच्छन्तं भोज्यं 'प्रजानन्' 'दापयति' 'रयिं' धनं 'नियच्छतु' ददातु॥६॥

---

* 'अन्नाद्यस्य'—इति ख।

† का० श्रौ० सू० १४ । ५ । २३ ।

‡ वा० सं० ९. २३ १ ।

§ वा० सं० ९ २४ १ ।

अथ तृतीयं *,—"वाजस्य न्विति। 'वाजस्य प्रसव' 'नु' खलु 'इमा' इमानि 'विश्वा' सर्वाणि 'भुवनानि' सर्वत 'आ बभूव' व्याप्नोत्। 'सर्वतः'–इति पुराणवचनम् †। 'स' चिरन्तनो 'राजा' 'परियाति' सर्वत्र सञ्चरति। 'विदान्' अनुष्ठीयमानं कर्म प्रजानन्। 'अस्मे' अस्मदर्थे 'प्रजां' 'पुष्टिं' च 'वर्द्धयमान' परियातीति सम्बन्धः ॥ ७ ॥

अथ चतुर्थं †,—"सोम मिति। यत् सोमादीन् देवान् 'अवसे' रक्षणाय, तर्पणाय वा 'अन्वारभामहे', ते सर्वे अनु रक्षन्त्विति वाक्यशेष ॥ ८ ॥

अथ पञ्चमं ‡,—"अर्यमण मिति। हे वाजस्य प्रसव! त्वम् अर्यमादीन् 'दानाय चोदय' अस्मभ्यं धनदानार्थं प्रेरय। वाक्सरस्वत्योरीपभेदो द्रष्टव्य ॥ ९ ॥

अथ षष्ठं §,—"अग्ने अच्छेति। हे 'अग्ने!' 'इह' अस्मिन् कर्मणि 'नः' अस्माकम् 'अच्छ' अभिमुख्येन 'वद' हितं वादय। 'नः' अस्मान् प्रति 'सुमना' कृपार्द्रचित्तो भव। हे 'सहस्रजित्!' सहस्रस्य धनस्य जेत। 'हि' हेतौ। यत 'त्वं' स्वभावतो 'धनदा असि', अत 'नः' अस्मभ्यं प्रयच्छ, धन मिति शेष ॥ १० ॥

अथ सप्तमं ‖,—"प्र न इति। अर्यमादयो 'नः' अस्मभ्यं धनं प्रयच्छन्तु। पूषादिदेवतावाचकपदेऽपि क्रियापदस्यानु

---

* वा० सं० ९. २३ १।

† निघ० २ २८ ३।

‡ वा० सं० ९ २६ १।

§ वा० सं० ९ २७ १।

‖ वा० सं० ९ २८ १।

¶ वा० सं० ९ २९ १।

षड्' धीतयित्‌ पृथक् पृथक् प्रोपसर्गप्रयोग , 'प्र' 'ददातु' प्रकर्षेण यच्छत्विति ॥ ११ ॥

कृत्स्नमेवस्यास्य विनियोग दर्शयति— "पर्धेन मिति। 'एन' सुन्वन्त यजमान 'परिशिष्टेन' घतेन अभिषिञ्चेत् कृत्स्न मिदाभिषेकेण यजमाने अत्र मेव विहितवान् भवति * ॥ १२ ॥

अभिषेक मन्त्र मन्त्र विधत्ते— "स इति। "देवस्य त्वेति †", व्याख्यात। 'सरस्वत्यै' चतुर्थ्यै चतुर्थी। सरस्वत्या 'वाच', 'यन्तु' यन्तर्यामिणय 'यन्त्रे' ‡ नियमी अम्मतु स्रायां 'नि दधामि' इति ॥ १३ ॥

अत्र तु 'सरस्वत्यै वाच'-इत्यस्य § स्थाने 'सरस्वती त्वा वाच' इति शुक्लपक्षे प्रक्षिप्य प्रयोक्तव्य मिति विधातुं पूर्वं पक्ष मौपपत्तिक सुत्रावयति— "तदु हैक इति। केचिच्छाखिन 'आहु'। किमिति। 'सरस्वत्यै वाच'-इत्यस्य स्थाने 'विश्वेषां त्वा देवानाम्'-इति प्रक्षिप्य 'यन्तु'-इत्यादि पूर्ववद् वक्तव्य मिति स्वमतं दर्शयितु मुक्तम्। परमते निराकरोति— 'तदु तथेति। अत एव कात्यायन— "सरस्वत्यै वाच स्थाने विश्वेषां त्वा देवानां, सरस्वत्यै त्वेति वा"-इति ‖। इम एते'-इत्यादि पूर्वोक्त मन्त्रशेष। मन्त्रान्ते यथा अमुष्येत्यस्य स्थाने यजमानस्य नाम सम्बुद्धान्त मुक्तीयात् ॥ १४ ॥

* का० औ० सू० १४ ५ २४ ।

† या० स० ६ ३० १ ।

‡ प्रस्तिये —इति मतुमूल पुस्तकपाठ ।

§ या० स० ६ ३० १ ।

‖ का० औ० सू० १४ ५ २१ २६

आवेदनं विधत्ते— "अथाह सम्राडिति । अत्रापि अभि-षिक्तस्य स्थाने प्रथमान्तं यजमाननाम ग्रहीतव्यम् । एतन्नामाय मभिषिक्तः सम्राट् महावीर्यो जात इति वदेत् । आवेदनवाक्याहुतेरभिप्राय माह— "निवेदित मिति । एवं नामग्रहीत्वा प्रथमं मनुष्येभ्यो 'निवेदित मेव सन्तम्' 'एनम्' तदेतेन द्वितीयेन सम्राडय महावित्येतेन 'देवेभ्यः' 'निवेदयति' ज्ञापयति । किमिति । 'यः' यजमानः 'अभ्यषेचि' 'अयं महावीर्यः' सम्पन्न इति । वाक्यस्य पर्यवसित मर्थं माह— "अयं युष्माकेति । 'अयम्' अभिषिक्तो यजमानः युष्माकं मध्ये 'एकः' 'अभूत्', देवानां पालकानित्यर्थः, हे देवाः । तं गोपायतेति ॥ अत्र सूत्रम्— "सम्राडय महावित्याह नामग्राह विराडे"-इति * । तदेतत् त्रिस विधत्ते— "त्रिष्कृत्व इति । यज्ञस्य त्रिवृत्त्वं सवनत्रयात्मकत्वात् ॥ १५ ॥

विधत्ते— "अयोध्नीति । उभयलिङ्गयुक्तमन्त्रकरणिका † आहुतय उक्तिसयः, ता जुहुयात्, यजमानस्य तन्मन्त्रेण आवनं ना कार्य मित्यर्थः ‡ । 'मधुः' इत्यवादनसाध्यकार्यवादवाक्यशेषः, आम्नास्यमानः समान इत्यर्थः ॥ १६ ॥

साधन भवता मन्त्रान् विधत्ते— "स वापयतीति । संहितायाम् "अग्निरेकाक्षरेण"-इत्यनुवाके सप्तदश मन्त्राः पठिताः §, अत्र अग्निरेकाक्षरेणेति प्रजापतिः सप्तदशाक्षरे-

---

* का० श्रौ० सू० १४ ५ २७ ।

† 'उभयलिङ्गयुक्ता मन्त्रकरणिका'—इति ख, ङ ।

‡ का० श्रौ० सू० १४ ५ २८ ।

§ वा० सं० ९. ३१—३४ कण्डिका द्रष्टव्याः ।

येत्याद्यन्तयोर्द्वयोरपि ( सप्तदश मन्त्राः * ) सर्वेऽपि यष्टव्या इत्यभिप्रायः। तेषां सङ्ख्येयाय मर्थ ;— "ओ श्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिः—इति †, सप्तदशाक्षराणि विद्यन्ते। तत्राग्न्यादिसप्तदशदेवाः एकाक्षरप्रभृत्येकैकाक्षरवृद्धियुक्तैः प्राणमनुष्यादीन् जितवन्तः। तानग्न्यादिभिर्जितान् नरप्राणादीनह मिदानीम् 'उज्जेषम्' उज्जीयासम्। अग्निदेवतादिभिर्मन्त्राक्षरसङ्ख्यानुसारेण द्विपान्मनुष्य-त्रिलोकादेर्जयो विज्ञेयः। त्रिवृत्स्तोमवतामत्र यथा नवसङ्ख्योपेतत्वात् ‡ नवाक्षरेण सम्बन्धो द्रष्टव्यः। तथेतरस्तोमादावपि तिसृणां स्तोत्रियाणा मृचा मावृत्तिविशेषेण तत्सङ्ख्या द्रष्टव्या §। इम मेव तात्पर्यं प्रतिपादयति— "सप्तदशैताभिरिति। 'एताभिः' ऋग्भिः। तेषां मन्त्राणां सप्तदशसङ्ख्या समूह्य प्रजापत्यात्मना स्तौति—"सप्तदशेति ॥ १७ ॥

नैवारश्चरुः प्रधानस्विष्टकृतोर्मध्येऽनुष्ठेयं कर्मजात मुपदर्शं चोदकप्राप्तं स्विष्टकृद्यागादिक मनुसन्धत्ते— "यथादेवत्यादि। "अग्नये स्विष्टकृतेऽनुब्रूहि"—'इति' अध्वर्युर्वदेत्। 'अनुब्रूहि' अनुवाक्यां पठेत्यर्थः। अत्र सम्प्रैषो होता ॥।

---

* ग पुस्तकमात्रे ऋचोऽधिक. पाठः।

† तै० सं० १ ६ ११ २ पुरस्तादिह च १ ५ २ १६ १०।

‡ ता० ब्रा० २ १ १—३ साय० भाष्य, ब्रा० ये० सर्वेषु मं० उक्त० ब्रा० १ १ १—३ स्तोमोऽभ्याता। द्रष्टव्यम्।

§ ता० ब्रा० त्रिवृत्स्तोमविधायकवचनेभ्योऽनन्तरम्।

‖ 'अनुब्रूहि' अनुवाक्यां पठेति सम्प्रैषो होता'—इति क।

तदन्तरेत्यस्याय अर्थः— नैवारहवि'-स्विष्टकृद्यागाहुत्योर्मध्ये क्रियमाणेन अवसभ्रथ-वाजप्रसवीय होमादिना यज्ञरूपं प्रजापतिं जितवान् भवतीति ॥

अनुवचनानन्तर आप्यायनादिकं प्रकृतिवत् स्विष्टकृतः कार्यमित्यनुक्रामति— "आप्याय्येति । 'वषट्कृते' होत्रा याज्यान्ते वषट्कारे प्रयुक्ते सति 'जुहोति' सौविष्टकृतं हविः ॥ १८ ॥

अथ स्विष्टकृदनन्तरभावीनि कर्माण्याह— "अथैता मिति । माहेन्द्रग्रहणानन्तरं * तदीयं एव 'स्तोत्रम्' 'उपाकरोति' आरम्भयेदित्यर्थः । 'तम्' आसन्द्या अधिस्थितं अभिषिक्तं यजमानं 'स्तोत्राय' 'प्रणीयति' प्रापयेत्, आह्वयेदित्यर्थः । अत्र सूत्रम्— "अवरुह्य गच्छति स्तोत्राय प्रहितः"—इति † । 'सः' सन् 'उपाकरोति' आसन्द्याः सकाशात् 'सः' एवं स्तोत्रगतार्थी. 'अन्ते' समीपे स्थितो भवेत् ॥ १९ ॥

अत्र केचिदुक्तविधानानन्तरं माहेन्द्रग्रहणं स्तोत्रगते च कृत्वा स्विष्टकृदादिकं यजमानस्य पश्चादवरोहणं मिच्छन्ति, तद् दूषयितु मनुवदति— "तद्वैक इति । 'एतत्' माहेन्द्रग्रहणादि होमान्तं सद् कर्म कृत्वा 'अथ' अनन्तरम् 'एतत्' उक्त स्विष्टकृदिडापवनान्तं कर्म कुर्वन्ति । अतएव सूत्रकृता शाखान्तरीयं पक्ष मङ्गीकृतोक्तम्— "उक्तिविधौ वोत्तरो माहेन्द्रः"—इति ‡ ॥

तद् दूषयति— "तदु तथेति । यथासन्द्या आसीन एव

---

* 'माहेन्द्रग्रहणानन्तरं'—इति ख ।

† का० श्रौ० सू० १४ ५ ३० ।

‡ का० श्रौ० सू० १४ ५ ३१ ।

यजमाने सत्येव आत्मप्रजारूपे श्रोत्रशस्ते कुर्यात्, यदि 'यजमानम्' आत्मप्रजाहीनं कुर्यात्; अथाविध्यकरणेनेत्यर्थः। 'जिह्मः' कुटिलो गच्छति। 'ह्वलति' यत्पदात् स्खलति ॥ २० ॥

अत उक्त एव पद्यः श्रेयानिति दर्शयितुं पुनः पठति— "यद्वेडा"मित्यादि। पूर्ववत् * ॥ २१ ॥ १ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम्. )

पूर्णाहुतिं जुहोति। सर्व्वं वै पूर्णंᳫ सर्व्वं परिगृह्य सूया॰ऽइति तस्यां व्वरं ददाति सर्व्वं वै व्वरः सर्व्वं परिगृह्य सूयाऽइति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत † ॥ १ ॥

अथ श्वो भूते ‡। अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्व्वपति स ये जघनेन शम्यां पिष्ट

---

* द्रष्ट॰ का॰ श्रौ॰ सू॰ १४ । ४ । २२—२६ पर्यन्तसूत्राणि द्रष्टव्यानि।

† 'नाद्रियेत'—इति क।　　‡ 'भूते'—इति ख, ग।

माणाना मवभीयन्ते पिष्टानि वा तण्डुला * वा तान्त्स्रुवे सार्धॐ संवपत्यन्वाहार्यपचनादुल्मुकमादत्ते तेन दक्षिणा यन्ति स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्रदरं वा ॥ २ ॥

तदग्निॐ समाधाय जुहोति। एष ते निर्ऋते भागस्तं जुषस्व स्वाहेतीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्यदेवास्या अत्र नैर्ऋतॐ रूपं तदेवैतच्छमयति तथो हैनॐ सूयमानं निर्ऋतिर्न गृह्णात्यथ यत् स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वैतद्ध्यस्यै निर्ऋतिगृहीतम् ॥ ३ ॥

अथाप्रतीक्षं पुनरायन्ति। अथानुमत्या अष्टाकपालेन पुरोडाशेन प्रचरतीयं वा अनुमतिः स यस्तत् कर्म शक्नोति कर्तुं यच्चिकीर्षतीयॐ हास्मै तदनुमन्यते तदिमामेवैतत् प्रीणात्यनयानुमत्यानुमतः सूया इति † ॥ ४ ॥

अथ यदष्टाकपालो भवति। अष्टाक्षरा वै

---

* 'तण्डुलानि'—इति ख।

† 'इति'—इति क पुस्तके, 'इति'—इति ख-पुस्तके।

गायत्री गायत्री वा ऽइयं पृथिव्यथ यत्समानस्य हविष उभयत्र जुहोत्येषा ह्येवैतदुभयं तस्य वासो दक्षिणा यद्वै सवासा अरण्य नोदाभ्रणुसते निधाय वै तद्वासो ऽतिसृज्यते तथो हैनण्ं सूयमान मासङ्गो न च्छिन्दति * ॥ ५ ॥

अथ श्वो भूते। आग्नावैष्णव मेकादशकपालं पुरोडाशं निर्व्वपति तेन यथेष्टेवं यजते तद्यदेवादः प्रजात माग्नावैष्णवं दीक्षणीयण्ं हविस्तदेवैतदग्निर्व्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्व्वै यज्ञस्यावरार्द्ध्यो विष्णुः परार्द्ध्यस्तत्सर्व्वाश्चैवैतद्देवताः परिगृह्य सर्व्वं च यज्ञं परिगृह्य सूया ऽइति तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै विष्णुः स यज्ञो ऽग्निरु वै यज्ञ एव तद् तदाग्नेय मेव तस्माद्धिरण्य दक्षिणा † ॥ ६ ॥

* 'छिन्दति'—इति क।

† 'दक्षिणा'—इति क ख।

अथ श्वो भूते *। अग्नीषोमीयमेकादश-
कपालं पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजत
एतेन वा ऽइन्द्रो वृत्रमहन्नेतेनो ऽएव व्यज-
यत यास्येयं व्विजितिस्तां तथो ऽएवैष एतेन
पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो ऽएव
व्विजयते व्विजिते ऽभये ऽनाष्ट्रे स्या इति
तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो
भवति तयोरुत्सृष्टो गौर्द्दक्षिणोत्सर्जं वा ऽअमुं
चन्द्रमसं घ्नन्ति पौर्णमासेनाह घ्नन्त्यामावास्ये-
नोत्सृजन्ति तस्मादुत्सृष्टो गौर्द्दक्षिणा † ॥ ७ ॥

अथ श्वो भूते। ऐन्द्राग्नं द्वादशकपालं
पुरोडाशं निर्व्वपति तेन यथेष्ट्यैव यजते यत्र
वा ऽइन्द्रो वृत्रमहंस्तदस्य भीतस्येन्द्रियं ‡ व्वीर्यं
मपचक्राम स एतेन हविषेन्द्रियं व्वीर्यं पुन-
रात्मन्नधत्त तथो ऽएवैष एतेन हविषेन्द्रियं वीर्यं
मात्मन्धत्ते तेजो वा ऽअग्निरिन्द्रियं व्वीर्यमिन्द्र
उभे व्वीर्ये परिगृह्य स्या ऽइति तस्मादैन्द्राग्नो

* 'भूत'—इति ग, घ। † 'दक्षिणा'—इति क, ख।
‡ तदस्य भीतस्येन्द्रियं—इति ग।

द्वादशकपालः पुरोडाशो भवति तस्यऽर्षभोऽनड्वान् दक्षिणा स हि वहेनाग्नेय आण्डाभ्यां मैन्द्र-स्तस्मादृषभोऽनड्वान् दक्षिणा * ॥ ८ ॥

अथाग्रयणेष्ट्या यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यदाग्रयणेष्टिरनया मे ऽपीष्टमसदनयापि सूया ऽइति तस्मादाग्रयणेष्ट्या यजत ऽओषधीर्वा ऽएष सूयमानो ऽभिसूयते तदोषधीरेवैतदनमीवा अकिल्बिषाः कुरुते ऽनमीवा अकिल्बिषा ओषधीरभि सूया ऽइति तस्य गौर्दक्षिणा † ॥ ९ ॥

अथ चातुर्मास्यैर्यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएष यज्ञक्रतुर्यच्चातुर्मास्यान्येभिर्मे ऽपीष्टमसदेभिरपि सूया ऽइति तस्माच्चातुर्मास्यैर्यजते ॥ १० ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२.३.] ॥

* दक्षिणा—इति क, ख । † गौर्दक्षिणा इति क, ख ।

ब्राह्मणक्षत्रियोभयकर्तृकसंस्थारूपो * वाजपेय उक्तः, अथैक-क्षत्रकर्तृको विकृतिभूतो राजसूयो विधास्यते। तत्र कृतवाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारः, न तु तेनेष्टवतः, राज्यफलादपि साम्राज्यफलस्यातिशयितत्वेन उत्तमफलसाधनयागानन्तरमवरफलकेतुक्रतुकरणस्यायुक्तत्वात्। अत एव कात्यायनः— "राज्ञो राजसूयोऽनिष्टिनो वाजपेयेन"—इति †।

इष्टि पशु सोम-दर्विहोमैः शतप्रधानो ‡ राजसूयः। तत्र "अग्नीषोमीयेनुमत्यै पुरोडाशं अष्टाकपालम्"—इत्यादिना विहिता इष्टयः §, "अथ श्वैनीं विचित्रगर्भां अदित्या आलभत"—इत्यादिना विहिताः पशवः ‖, पवित्राभिषेचनीय दशपेय केशवपनीय व्युष्टि द्विरात्र क्षत्रधृति संज्ञकाः सप्त सोमयागाः, पञ्चवातीयादयो दर्विहोमाः ¶। तत्र पवित्रनामके प्रथमसोमयागे प्रकृतिधर्मानत्वेन वक्तव्याभावात् तं परित्यज्य तदवसाने कर्त्तव्यं पूर्णाहुतिप्रभृति वैविधिकं सूत्रजातं अभिधीयते **।

पूर्णाहुते कालं कात्यायन सूत्रयामास— "पवित्रचतुर्दीक्ष ,

---

* '॰कर्तृकसंस्थारूपो वा (?)'—इति क।

† का॰ श्रौ॰ सू॰ १५ १ १ २।

‡ सर्वैवैतदर्धपुरोडाशेष्ट्वाद्यन्ताः, क्वापि 'राजप्रधानो'—इति।

§ पुरस्तादिहैव (१ १ २—१३१ पृ॰) द्रष्टव्यम्।

‖ अवसानदिहैवाध्याये (५ २ ८) द्रष्टव्यम्।

¶ इत उत्तरस्यां कण्डिकायां (१ ३ ४) द्रष्टव्यम्।

** "इष्टिसोमपशवो मिश्रतन्त्राः कालभेदात्"—इति का॰ श्रौ॰ सू॰ १५ १ ३। तत्र "आनुमत्यादय इष्टयः, पवित्रादयः सोमाः, आग्नेयादयश्च पशवः"—इति कर्कः। 'मिश्रा अभिषेका, अभिषेचनीयत्वात्' —इति तै॰ सं॰ १ ८ १५ (=तै॰ ब्रा॰ १ ८ ?) भा॰ भा॰।

षट्सदक्षिणः, साद्यीयचयनीये दीक्षा, तदन्ते पूर्णाहुति-र्दैविष्कृतः"-इति * ॥

तद् विधत्ते — "पूर्णेति। आज्यपूर्णया स्रुचा हूयत इति पूर्णाहुतिः। सा समाम्नातमन्त्रत्वात् प्राजापत्या; "यत् पूर्णं तत् प्राजापत्यम्"-इति श्रुतेः †। तां जुहुयात्। पूर्णाहुतिकरणस्य कामनाधीनत्वं विधत्ते — "सर्वं मिति। पूर्णपदेन सर्वं गृह्यते। 'सर्वं' जगत् 'परिगृह्य' स्वाधीनं कृत्वा, पश्चाद्राजसूयानुष्ठानेन 'मूर्धि' अभिषिक्तो भूयासम् 'इति' अभिप्रायेण पूर्णाहुतिं कुर्यादित्यर्थः ॥

तस्या दक्षिणां विधत्ते — "तस्या मिति। 'तस्यां' हुताया मित्यर्थः। पूर्णाहुतेरितरावद् अवश्यकर्त्तव्यत्वे प्राप्ते कामनानुसारेणैव करणीयत्व माह — "स यदि कामयेतेति। पूर्णाहुतिकरणेच्छायां सत्यां तदनुष्ठानविपर्यये तद्विपर्यय इत्यर्थः ॥ १ ॥

आरम्भणीयस्थानीयात् ‡ पवित्राख्यादग्निष्टोमादङ्गः § परस्मिन्नहनि कर्त्तव्यं विधत्ते — "अथ श्वोभूत इति। सूत्रकृता पवित्रादनन्तर मुक्तम् — "श्वः अभ्युत्थानं पञ्चोत्तराण्यष्टा-

---

* का० श्रौ० सू० १५. १. ४—७।

† तै० ब्रा० २ ५. ७, ३. ६. ६ व्याख्यानं द्रष्टव्यम्। शत० ब्रा० 'अपरिमितं वा उपांशु' १. ३ ४. १०., ६ २. २. २०, 'अपरिमितं हि मनो अपरिमितं हीदं यत् तूष्णीम्' १४. ॥ ५।

‡ आरम्भः प्रयोजनं यस्याः इति विग्रहे "अनुप्रवचनादिभ्यश्छः" — इति (पा० ५. १. १११) छः। प्रायणीयाया एव नामान्तर मारम्भणीयेति। प्रायणीया-स्वरूपन्तु ऐ० ब्रा० १. १. १ द्रष्टव्यम्।

§ राजसूये प्रथमं पवित्रसंज्ञः सोमयागो भवतीत्येव सर्वत्र प्रसिद्धम्।

कपालोऽनुमत्यै"–इति *। यागानुष्ठानस्याधारत्वेनानुमापकत्वात् अनुमतिः पृथिवी, "इयं वा अनुमतिः"–इति ह्याम्नास्यते †। तस्यै अष्टसु कपालेषु संस्कृतं पुरोडाशमाकृष्य हविर्निर्वपेत् ॥

अथोत्तरतन्त्रं सूत्रे सङ्गृहीतम्—"अन्वाहार्यपचनात् हविष्य मग्न स्रुवे कृत्वा दक्षिणोल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाल्मीके शुष्कोल्मुके ते निर्ऋत इत्यनवेक्ष मेत्यनु मनस्य मध्यमादि करोति वासो देयम्"–इति ‡। तत् सर्वं क्रमेण विधत्ते—'स वै जघनेनेत्यादिना, "अग्नीभूत आग्ना वैष्णवम्"–इत्यन्तेन ग्रन्थेन। 'गम्या जघनेन' "एनपा द्वितीया" §। पश्चिमाया दिशि हवद अग्न्याधानात् अथ स्थापितायाः गम्यायाः पश्चात् 'ये' तण्डुलपिष्टलेशाः 'अध शीयन्ते' अध पतन्ति, 'तान्' स्रुवेण सोऽध्वर्युः 'सार्धं मध्य समपेत् ॥

उल्मुकेन सार्धं दक्षिणदिग्गमनं विधत्ते— "अन्वाहार्येति। तस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते— "स यत्रेति। 'इरिणम्' ऊषरक्षेत्रम्, तत्र स्वकृत'‖ स्वत छिद्रम्, न तु यत्र कृष्यादिनाधोधा प्रविष्टा, तस्मिन् 'श्वभ्रप्रदरे' गर्त-कारणे। विदीर्णप्रदेशे 'वा' [॥ २ ॥] उल्मुकाग्निं माधाय, स्रुवपूरितेन द्रव्येण जुहुयात् ॥

---

* का० श्रौ० सू० १५ १ ८ ९।

† अनुपद मैवाग्रेव चतुर्थकण्डिका (१२२ पृ० १३ प०) द्रष्टव्यम्। तै० ब्रा० १ ६ १ २ अपि द्रष्टव्यम्

‡ का० श्रौ० सू० १५ १ १० ११ १२।

§ पा० सू० २ ३ ३१। ‖ गर्तकारणे—इति क।

तत्र मन्त्रं विधत्ते— "एष ते इति *। 'निर्ऋते' पापदेवते। 'एषः' तण्डुलपिष्टभागः 'ते' तव 'भागः', 'तं' भागं 'जुषस्व' सेवस्व। 'स्वाहा'-शब्दो हवनमित्रम् 'इति'।

भूमिर्द्विविधा; शालिगोधूमादिसर्वसस्याढ्या, तदयोग्या च। तत्राद्यभूमिरूपा अनुमतिः, द्वितीयभूमिरूपा निर्ऋतिः †; सैवानिष्टकारिणी पापदेवता,— तथा भूमिः पापिष्ठं जनं पीडयितुं व्याप्नोति। 'तत्' तथा सति 'अस्याः' भूमेः 'यत्र' यस्मिन् राजसूयानुष्ठानदेशे 'नैर्ऋतं रूपम्'; एतेन होमेन शमितवान् भवतीति। "तयो दैवम्"-इत्यादिना नैर्ऋतहोमस्य प्रयोजनकथनम्। "एतद्दु छाया इति। 'एतत्' एव इरिणप्रदेशात्मकं स्थानं अस्याः भूमेः सम्बन्धि 'निर्ऋतिगृहीतम्' निर्ऋत्याख्यया पापदेवतया स्वत्वेन स्वीकृतम्; अतः तत्र नैर्ऋतहोमानुष्ठानं युक्त मिति ॥ १ ॥

पुनरागमनं विधत्ते— "अप्रतीक्ष मिति। 'अप्रतीक्ष' यत्र निर्ऋत्यै होमः कृतः, तं प्रदेशम् अनभीक्षमाणा एव पुनर्गच्छेयुः। अथानुमतस्य हविषः प्रचारं विधत्ते— "अथानुमत्या इति। "प्रचरन्तीति। अनुमतहविषः संवपनादिकं कुर्युरित्यर्थः। तदेवाख्यान मुदाहृतम्— "इयं वा अनुमति रिति ‡। भूमिरूपा अनुमतिः; तत्र यत् कर्म करोति, यत् कर्तुं मिच्छति, तत् सर्वं भूम्यात्मिका अनुमतिर्देवता अनुजानाति, तथा 'अनुमत्या' अनुज्ञातः 'सूर्ये' राजसूयाख्यं कर्म

* का० सं० ५. ४५. १।

† तै० सं० १. ८. १=तै० ब्रा० १. ६. १ भा० भा० द्रष्टव्यम्।

‡ पुरस्तादित्येव द्वितीयकाण्डभाष्ये (१२८ पृ० ७ पं०) द्रष्टव्यम्।

करयाणि, इत्यनेनाभिप्रायेणानुमतहविर्निर्वाप। 'तत्' तेन हविषा भूमिं मेव प्रीणितवान् भवति ॥ ४ ॥

इयि अयणसाधनकपालगता अष्टसङ्ख्या गायत्रीद्वारा पृथिवी योग्यत्वेन प्रशंसति— 'अथ यदष्टेति *। 'अथ यत् समान श्चेति। अस्यार्थ,— 'समानस्य' एक मेव हवि उभयत्र' अनुमत्यै निऋत्यै च ह्रयते, उभयोरपि पृथिव्यात्मकत्वादिति। तस्य दक्षिणा विधत्ते— 'तस्य वास इति †। तत् प्रशंसति— 'यद्वै सवासा इति। यथा लोके पुरुषो वस्त्रसहित सन् रक्षागतम चोरादिभयात् न कामयते, तद् यत्र भयरहिते स्थाने 'निधाय' चेद् गच्छति, तदा 'अतिमुच्यते' भयाद् विमुक्तो भवति, तद्वद् वासोदानेन 'सुयशामम्' 'एन' यज मानम् 'पाप्मा भय 'न' प्राप्नोति ॥ ५ ॥

तदनन्तरदिवसेऽनुष्ठेय कर्म विधत्ते—"अथ श्वोभूत इति ‡। अग्निर्विष्णुश्चोभौ देवता यस्य हविष", स निर्वपेत्। "तेन यजेतेति। प्रकृतौ इष्टिवदेवेष्टि § कार्या। तेन अनुमतीष्टिवत् तन्मध्ये केवल तस्य किञ्चिदपि न विद्यत इति भाव। "तद् यदेवेति। 'अद' अमुष्मिन् विप्रकृष्टे सोमप्रकरणे 'प्रयात'

---

* 'यत्रकपालोऽनुमत्यै—इति का० श्रौ० सू० १५ १ ६। पुरोडाश इति शेष। तै० स० १ ८ १ १ १।

† का० श्रौ० सू० १५ १ १२।

‡ फाल्गुनशुक्लदशमी मारभ्य प्रतिदिन मेकैक यस्य हवींषि भवन्ति। तत्र प्रथम दशम्या मानुमतम् तत उत्तर मिद मासावैष्णवम् एकादश्या मिति।

§ प्राकृतीष्टि०—इति क ख ग।

'दीक्षणीयं' दीक्षार्थं निरुप्यम् 'आग्नावैष्णवं हविः', 'तदेव' इदानीं निरूप्यमाणं हविरिति तत्तादात्म्येन प्रशंसा। हविषो देवतासम्बन्धं प्रशंसति— "अग्निर्वा इति। अग्नेः सर्वदेवतात्मकत्वं प्रतिपादयति— "अग्नौ हीति। अग्नौ हि सर्वा देवता हूयन्ते, अतः सर्वदेवतार्थहविर्होमाधिकरणत्वादग्निः सर्वदेवतात्मकः। सः 'अग्निः' 'यज्ञस्य' 'अवरार्द्ध्यः' आदौ स्थितः, 'विष्णुः परार्द्ध्यः' यज्ञस्य चरमभागेऽवस्थितः। तथाहि प्रकृतिभूतस्याग्निष्टोमस्य आदौ दीक्षणीयायाम् आग्नावैष्णवे हविषि अग्नेः प्रथमदेवतात्वेन सम्बन्धः, अवसाने चोदवसानीयेष्टिस्थानी विष्णुदेवताका पूर्णाहुतिर्हूयते। यद्वा, आज्यशस्त्रे प्रथमम् "भूरग्निर्ज्योतिः"-इति * अग्नेः प्राथम्यम्, चरमशस्त्रे आग्निमारुते 'विष्णोर्नु कम्"-इति † अवसानात् विष्णोश्चरमत्वम्। एतदेवाभिप्रेत्यैतरेयकम्— "अग्निर्वै देवानां प्रथमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता"-इति ‡। "तत् सर्वा इत्यादि। तस्मात् तन्मध्यवर्तिनीः वक्ष्यमाणा 'सर्वाः' सोमदेवता अग्नि साध्य विष्ण्वात्मकं सर्वं यज्ञम् 'एतेन' आग्नावैष्णवेन हविषा 'परिगृह्य' परिवेष्ट्य स्वाधीनं कृत्वा 'सुवे' राजसूयाख्यं कर्म करवाणि 'इति' दीक्षितेच्छादेव तस्मादित्यन्वयः॥

दक्षिणा विधत्ते— "तस्य हिरण्य मिति §। "आग्नेयो

---

* ऐ० ब्रा० २ ५ ५, २ ४ ७ खण्डौ द्रष्टव्यौ।

† ऋ० सं० १० १५४ १। 'वैष्णवीं शंसति'—इति च तद्विधायकं ब्राह्मणम् ३ ३ १४।    ‡ ऐ० ब्रा० १ १ १।

§ "हिरण्यं सामाविभाजे"—इति का० श्रौ० सू० १२ १ १२। तै० सं० १ ८.१ ४। 'वामनो वही दक्षिणा'।

वा इति। अस्यायमर्थः ;— यद्योऽग्निदेवत्यः खलु, न मन्त्र- यज्ञनिष्पत्तेरभावात्। 'हिरण्यम् अग्नेः रेतः'; विष्णोर्यज्ञात्मकत्वं श्रुतिप्रसिद्धम् *; विष्ण्वात्मकस्य यज्ञस्य चाग्निसाध्यत्वात् तद्रूपत्वम्; तस्मात् परम्परया 'तद्' तद् विष्णुदेवत्य मपि कर्म, 'तदाग्नेयम्' अग्निदेवत्य मेव जातम्। तस्मादाग्नावैष्णवस्य हविषः 'आग्नेयं हिरण्यं' दक्षिणात्वेन भवितु युक्त मिति ॥ ६ ॥

तस्मात् पौनराधेयं कर्म विधत्ते—, "अथ श्वोभूत इति †। 'तेन' आग्नेयपौभीयेण हविषा यजेत। "यथेष्टीमि। सर्वेष्टीनां पौर्णमासेष्टिः प्रकृतिभूता; तद्वदत्रापि तदीय मन्त्रजातं कुर्यादित्यर्थः। "एतेन वा इत्यादि। 'एतेन' हविषा हवं हत्वा विजितवतः 'अस्य' इन्द्रस्य 'इयं' परिदृश्यमाना 'या' 'विजितिः' अस्ति, 'ताम्' 'इन्द्रो व्यजयत' इति सम्बन्धः। 'तथा' 'एष' अपि अनुष्ठाता 'एतेन' हविषा सर्वान् शत्रून् जयति ॥

तस्य दक्षिणा विधत्ते— "उत्सृष्टो गौरिति ‡। कियन्तं कालं शकटवहनादौ विनियोज्य पश्चाद् य उत्सृज्यते, स 'उत्सृष्ट'। तां दक्षिणां प्रशंसति— "उत्सर्जं मिति। 'पसुम्' अस्मरिषे हसमाने 'चन्द्रमसम्' उत्सृज्योत्सृज्य 'प्राप्ति'। तदेव

---

* अत्रैकत्रैव तृतीये काण्डे असकृदाम्नातं द्रष्टव्यम् ( ३ ५ ३ १, ६, ५ २ १, १६)। तै० सं० १ ३ ८ ५ 'यज्ञो वै विष्णुः'।

† द्वादश्यां मिति यावत्।

‡ "पुनरुत्सृष्टो गौरदेयोऽग्नौ पौनराधेये"—इति का० श्रौ० सू० ४ ५ १४। तै० सं० १ ५ १ ५=तै० ब्रा० १ ६ १ हिरण्यं दक्षिणा।

विवृणोति— "पौर्णमासीमेवेति। पौर्णमासीं आरभ्य खलु देवाः 'घ्नन्ति', प्रतिदिवसमेकैककलापचार* एव तस्य हननमित्यर्थः। अमावास्याकालम् आरभ्य 'उत्पूनन्ति' प्रतिदिवसं तथैकैककला-वृद्धेः। 'तस्मात्' अस्य हविषः सोमदेवतासम्बन्धादेव तादृशी गौर्दोहयितव्येन शृत इत्यर्थः ॥ ७ ॥

तदनन्तरदिनसङ्कल्प्य मिष्ट्यन्तरं विधत्ते— "यत्र श्रीभूत इति †। पुरा वृत्रहननाद् भीत इन्द्रोऽपक्रान्तं स्वकीयम् 'एतेन हविषा' 'पुनः' आत्मन्यधारयत्; एवम् 'एषः' अपि अनुष्ठाता 'एतेन' हविषा। यदिदं तेजः, स एवाग्निः; यदिदम् 'इन्द्रियम्' इन्द्रस्यासाधारणं सत्त्वं, स एवेन्द्रः; धर्म-धर्मिणोरभेदोपचारात् तादात्म्यम्। ते 'उभे' तेजोबलरूपे 'वीर्ये' 'परिगृह्य' 'सूयै' 'इति' अभिप्रायेण ऐन्द्राग्नहविः प्रचारः कर्त्तव्यः॥

दक्षिणां विधत्ते— "तस्य ऋषभ इति ‡। ऐन्द्राग्नस्य हविषो दक्षिणात्वेन विहितस्य साण्डस्यानडुहो देवताद्वययोग्यतां दर्शयति— "स हि वहेनेति। वहं नाम युगवहनदेशः, स्कन्धप्रदेशः। तस्य दग्धप्रदेशवत् कृष्णवर्णत्वादाग्नेयत्वम्' आण्डा-भ्याम् ऐन्द्रं' सेचनसमर्थत्वादिति § ॥ ८ ॥

तदनन्तरकर्त्तव्य मिष्ट्यन्तरं विधत्ते— "अथाग्रयणेष्ट्येति। सा आग्रयणेष्टिः द्वितीयकाण्डेऽभिहिता ‖, तस्या अत्र राज-

* '०कलामपचार'—इति च।  † यथोदस्था मिति यावत्।

‡ का० श्रौ० सू० १५. २. १५। चतुर्दश्या मिति यावत्।

§ तै० सं० १. ८. १. ८ इत्यपि दक्षिणाख्यानम्।

‖ २ का० ३ प्र० ५ ब्रा० (२ भा० २१४—२२७ पृ०) द्रष्टव्यम्।

सुताङ्गत्वेन प्रयोगः। "सर्वान् वा इत्यादि। इष्टि पशु सोम-दर्विहोमात्मकत्वाद्राजसूयस्य, तदनुष्ठानेन यज्ञक्रत्विष्ट्यादयः सर्वेऽनुष्ठिता भवन्ति। आग्रयणेष्टिरपि दैवसूत्वेन प्रशस्त-त्वादस्यावरोद्धव्या। अत्र, 'अनया' आग्रयणेष्ट्या 'अपि' 'मे' मम 'इदम् अभूत्' यागः कृतो भवतु; 'अनयापि' इष्ट्या 'सुते' अभिषिक्तो भूयासम् 'इति' अनेनाभिप्रायेण आग्रयणेष्टिः कार्येत्यर्थः॥

तस्या इष्टेः प्रयोजनमाह— "ओषधीर्वा इति। 'एषः सूयमान' यजमानः 'ओषधीः' परिपक्वा व्रीहियवाद्याः 'अभि' लक्ष्य 'सूयते' अभिषिच्यते। 'तत्' तथा सति 'अनया' आग्रय-णेष्ट्या ता एव 'ओषधीः' 'अनमीवाः' रोगरहिताः आरोग्य-कारिणीः, 'अकिल्बिषाः' पापरहिताश्च 'कुरुते'। आग्रयणे-ष्टेर्नवान्नभोजनाङ्गत्वात् तदकरणे भोक्तॄणां रोगः पापं च स्यात्; इह तु तदनुष्ठाने तादृग्दोषरहिताः ओषधीरभिलक्ष्य राज सूयाख्यं कर्म करवाणीति यष्टुराशयः॥

दक्षिणां विधत्ते "तस्य गौरिति *। 'तस्य' आग्रयणस्य† ॥ ८ ॥

अथ चातुर्मास्यानि विधत्ते— "अथ चातुर्मास्यैरिति। तेषां काल' सूत्रितः उत्कर्षेण पञ्चाहादनन्तरम्— "चातुर्मास्य-प्रयोगः फाल्गुन्याम्"—इति ‡। "सर्वाण्वा इत्यादि। सर्व-क्रत्विष्टिदर्विहोमावरोधरूपराजसूयमध्ये चातुर्मास्याख्यो यज्ञक्रतु-

---

* का० श्रौ० सू० १५ १ १६। 'गौरा यथाग्रयणं व्रीह्याग्रयणे विधीयते, न सौम्याग्रयणम्—इति तत्र कर्कः।

† 'आग्रयणं भवति हुताद्याय—इत्यादि तै० ब्रा० १ ६ १।

‡ का० श्रौ० सू० १५ १ १७।

रण्यवरोहस्य इत्यनेनाभिप्रायेण तदनुष्ठानम्। अन्यत् पूर्ववत् योज्यम् ॥ १० ॥ २ [ २. ३ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम् । )

वैश्वदेवेन यजते । वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया इति तथो एवैष एतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया इति * ॥ १ ॥

अथ वरुणप्रघासैर्यजते । वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात् प्रामुञ्चत् ता अनमीवा अकिल्बिषाः प्रजाः प्राजायन्तानमीवा

---

* अत्र प्रयुक्तचातुर्मास्यशब्दो धर्मातिदेशार्थं नैतानि चातुर्मास्यानि, अपि त्वेते चातुर्मास्यवदनुष्ठेया राजसूययागविशेषा। अतो नित्यानां सति चातुर्मास्यानां क्रियाशक्तिर भवत्येव नैतैः तत्र सचातुर्मास्यत्वादिति।

१ इति—इति क, ख। "इति"—इति ग पुस्तके।

जुहोति व्विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहेत्यथोत्तरार्द्धे जुहोति मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहेत्यथ मध्ये जुहोति सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहेति * ॥ ५ ॥

अथ साᳫं समुह्य जुहोति। ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहेति तद्यदेवं जुहोति ॥ ६ ॥

यत्र वै देवाः। साकमेधैर्व्यजयन्त येयमेषां व्विजितिस्तां तद्वोचुस्तिष्ठन्ते वा ऽइमानि दिक्षु नाष्ट्रा रक्षाᳫंसि हन्तैभ्यो व्वज्रं प्रहरामेति व्वज्रो वा ऽआज्यं त ऽएतेन व्वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाᳫंस्यवाघ्नंस्ते व्यजयन्त येयं

* 'स्वाहेति'—इति क 'स्वाहेति' इति ख, 'स्वाहेति'—इति ग।

मेषां व्विजितिस्तां तथोऽ एवैष एतेन व्वर्त्मे-नाज्येन दिक्षु नाष्ट्रा रक्षांऽस्यपहन्ति तथो ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे सूया ऽइति * ॥ ७ ॥

अथ यदेता अपराः पञ्चाहुतीर्जुहोति । स्रवन्ति वा ऽएतदग्नेर्व्विहरन्ति यत् पञ्चधा वधनीयं व्यूहन्ति तदेवास्यैतेन सन्दधाति तस्मादेता अपराः पञ्चाहुतीर्जुहोति ॥ ८ ॥

तस्य प्राशित्रवाहनो ऽश्वरथौ दक्षिणा । त्रयो ऽश्वा द्वौ सव्यष्ठसारथी ते पञ्च प्राणा यो वै प्राणः स व्वातस्तदादेतस्य कर्मण एषा दक्षिणा तस्मात् पञ्चवातीयं नाम ॥ ९ ॥

स हैतेनापि भिषज्येत् । अयं वै प्राणो योऽयं पवते यो वै प्राणः स आयुः सोऽय मेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा व्विहितो दश वा ऽएता आहुती-र्जुहोति तदस्मिन् दश प्राणान् कृत्स्न मेव सर्वं

---

* इति—इति क   इति—इति ग घ ।

मायुर्दधाति स यदिहापि गतासुरिव भवत्या हैवैनेन हरति * ॥ १० ॥

अथैन्द्रतुरीयम्। आग्नेयो ऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनडुह्या वहलाया ऐन्द्रं दधि तेनेन्द्रतुरीयेण यजत इन्द्राग्नी उ हैवैतत् समूदाते ऽभिषिक्तवन्तो वा इमानि दिक्षु नाष्ट्रा † रक्षांसि हन्तैभ्यो वज्रं प्रहरावेति ॥ ११ ॥

स हाग्निरुवाच। त्रयो मम भागाः सन्त्वेकस्तवेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यपाहतां तौ व्यजयेतां येनयोरियं विजितिस्तथो एवैष एतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यपहन्ति तथो ऽएव विजयते विजिते ऽभये नाष्ट्रे सूया ऽइति ॥ १२ ॥

स य एष आग्नेयो ऽष्टाकपालः पुरोडाशो भवति ‡। सो ऽग्नेरेको भागो ऽथ यद् वारुणो यवमयश्चरुर्भवति यो वै वरुणः सो ऽग्निः सो

---

* 'हरति'—इति क, ख।
† 'नाष्ट्रा'—इति ख।
‡ भवति—इति क, ख। 'भवति' इति ग, घ

ऽग्नेर्द्वितीयो भागो ऽथ यद्रौद्रो गावेधुकश्चरु-र्भवति यो वै रुद्रः सोऽग्निः सो ऽग्नेस्तृतीयो भागो ऽथ यद्गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद् गावेधुको भवत्यथ यदनडुह्यै वहलाया ऽऐन्द्रं दधि भवति स इन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं तत्तुरीयं तस्मादिन्द्रस्तुरीयं नाम तस्यैषैवानडुही वहला दक्षिणा सा हि वहेनाग्नेय्यग्निदग्ध-मिव ह्यस्यै वहं भवत्यथ यत् स्त्री सती वृषभ-धर्मेण तद्रौद्र्याकृणाद् रूप मथ यद् गौस्तेन रौद्राथ यदस्या ऽऐन्द्रं दधि तेनैन्द्र्यैन्द्री हि वा ऽएतत् सर्वं यश्च । तस्मादेषैवानडुही वहला दक्षिणा * ॥ १३ ॥

अथापामार्गहोमं जुहोति । अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षाꣳस्यपामृजत ते व्यजयन्त येयं मेषा व्विजितिस्ता तथो ऽएवैष एतदपा-मार्गैरेव दिक्षु नाष्ट्रा रक्षाꣳस्यपमृष्टे तथो

* दक्षिणा इति क ग ।

ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे सूया ऽइति ॥ १४ ॥

स पालाशे * वा स्रुवे व्वैकङ्कते वा । अपामार्गतण्डुलानादत्ते ऽन्वाहार्यपचनादुल्मुक मादद्दते तेन प्राञ्चो व्वोदञ्चो वा यन्ति तदग्निᳪ समाधाय जुहोति ॥ १५ ॥

स उल्मुक मादत्ते । अग्ने सहस्र पृतना इति युधो वै पृतना युधः सहस्वेत्येवैतदाहाभिमातीरपास्येति सपत्नो वा ऽअभिमातिः सपत्न मपजह्येत्येवैतदाह दुष्टरस्तरन्नरातीरिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्व्वᳪ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति व्वर्चोधा यज्ञवाहसीति साधु यजमाने दधदित्येवैतदाह ॥ १६ ॥

तदग्निᳪ समाधाय जुहोति । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मुपाᳪशोर्व्वीर्येण जुहोमीति यज्ञमुखं वा ऽउपाᳪ-

* पलाशे इति क ।

म्पर्यग्गमुखिनैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति हतꣳ रक्षः स्वाहेति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १७ ॥

स यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति रक्षसा त्वा बधायेति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १८ ॥

स यदि प्राङ्‌‌डित्वा जुहोति । प्राञ्चꣳ स्रुव मस्यति यद्युदङ्‌‌डित्वा जुहोत्युदञ्चꣳ स्रुव मस्यत्यवधिष्म रक्ष इति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १९ ॥

अथाप्रतीक्ष पुनरायन्ति । स ईशैतदपि प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत् प्रतीत्य जुहोति प्रतीचीनफलो वा ऽअपामार्गः स यो ऽस्मै तत्र किञ्चित् करोति त मेव तत् प्रत्यग्धूर्वति तस्य नामादिशेद्दधिष्मामु ममी हस इति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ २० ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीय ब्राह्मणम् [२.४.] ॥

एवं चातुर्मास्यानि सामान्येन विधाय वैश्वदेवाख्यं प्रथमं पर्व विधत्ते— वैश्वदेवेनेति। वैश्वदेव मित्याग्नेयादिदशवि- रष्टकद्यप्रथमपर्वणो नामधेयम्। यत्र वैश्वदेवादीनां चतुर्णां पर्वणां मध्ये विहितान्यङ्गानि मासाग्निहोत्रन्यायेन नामातिदेशा- दतिदेष्टव्यानि। तदुपदेशस्तु द्वितीयकाण्डे पञ्चमेऽध्याये समा- म्नातः— "वैश्वदेवेन वै प्रजापतिरिति *। यत्र वैश्वदेवशब्देन शाखान्तरीया प्रसिद्धिः द्योत्यते। तथाच तैत्तिरीयके— "वैश्व- देवेन वै प्रजापतिः प्रजा असृजत"-इति †। 'भूमानं' ( प्रजापतिः ‡ ) भूयसीः प्रजा इत्यर्थः। "तथो एवैष इति। यथा पुरा प्रजापतिं वैश्वदेवयागेन भूयसीः प्रजाः सृष्टवान्, एवं सर्वं यजमानोऽपि तेन यागेन तथाविधाः 'प्रजाः' 'सृजते' सृजति। ताः 'सृष्टाः' प्रजाः पश्चिमस्य 'सूर्ये' सर्वं यज्ञ' मरयाणोति ॥ १ ॥

द्वितीयं पर्व विधत्ते— "अथ वरुणेति। 'अथ' वैश्वदेवा- नन्तरं चतुर्षु मासेषु व्यतीतेषु 'वरुणप्रघासैः' यजेत। तान् वरुणपाशमोचनसाधनत्वेन प्रशंसति— "वरुणप्रघासैर्वा इति। 'ता अस्येति। वरुणप्रघासयागेन पापविमोचनस्य ज्ञातत्वात् 'अस्य' प्रजापतेः 'ताः' वैश्वदेवेन सृष्टाः 'प्रजाः' रोगपाप- रहिताः सत्यः पुत्रपौत्रादिरूपेण प्रजायन्ते। यत मन्यत्। दार्ष्टान्तिके योजयति— "तथो एवैष इति। "ता अस्येति। 'अस्य' यजमानस्येत्यर्थः ॥ २ ॥

---

* १ मा० २३२ पृष्ठा द्रष्टव्या। वस्तुतोऽध्यायारम्भात् एव चातु- र्मास्योपदेशारम्भः (१म० १खा० ३अ०प्र०)।

† तै० ब्रा० १ ६ २ १। ‡ घ-ङ पुस्तकयोरिदं अधिकम्।

तृतीयं पर्व विधत्ते— "अथ साकमेधैरिति। 'अथ' वरुणप्रघासानुष्ठानानन्तरं चतुर्षु मासेषु साकमेधाख्या यागाः कार्याः। तान् पापरूपवृत्रजयसाधनत्वेन सदृष्टान्तं प्रशंसति— साकमेधैर्वै इति। 'वृत्रं' वृत्रासुरम् 'अघ्नन्' हतवन्तः। 'एनां' देवाना 'येयं विजितिः' इदानीं दृश्यते, 'तां' 'तैरेव' साकमेधैः 'व्यजयन्त' प्राप्नुवन्। "तथो एवैत्यादि, सिद्धम् ॥ ६ ॥

अथ चतुर्थं पर्व विधत्ते— "अथ शुनासीरीयेणेति *। शुनो वायुः, सीर आदित्यः, तद्देवत्यं हविः शुनासीरीयम्; तद्योगात् चतुर्थं पर्व शुनासीरीयमित्युच्यते †। "उभौ रसाविति। शुनासीरयो रसरूपत्वं हि द्वितीये काण्डे स्पष्टं श्रुतम्— "अथ यच्छुनासीरीयेण यजेत या वै देवानाᳯ श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां तच्छुन मथ यः संवत्सरस्य प्रजितस्य रस आसीत् तत् सीरᳯ स या चैव देवानाᳯ श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत् तमेतदुभयं परिगृह्यात्मन् कुरुते"—इति ‡। शुनासीरीयप्रयोगकालः सूत्रितः— "पवित्रदीक्षाप्रभृति शुनासीरीयम्"—इति §। पवित्राख्यस्य सोमयागस्य संवत्सरे यस्यां तिथौ दीक्षा कृता, तस्यां फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व कार्यम्। अर्थात् पवित्रशुनासीरीययोर्मध्ये वैश्वदेवादीनि त्रीणि पर्वाणि क्रमेण चतुर्षु मासेषु कार्याणीत्युक्तं भवति ॥

* 'शुनासीर्येण'—इति मूलपाठः।

† का० श्रौ० सू० ५ १ १८। तै० सं० १ ८ ७ द्रष्टव्यम्।

‡ २ ६ ३ ॥ (पृष्ठा० ४४९० १०पं०) द्रष्टव्यम्।

§ का० श्रौ० सू० ५ १ १६।

पञ्चवातीयहोमं * विधत्ते— "अथ पञ्चेति †। 'पञ्चवातीयम्' इति कर्मनामधेयम्। 'आहवनीयम्' अग्निं 'पञ्चधा' 'व्युह्य' प्रतिदिशं मध्ये च पृथक् कृत्वेत्यर्थः। आज्यस्थाल्याः 'स्रुवेण' 'उपघातम्' उपहत्योपहत्य गृहीत्वा 'जुहोति' ॥ ४ ॥

तत्र पूर्वादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनं विधत्ते— "स पूर्वार्द्ध इत्यादिना। पूर्वार्द्धे भवः 'पूर्वार्द्ध्यः' अग्निः। "अग्निनेत्रेभ्य इत्यादि ‡। अग्निः 'नेत्रं' नयनस्थानीयः साधनं येषां तेभ्यः। 'पुरःसद्भ्यः' पूर्वस्यां दिशि सीदन्तीति तथोक्ताः, तेभ्यः 'देवेभ्यः' 'स्वाहा' सुहुतमस्तु। एवमुत्तरत्रापि योज्यम्। 'दुवस्वद्भ्यः' दुव इत्यन्ननाम §; हविर्लक्षणान्नयुक्तेभ्यः ॥ ५ ॥

इत्थं पञ्चभिर्मन्त्रैः पञ्चस्वग्निषु हुत्वा पुनस्तानग्नीनेकीकृत्य तैरेव मन्त्रैर्हवनं विधत्ते— "अथ सार्द्धमिति ||। पञ्चाप्यग्नीन् 'सार्द्धं' 'समुह्य' समस्य जुहुयात्। तानेव मन्त्रान् ¶ पुनः पठति— "ये देवा इति **। अर्थस्तु पूर्ववत् ॥ ६ ॥

पञ्चवातीयहोमस्य द्रव्यं विधास्यन्नाह— "अथ वै देवा

---

* तै० सं० १ ८ ७ 'पञ्चवातीयमन्त्राः'।

† का० श्रौ० सू० १५ १ २०।

‡ वा० सं० ९. ३५, ३६।

§ 'दुवस परिचर्यायां परितापे च' कण्ड्वादिः। 'दुवस्यति'—इति परिचरणकर्मसु पठितम् (निघ० ३ ५ ५)। 'दुवस्यति, दुवस्वती इत्यौपमिककर्मा'—इति च निरु० १० २ ७।

|| का० श्रौ० सू० १५ १ २१

¶ तैरेव मन्त्रैः मन्त्राणां पुरस्तात् 'ये देवाः'—इति पदस्य प्रयोगोऽपि विशेषः। संहितायां तु एवमेवाम्नानात्।

** वा० सं० ९ [illegible] १—५।

इति। "तद्वोक्षुरिति। 'तत्' तत्र विजितप्रदेशे देवाः 'ऊचुः' उक्तवन्तः। किम्? इति। 'इमानि' 'नाष्ट्रा' नाशकारीणि 'रक्षांसि' 'दिद्युः' 'उत्तिष्ठन्ते' उत्कटं पिबन्ति, प्राणिनो भक्षयन्ति। 'हन्त' इति हर्षे। 'एभ्य' रक्षोभ्यः 'वज्रं प्रहराम' 'इति' विचार्य, आज्यरूपेण वज्रेण तान् राक्षसान् एव अघ्नन्। श्रूयते हि आज्यस्य वज्रत्वम्। "घृतं वै देवा वज्रं कृत्वा"–इति *। "ततो एवैष इत्यादिना इदानीं मनुष्यास्तुरपि तथा-विधफलप्राप्तिदर्शनम् ॥ ७ ॥

पत्नीना समासेन इत आहुतिपञ्चकं प्रशंसति— "अथ यदेता इति। पूर्वं आहवनीयस्य पञ्चधा व्यूहनेन तं अग्निं 'क्षण्वन्ति' हिंसन्ति। "क्षणु हिंसायाम्"–इति धातुः †। तथा तस्य 'अग्नेः' अवयवान् 'वितृहन्ति' विश्लेषयन्ति। "तृह उद्यमने"–इति धातुः ‡। तं अनेन पुनः समस्य पञ्चाहुति-करणेन धीहितवान् भवतीति ॥ ८ ॥

तस्य होमस्य नियुक्त मध्वर्यं दक्षिणात्वेन विधत्ते— "तस्य प्रतिप्राह्म इति §। "अश्व इति। रथस्य सव्यभागे तिष्ठनेक, धारयितैक इति द्वौ, पक्षगतौ मिलनद्वौ धारयितारौ हिल-षद्वाश्च मिलिताः पञ्चप्राणात्मकः प्रशंसति— 'स पञ्चेति। प्राणवातयोरैक्यात् पञ्चवातीयहोमस्य मनुष्यादारा प्राणात्मकाय रथो दक्षिणात्वेन युज्यते। 'तस्मात्' कर्मयोऽपि पञ्च वाताः प्राणा अस्मिन् सन्तीति 'पञ्चवातीय नाम' सम्पन्नम् ॥ ९ ॥

---

* तै० सं० ६ २. १ ७ द्रष्टव्यम्।

† भ्वा० प० ३ धा०। ‡ तु० प० ५६ धा०।

§ का० श्रौ० सू० ११ १ २०।

आरोग्यकामस्यापरं होमं विधत्ते— "स ऐतेनायीति। 'एतेन' होमेन 'भिषज्येत्' चिकित्सेत्। "भिषज् चिकित्सायाम्"-इति धातुः *। अत एव सूचितम्— "व्याधितस्याग्नेय मिति †। प्राणस्यायुष्ट्वं शरीरधारकत्वात्। 'सः' प्राणरूपेण 'एकः' अपि पुरुषशरीरेऽनुप्रविष्टः सन् वृत्तिभेदात् चक्षुःश्रोत्रादिविकारेषु सञ्चरन् 'दशधा विहितः' भवति। अत एतद्दशाहुतिकरणात् 'दश प्राणान्' व्याधितं 'पुरुषं' 'आत्मन्' सम्पूर्णं 'सर्वं प्राणः' वि-'दधाति'। 'सः' तु 'गतासुः एव भवति' तम् 'अपि' अनेन होमेन 'आहरति एव' पुनर्जीवयत्येवेत्यर्थः ॥ १० ॥

यागान्तरं विधत्ते— "अथेन्द्रेति। 'अथ' अथवातीयहोमानन्तरम्, इन्द्रस्तुरीयश्चतुर्थहविर्देवता यस्मिन् कर्मणि, तत् 'इन्द्रतुरीयं' कर्म भवति इत्यर्थः ‡। तस्य हविश्चतुष्टयं विधत्ते— "आग्नेय इत्यादि §। 'गवीधुकाः' आरण्यगोधूमाः ||। 'वरुणाय' यवं नाम धान्यविशेषः, तस्मै 'अनडुह्यै' वहनार्थे चतुर्थी, तस्याः। 'दधि' 'ऐन्द्रम्' इन्द्रदेवत्यं कुर्यात्। अथ विधत्ते— 'तेनेन्द्रतुरीयेणेति।

यागस्येन्द्रतुरीयत्वं आख्यायिकया दर्शयति— "इन्द्राग्नी ह वै एतदिति। 'अमूदातां' संवादं कृतवन्तौ ॥ ११ ॥

---

* काश्य० प० २१ धा०।

† का० श्री० सू० १५ १ २२। 'दाक्षध्याद् यदि.'-इति कर्कः।

‡ का० श्री० सू० १५ १ [illegible]। एतच्च कात्यायनो चोभिर्त पठति। तै० सं० १ ८. ७।

§ का० श्री० सू० १५ १ २४।

|| गवेधुका महती अन्नधानां धान्यानि फलानि'-इति देव०।

"स प्राश्निरित्यादिना, अग्नेस्त्रयो भागाः, इन्द्रस्य तुरीय एको भाग इति यागस्यार्थात् इन्द्रतुरीय मिति नाम निरुक्तम्। स्पष्ट मन्यत् ॥ १२ ॥

अग्नेर्भागत्रयं क्रमेण प्रतिपादयति—"स य आग्नेय इति *। "यो वै रुद्र इत्यादि। वरुणो रुद्रश्चोभावप्यग्निरेव। तथाच तैत्तिरीयके— 'ते देवा अग्नि मब्रुवन्निति प्रक्रम्य "स त्रेधा-त्मानं व्यकुरुताग्नि' तृतीयं रुद्रं तृतीयं वरुणं तृतीयम्"-इति †। "वास्तव्य इति। रुद्रः खलु वास्तुभवः। ग्रामाद् बाह्यो यज्ञभूमिश्मशानादिर्वास्तुः। 'गवीधुकाः ‡' अपि 'वास्तु-भवाः'। अतो गावीधुकहविषो § रुद्रदेवत्यत्वं युक्त मिति। "अथ यदनडुह्या इत्यादि। स्पष्टार्थम् ॥

तस्य दक्षिणां विधत्ते— "तस्यादेवेवेति ||। दक्षिणारूपाया अनडुह्या अग्निवरुणरुद्रेन्द्रदेवतानां मौचित्यं दर्शयति— "सा हि वहतेति। युगवहनवह्नेगोरूपावर्णत्वात् अग्नेः सम्बन्धिनी। स्त्रीत्वे सत्यपि, 'अधर्मेण' स्त्रिया अयोग्येनानोवहनेन वारुणी; वरुणो हि अपापैः सर्वान् बध्नाति। गवां रुद्रदेवत्यत्वाद् 'तेन रौद्री'। यदीयस्य दध्न ऐन्द्रत्वात् 'तेन' 'ऐन्द्री' इन्द्रदेव-

---

* 'आग्नेयः, वारुणो यवमयश्चरुः, रौद्रश्च गावेधुकः, दक्षिणे-दध्यैन्द्रम्'—इति का० श्रौ० सू० १५. १. १५, १६, १८, १९।

† तै० ब्रा० १ ७ १। इत उत्तरं तत्र सैव माम्नातम्— "सोऽब्रवीत्, क इदं तुरीय मिति। अह मित्यिन्द्रोऽब्रवीत्। ०—०। स इन्द्रस्तुरीय मभवत्। यदिन्द्रस्तुरीय मभवत्, तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम्"—इति।

‡ 'गवेधुकाः'—इति मूलपाठः।

§ 'गावेधुकहविषः'—इति च।

|| 'तस्यैवेवेति'—इति मूलपाठः।

ताका *। एतादृशी 'अनडुही' एतस्येन्द्रतुरीयकर्मणो दक्षिणात्वेन संयुज्यत इत्यर्थः † ॥ १३ ॥

विधत्ते— "अथापामार्गहोमं जुहोति ‡। तं स्तौति विजितिसाधनत्वेन प्रशंसति— "अपामार्गैर्वै देवा इति। 'अपामृजत' अपमार्जनं कृतवन्तः। "अपघ्नत इति। इदानीं सम्यगपमार्जनं करोति § ॥ १४ ॥

तस्यानुष्ठानं सविशेषमाह— "स पालाशे वेति। पलाश-वैकङ्कतयोरन्यतरनिर्मिते 'स्रुवे' अपामार्गतण्डुलानाधाय अन्वाहार्यपचनादेकमुल्मुकमादाय प्राङ्मुखः उदङ्मुखो वा 'यन्ति'। तत्राग्निं प्रतिष्ठाप्य होमः कर्त्तव्यः ‖ ॥ १५ ॥

उल्मुकादानमनूद्य मन्त्रं विधत्ते— "स उल्मुकमिति ¶। हे 'अग्ने!' 'पृतनाः' सङ्ग्रामान् 'सहस्व', 'अभिमातीः' अभिमन्यमानान् शत्रून् 'अपास्य' अपक्षिप। "अप सेधन्" **। एवमनिष्टनिवृत्तिं सुखोत्पत्तिं प्रार्थयते— 'दुष्टः'

---

* 'वहिनीदक्षिणम्'—इति का० श्रौ० सू० १५. १. ३५। 'वहिन्या तोरेधि वहिनीरधि। अनो वहतीति वहिनी गौः'—इति तत्र कर्कः।

† का० श्रौ० सू० १५. १. ३०। 'वहिनी धेनुर्दक्षिणा'—इति तै० सं० १. ८. ७. १। 'यद् वहिनी, तेनाग्नेयी, यद् गौः, तेन रौद्री, यद् शुक्लेनैन्द्री, यत् स्त्री सती दान्ता, तेन वायवी अनड्वान्'—इति च तत्र तै० ब्रा० १. ७. १।

‡ तै० सं० १. ८. ७=तै० ब्रा० १. ७. १।

§ का० श्रौ० सू० १५. २. १। 'इन्द्रतुरीयाद्यन्तोऽभूते कात्यायनी प्रदाने'—इति तत्र कर्कः।

‖ का० श्रौ० सू० १५. २. २।

¶ का० श्रौ० सू० १५. २. ३।   ** दि० प० द्र०।

अन्यैस्तरीतु समन्यः स्वयम् 'अरातीः' शत्रून् 'तरन्', 'यज्ञपाः असि' यजमाने 'वसूः' धनं 'धाः' धारयसि ॥

मन्त्रं प्रतिपाद्य समूह्य व्याचष्टे—"अग्ने अदब्धेति *। वर्षःपदस्य श्रेयःपरत्व माह—"साधु यजमान इति। 'दधत्' धारयन्नित्यर्थः ॥ १६ ॥

हवन मनूद्य मन्त्रं विधत्ते—"तदग्नि मिति †। "दिवस्य खेति ‡, व्याख्यातम्। "उपांशोरिति। 'उपांशुः' नाम 'यज्ञमुखं' प्रथमो ग्रहः, तस्य 'वीर्येण' 'जुहोमि'। तेन हवनेन 'रक्षः' हतं निहतं नष्टं भवतु। 'स्वाहा' इदं हविः सुहुत मस्तु इति ॥ १७ ॥

पात्रासमीकस्थयोरेकतरस्य हवनोपयुक्तस्य स्रुवस्य शेषार्थं सार्थवादं विधत्ते—"स यदि प्राञ्चम् इति §। शेषणमन्त्रं पठति—"रक्षसा मिति ‖। हे स्रुव! 'रक्षसां वधाय' 'त्वा' त्वाम्, अस्यामीति शेषः ॥ १८ ॥

"स यदीति। 'यदि' अध्वर्युः 'प्राङ्' प्राङ्मुखः पूर्वस्यां दिशि गत्वा जुहुयात्, तर्हि 'स्रुवं' 'प्राञ्चं' प्राग्दिक्सम्बन्धम् 'अस्यति' क्षिपति। यदग्निर्दक्षिणादावप्येवं योज्यम्। हवनप्रदेशात् तन्निर्वर्तनं विधित्सुरादौ तन्मन्त्रं ¶ पठित्वा व्याचष्टे— "अवधि-

---

* वा० सं० ६. ३७ १।
† का० श्रौ० सू० १५. १ ६।
‡ वा० सं० ६. ३८ १।
§ का० श्रौ० सू० १५ २. ७।
‖ वा० सं० ६ ३८ १।
¶ वा० सं० ६. ३८. २।

घेति। अनेनापामार्गहोमेन 'वृश्च' 'अवधिषम्' अयं हतस्य। भूते लुङ् ॥ १८ ॥

एतन्मन्त्रकरणकं पुनरागमनं विधत्ते— "अथाप्रतीक्ष मिति *। 'अथ' 'अप्रतीक्षं' तं प्रदेशं प्रतिनिवृत्य, आगच्छेदित्यर्थः। अभिचर्यमाणस्यापि स्वोपद्रवपरिहारार्थं होमं विधत्ते— "स हैनेनापीति। 'एतेन' अपामार्गहोमेन 'अपि', न केवलं पञ्चदशीयहोमेन, एतेनापि 'प्रतिसरं' स्वरक्षा अभिचर्यमाणः कुर्यात् †। हवने कञ्चिद् विशेषं विधत्ते— "स यस्या मिति। अभिचारको यस्यां 'दिशि' भवेत्, तां दिशं 'प्रतीत्य' गत्वा जुहुयात्। "प्रतीचीनफल इति। अपामार्गमञ्जर्यौ ‡ यतः प्रतीचीनफलाः §, स्वाग्रमं प्रतिगतैरधोमुखैः फलैर्युताः ||; अतोऽभिचारस्य 'अग्रे' यजमानाय 'किञ्चिद्' पौष्टादिकं कुर्यात्। 'त मेव' एतेनापामार्गहोमेन प्रतिमुखं 'धूर्वति' हिनस्ति, तत्कृतोऽभिचारः त मेव प्रतिनिवृत्य हिनस्तीत्यर्थः। निवर्तनमन्त्रेण शत्रुनामादेशनं विधत्ते— "तस्य नामेति ¶। "अवधिषामु मिति। 'अमुम्'-'असौ'-इति पदयोः स्थाने अभिचारकनामधेयं द्वितीयान्तत्वेन प्रथमान्तत्वेन चादिशेदित्यर्थः॥

अत्र सूत्रम्— "दिवस्त्वेति जुहोति, इयमा स्तेति स्रुव मस्यति, तां दिशं यस्यां जुहोत्यवधिषम् अत्र इत्यादिमन्त्र

---

* का० श्रौ० सू० १५ २ ८।
† का० श्रौ० सू० १५ २ ९।
‡ नास्त्येतत् पदं ख पुस्तके।
§ 'प्रतीचीनफलः'—इति ख।
|| फलैर्युतः—इति ख।		¶ का० श्रौ० सू० १५ २ १०।

नयेत मभिचर्यमाणोऽपि ना द्विषं गत्वाभिचरतो नामादिशेत्"–इति * ॥ २० ॥ ३ [ २. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् . )

आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति। ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते पुरुषामितहैवा उपायंस्तयो ऽग्न्वैव ऽएतत् पुरुषानेवोपैति ॥ १ ॥

स यदाग्नावैष्णवः †। एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता वैष्णवाः पुरुषास्तदस्मा ऽग्निर्दाता पुरुषान् ददाति ॥ २ ॥

अथ यदैन्द्राव्वैष्णवः। चरुर्भवतीन्द्रो वै

---

* 'पौमपुंषशासनागमनेषु'–इति तत्पदेषः। का० श्रौ० सू० १५. २ ६–१०।

† 'वः–इति ख. 'व'–इति ग, घ।

यजमानो वैष्णवाः पुरुषास्तदस्मा अग्निर्दाता पुरुषान् ददाति तैरेवैतत्सम्पृशते तानात्मन् कुरुते * ॥ ३ ॥

अथ यद्वैष्णवः † । त्रिकपालो वा पुरोडाशो भवति चरुर्वा यानेवास्मा ‡ अग्निर्दाता पुरुषान् ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवान् कर्म्म चिकीर्षति शक्नोति वै तत् कर्त्तुं तत् पुरुषानेवैतदुपैति पुरुषवान्भूया अहमिति तस्य वामनो गौर्द्दक्षिणा स हि वैष्णवो यद्वा-मनः § ॥ ४ ॥

अथापरेण त्रिषंयुक्तेन यजते । स आग्ना-पौष्णमेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिषंयुक्तेन यजते पशू-नेव तद्देवा उपायंस्तथो एवैष एतत् पशू-नेवोपैति || ॥ ५ ॥

---

* 'कुरुते'—इति क, ख ।
† °वः'—इति ग, घ ।
‡ 'स यानेवास्मा'—इति क, ख ।
§ '°नः'—इति ग, घ ।
|| °पैति'—इति ख ।

स यदाग्नापौष्ण * । एकादशकपाल पुरोडाशो भवत्यग्निर्वै दाता पौष्णा पशवस्तदस्मा ऽअग्निरेव दाता पशून् ददाति † ॥ ६ ॥

अथ यदैन्द्रापौष्ण । चरुर्भवतीन्द्रो वै यजमान पौष्णा पशव स यानेवास्मा ऽअग्निर्दाता पशून् ददाति तैरेवैतत्सꣳसृजते तानात्मन् कुरुते ‡ ॥ ७ ॥

अथ यत् पौष्ण । चरुर्भवति यानेवास्मा ऽअग्निर्दाता पशून् ददाति तेष्वेवैतदन्तत प्रतितिष्ठति यद्वै पशुमान् कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तत् पशूनेवैतदुपैति पशुमान्सूया ऽइति तस्य श्यामो गौर्दक्षिणा स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजननं मिथुनमेवैतत् प्रजननं क्रियते तस्माच्छ्यामो गौर्दक्षिणा ॥ ८ ॥

* ०ष्ण —इति ग घ † ०दाति —इति क घ ।

‡ कुरुत —इति ग ङ

अथापरेण त्रिषंयुक्तेन यजते *। सोऽग्नीषोमीय मेकादशकपालं पुरोडाश निर्व्वपत्यैन्द्रासौम्यं चरुꣳ सौम्यं चरुं तेन त्रिषंयुक्तेन यजते वर्च्च एव तद्देवा उपांशुस्तथो ऽएवैष एतद्वर्च्च उपैति ॥ ९ ॥

स यदग्नीषोमीयः। एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता वर्चः सोमस्तदस्मा ऽअग्निरेव दाता वर्च्चो ददाति † ॥ १० ॥

अथ यदैन्द्रासौम्यः। चरुर्भवतीन्द्रो वै यजमानो वर्चः सोमः स यदेवास्मा ऽअग्निर्दाता वर्च्चो ददाति तेनैवैतत्संस्पृशते तदात्मन् कुरुते ‡ ॥ ११ ॥

अथ यत् सौम्यः। चरुर्भवति यदेवास्मा ऽअग्निर्दाता वर्च्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति यद्वै वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तद्वर्च एवैतदुपैति वर्चस्वी भूया ऽअसति नो ह्यवर्चसो व्याप्त्या चनार्थो-

* 'यजत'—इति ग, घ। † 'ददाति'—इति क। ‡ कुरुत—इति क, ख।

ऽस्ति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो
यद्बभ्रुः * ॥ १२ ॥

अथ श्वो भूते। वैश्वानरं द्वादशकपालं पुरोडाशं निर्व्वपति वारुणं यवमयं चरुं ताभ्या मनूचीनाह्न वेष्टिभ्यां यजते समानबर्हिर्भ्यां वा ॥ १३ ॥

स यद्वैश्वानरो भवति। संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिः प्रजापतिरेव तद् भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा भूया ऽइति तथो ऽएवैष एतद् भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा भूया ऽइति † ॥ १४ ॥

अथ यद् द्वादशकपालो भवति। द्वादश वै मासाः संवत्सरस्य संवत्सरो वैश्वानरस्तस्माद् द्वादशकपालो भवति ‡ ॥ १५ ॥

अथ यद्वारुणो यवमयश्चरुर्भवति। तत्सर्व्वस्मा देवैतद् वरुणपाशात् सर्व्वस्माद् वरुण्यात् प्रजाः प्रमुञ्चति ता अनमीवा अकिल्बिषाः प्रजाः

---

* 'यद्बभ्रुः'—इति ग।

† 'इति'—इति क। ‡ भवति—इति क।

प्रजायन्तेऽनमीवा अकिल्विषाः प्रजा अभि सूया ऽइति ॥ १६ ॥

ऋषभो वैश्वानरस्य दक्षिणा। संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिरृषभो वै पशूनां प्रजापतिस्तस्मादृषभो वैश्वानरस्य दक्षिणा क्षौमं वासो वारुणस्य तद्धि वारुणं यत् क्षौमं यदि क्षौमं न विन्देदपि यदेव किञ्च वासः स्याद् ग्रन्थिभिर्हि वासो वारुणं वरुण्यो हि ग्रन्थिः ॥ १७ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [२.४.] ॥

अथ त्रिषंयुक्तेष्टिरयं विधित्सुः प्रथमं त्रिषंयुक्तम् अनुक्रामति— "आग्नावैष्णव मिति। तद् विधत्ते— "तेन त्रिषंयुक्तेनेति *। त्रिभिर्हविर्भिः संयुक्तं [कर्म त्रिषंयुक्तम्], तेन यजेत। पुरुषप्राप्तिहेतुतां आह— "पुरुषानेवैतदिति। यतो देवा एतेन त्रिषंयुक्तेन सहायभूतान् कर्मकरान् पुरुषान् प्राप्तवन्तः, तथा यजमानोऽपि तथाविधान् पुरुषान् अनेन यागेन प्राप्नोतीत्यर्थः ॥ १ ॥

त्रीणि हवींषि विभज्य स्तौति— "स यदाग्नावैष्णव इति। 'वैष्णवाः पुरुषा इति। विष्णोरवतारस्वीकारेण मनुष्यसख्य-

* का० श्रौ० सू० १५ २ १।

ऽमात् मनुष्याः सर्वे 'वैष्णवाः' विष्णुधिष्ठिता इत्यर्थः । 'तत्' तथा सति 'अग्नये' यजमानाय आग्नावैष्णवयागेन 'दाता अग्निः' विष्णुसम्बन्धान् 'पुरुषान्' ददातीत्यर्थः ॥ २ ॥

प्रयोजन माह— 'अथ यदैन्द्रावैष्णव इति * ॥ ३ ॥

"अथ यद् वैष्णव इति । 'तेष्वेवैतदन्तत इति । 'अन्ततः' अवसाने केवलवैष्णवयागेन 'तेषु' अग्निदत्तेषु स्वसम्बद्धेषु विष्णुसम्बन्धिष्वेव पुरुषेषु प्रतिष्ठितो भवति । अथ पुरुषप्राप्तेः फल माह— "यद्वै पुरुषवानिति । यतः पुरुषसहायवानेव 'कर्म' कर्तुं मिच्छति, 'शक्नोति' च ; अतः 'तत्' तेन प्रथमेन त्रिसंयुक्तेन 'पुरुषानेव' प्राप्नोति । तस्य दक्षिणां विधाय स्तौति— "तस्य वामन इति । 'वामनः' ह्रस्वाङ्गः । यतो वामनो विष्णुसम्बन्धी, अतो वैष्णवयागे दक्षिणात्वेन भवितुं युज्यत इत्यर्थः † ॥ ४ ॥

द्वितीयं त्रिहविष्कं विधत्ते— "अथापरेणेति । अस्य त्रिसंयुक्तस्य पशुप्राप्तिहेतुता माह— "पशुभिरेवेति । पूर्ववद् योज्यम् । अत्र विष्णुस्थाने पूषैव विशेषः ॥ ५ ॥

"स यदाग्नापौष्ण इति । "पौष्णाः पशव इति । पूषा हि पशूना मुत्पादकः, अतस्ते पौष्णाः । श्रूयते हि— "पूषा पशूनां प्रजनयितेति ‡ ॥ ६ ॥

"अथ यत् पौष्ण इति । "अथैतस्य दक्षिणां विधत्ते—

---

* तै० सं० १ ८ ८, तै० ब्रा० १. ७ २ ।

† "आग्नावैष्णव ऐन्द्रावैष्णवो वैष्णवो वामनो दक्षिणा"—इति का० श्रौ० सू० १५ २ १२ ।

‡ तै० ब्रा० १ ७ २ १ द्रष्टव्यम् ।

"तस्य श्याम इति। श्यामो गौरिति * 'यत्', स हि 'पौष्ण,' पूषदेवतात्मकः। तदेवोपपादयति— "द्वे वा इति। श्यामवर्णस्य शुक्लकृष्णात्मकद्विरूपयोगात्। द्विलक्षणादारा पूषरूपता माह— "द्वन्द्वं वा इति। लोके हि स्त्रीपुरुषात्मकं 'द्वन्द्व' 'मिथुनं' परस्परं संसृष्टं तत् 'प्रजननं' प्रजोत्पत्तिकारणम्; पूष्णोऽपि तदेव स्वरूप मिति तत्सृष्टाः पशवोऽपि पूषैव। यतः पूषात्मका 'पशवः', तेऽपि 'प्रजननं' प्रजोत्पत्तिनिमित्तम्; अतः शुक्लकृष्णात्मकस्य श्यामस्य गोर्दानेन पशूत्पत्तिनिमित्तं मिथुन मेव सम्पादितं भवतीत्यर्थः; अत. पशुफलको यागो दक्षिणात्वेन युज्यत इत्यर्थ. † ॥ ८ ॥

तृतीयं निर्वपन्तं विधत्ते— "यथापरेति। तस्य यत्नसाधनता माह— "यज्ञं एवैतदिति। 'यज्ञ.' सोम' एव.। अत धिष्ण्यानि सोमो विशेष. ॥ ९ ॥

"स यदाग्नेयोमीय इति। "यज्ञ. सोम इति। सोमस्य यागद्वारा ब्रह्मवर्चसनिमित्तत्वात् तादात्म्यव्यपदेश। अन्यत् पूर्ववद् योज्यम् ॥ १० ॥  ॥ ११ ॥

"अथ यत् सौम्य इति। "सो ब्रह्मवर्चस इति। 'ब्रह्मवर्चस' शब्दस्य यद्यपि 'व्याप्तिः' सर्वपदार्थव्यापकत्वमस्ति, 'ब्रह्म' शब्दोऽप्यर्थं, तथापि तया 'व्याप्त्या' यदि 'स' खलु

* "अग्निष्टोमिकं गौ, सर्वत्र"- इति का० श्रौ० सू० १५ २ १७।
'यत्र जातिरूपं लिङ्गं न गृह्यते तत्र सर्वत्र गोशानियोम-इति भाष्य कर्कोपाध्याय.।

† "वाय्वाग्नेयः ऐन्द्राग्नेयः पौष्णः श्यामो दक्षिणा"-इति का० श्रौ० सू० १५ २ १८

'अर्थं' प्रयोजनं विद्यते इति। तस्य दक्षिणां विधत्ते— "बभ्रुर्दक्षिणा" इति *। 'स हि सौम्य' इति 'बभ्रु' भवत्येव, "एतद्वै सोमस्य रूपम्"-इति श्रवणात् † ॥ १२ ॥

अथानन्तरदिवसकर्तव्यं द्विहविष्कं यागं विधत्ते— "अथ श्वोभूत इति। 'अनूचीनाह्न' मिति। अनूचीने पूर्वापरीभूते अहनी 'अनूचीनाह्नम्', क्रियाविशेषणं चैतत्। वैश्वानरेष्ट्या पूर्वस्मिन् दिने यजेत, वारुण्या अपरस्मिन् दिने। अथ भिन्नतन्त्रावेतौ यागौ कार्यौ। एकस्मिन्नेवाहनि वा समानतन्त्राभ्यां यष्टव्य मित्याह— "समानबर्हिर्भ्यां मिति। बर्हिरुपलक्षितं कार्त्स्न्यं तन्त्रं समानं साधारणं ययोः ते समानबर्हिषी। अत्र सूत्रम्— "श्वो वैश्वानरो द्वादशकपालो वारुणश्चैककपालः, एकदेवत्ये"-इति च ‡ ॥ १३ ॥

प्रथमस्य हविषो वैश्वानरदेवताकत्वं प्रशंसति— "स यद् वैश्वानर इति। अग्नेः संवत्सरात्मकत्वं मुख्याग्नेः संवत्सरत्वा दिति षष्ठे काण्डे समाम्नास्यते §। भूमान् प्रजा इति। भूयसी प्रजा इत्यर्थः ॥ १४ ॥

कपालसंख्यां प्रशंसति— "अथ यद् द्वादशकपाल इति। वैश्वानराग्नेः संवत्सरात्मकत्वात् तस्य मासद्वादशकरूपत्वात् तदीयस्य हविषः कपालेषु द्वादशसंख्या युज्यत इत्यर्थः ॥ १५ ॥

---

* "आग्नासोमीय ऐन्द्राग्नोऽश्व सौम्यो बभ्रुर्दक्षिणा" इति का० श्रौ० सू० १५ २ १५ तै० सं० १ ८ ८ तै० ब्रा० १ ७ २।

† तै० सं० २ १ ३ १०। [illegible]—इति तस्यैव।

‡ का० श्रौ० सू० १५ २ १८ १९। तत्रैको वारुण।

§ मननशीलोऽपि —इत्यादिक ६का० ३प्र० ३ब्रा० १२क० द्रष्टव्यम्।

द्वितीयं हविः प्रशंसति— 'अथ यद् वारुणं' इति। "तस्मात्सर्वस्मादिति। 'तत्' तस्य 'एतत्' एतेन वारुणयागेन सर्वस्मा देव 'वरुणपाशात्', तथा 'वरुण्यात्' वरुणपाशप्रदानात् सर्वस्माद् दुःखात् 'प्रजाः' 'प्रमुञ्चति' ॥ १६ ॥

अनयोर्हविषोः क्रमेण दक्षिणा अभिधाय प्रशंसति— "ऋषभ इति। "ऋषभो वै पशूना मिति। यतो वैश्वानर परम्परया 'प्रजापति', ऋषभोऽपि पशूनां पतित्वात् प्रजापति ; अतो वैश्वानरदेवताकयागस्य दक्षिणात्वेन युज्यत इत्यर्थः। "तद्धि वारुण मिति। रात्र्यभिमानिदेवता वरुण, रात्रिश्च कृष्णवर्णा, अतो लोकेऽपि यत् कृष्णं तद् वारुण मित्याह। कृष्णवस्त्राभावे वर्णान्तरयुक्त 'वास' एव मित्युक्तम् * । तस्यैवोपायान्तरेण वरुणसम्बन्धित्व मुपपादयति— 'ग्रन्थिभिरिति। ग्रन्थिर्नाम पाशः, पाशो हि वरुणस्येति तद्योग्यत्वम्। अत्र दक्षिणाभेद इष्टीभिर्वितन्त्रत्वे वेदितव्यः। समानतन्त्रत्वे हि एकेनैव द्रव्येण परिक्रीता ऋत्विजः कृत्स्नं प्रयोगजातं कुर्वन्तीतीतरवैयर्थ्यम्। तदुक्तं कर्कोपाध्यायेन— "तन्त्रभेदे चैतद् भवति, एकतन्त्रे तु चोदकपरिप्राप्तोऽन्वाहार्य"—इति † ॥ १७ ॥ ॥ [ २ ५ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥

---

* 'ऋषभः पूर्वस्य दक्षिणा कृष्णं वास उत्तरस्य, अभावे ऽसितम्'—इति का० श्रौ० सू० १५ २ १०।

† १५ २ १० सूत्रवृत्तिरियम्

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् ,
रत्नाधेनुं * पञ्चसीरीं-†-स्थितमतकलताधेनुसौवर्णभूमीः ।
रत्नोस्रा हस्त्यश्वाजिद्विपघहितरथौ सायणिः ‡ सिङ्गणार्यौ § ,
व्याप्तौ हिमवच्चक्रं प्रथितविधिमहाभूतयुक्तं घटश्च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुलं स्वर्णकं वर्णमुख्यः ,
कार्पासीयं क्षमायाम् गुडकृत मचलो ‖ राजत राजपूज्यः ।
चाज्योत्थं प्राज्यजन्मा ¶ लवणज मद्रकः शार्करं चार्कतेजाः ,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसाक्षिप्रथार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥

---

* 'मघाम्भीन्'—इति ठ (१)। † 'प्रप्रमीरीं'—इति ठ।
‡ 'सायणः' स्यात ? § स्यात् 'सिङ्गणार्यौ' ?
‖ 'मपडे'—इति ठ। ¶ 'प्राज्यवृद्धिर्'—इति ठ।
(१) ठ इति प्रथमकाण्डीयपञ्चमाध्यायकोशस्य विवृतं द्रष्टव्यम् ।

( अथ तृतीयाध्याये प्रथमं ब्राह्मणम् . )

अरण्योरग्नी समारोह्य । सेनान्यो गृहान् परेत्याग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निर्वै देवतानामनीकꣳ सेनाया वै सेनानीरनीकं तस्मादग्नयेऽनीकवत एतद्वा अस्यैकꣳ रत्नं यत् सेनानीस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा * ॥ १ ॥

अथ श्वो भूते । पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्वपति बृहस्पतिर्वै देवानां पुरोहित एष वा एतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा अस्यैकꣳ रत्नं यत् पुरोहितस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऊर्ध्वा बृहस्पतेर्दिगेतदेष उपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा † ॥ २ ॥

---

* १ 'दक्षिणा'—इति क, ख ।

अथ श्वो भूते। सूयमानस्य गृह ऽऐन्द्र मेकादशकपालं पुरोडाशं निर्व्वपति क्षत्रं वा ऽइन्द्रः क्षत्रᳪ सूयमानस्तस्मादैन्द्रो भवति तस्य ऽर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः* ॥ ३ ॥

अथ श्वो भूते†। महिष्यै गृहान् परेत्य आदित्यं चरुं निर्व्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा ऽएतस्य पत्नी भवति तस्मा-दादित्यो भवत्येतद्वा ऽअस्यैतᳪ रत्नं यन्महिषी तस्या ऽएवैतेन सूयते ताᳪ स्वा मनपक्रामिणीं कुरुते तस्यै धेनुर्दक्षिणा धेनुरिव वा ऽइयं मनु-ष्येभ्यः सर्व्वान् कामान् दुहे माता धेनुर्मातेव वा ऽइयं मनुष्यान् बिभर्ति तस्माद्धेनुर्दक्षिणा‡ ॥ ४ ॥

अथ श्वो भूते। सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्व्वपति सवो वै सूतः सवो वै देवानां वरुणस्तस्माद्वारुणो भवत्येतद्वा ऽअस्यैतᳪ रत्नं यत् सूतस्तस्मा ऽएवैतेन सूयते

---

* यदृषभ.'—इति ग। 'यदृषभ.'—इति घ।

† 'भूते—इति ख। भूत'—इति ग।

‡ दक्षिणा'—इति क, ख।

तद् स्वमनपक्रामिणं कुरुते तस्याश्वो दक्षिणा स हि वारुणो यदश्वः * ॥ ५ ॥

अथ श्वो भूते। ग्रामण्यो गृहान् परेत्य मारुतं सप्तकपालं पुरोडाशं निर्व्वपति विशो वै मरुतो वैश्यो वै ग्रामणीस्तस्मान् मारुतो भवत्येतद्वा ऽअस्यैकं रत्नं यद् ग्रामणीस्तस्मा ऽएवैतेन सूयते तद् स्वमनपक्रामिणं कुरुते तस्य पृषन् गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत् पृषतो गोर्भूमो वै मरुतो भूमो वै विट् तस्मात् पृषन् गौर्दक्षिणा † ॥ ६ ॥

अथ श्वो भूते। क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं व्वाष्टाकपालं वा पुरोडाशं निर्व्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात् सावित्रो भवत्येतद्वा ऽअस्यैकं रत्नं यत् क्षत्ता तस्मा ऽएवैतेन सूयते तद् स्वमनपक्रामिणं कुरुते तस्य श्येतो ऽनड्वान् दक्षिणैष वै सविता य एष तपत्येति वा ऽएष एत्यनड्वान्

* 'यदश्वः'—इति क, यदश्वः—इति ग, 'यदश्वः'—इति घ।
† 'दक्षिणा'—इति क, ख।

युक्तस्तद्यच्छ्वेतो भवति श्वेत इव ह्येष उद्यां-श्चास्तं च यन् भवति तस्माच्छ्वेतो ऽनड्वान् दक्षिणा * ॥ ७ ॥

अथ श्वो भूते। सङ्गृहीतुर्गृहान् परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति सयोनी वा ऽअश्विनौ सयोनी सव्यष्टृसारथी समानं हि रथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वा ऽअस्यैकं रत्नं यत् सङ्गृहीता तस्मा ऽएवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी यद्यमौ यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ता ऽउ ह्यपि समानयोनी ॥ ८ ॥

अथ श्वो भूते। भागदुघस्य गृहान् परेत्य पौष्णं चरुं निर्वपति पूषा वै देवानां भागदुघ एष वा ऽएतस्य भागदुघो भवति तस्मात् पौष्णो भवत्येतद्वा ऽअस्यैकं रत्नं यद्भागदुघस्तस्मा ऽएवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य

* दक्षिणा—इति क ख।

श्यामो गौर्द्दक्षिणा तस्यासावेव बभ्रुर्यो ऽसौ त्रिषं-युक्तेषु * ॥ ९ ॥

अथ श्वो भूते † । अक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्व्वपति ते वा ऽएते द्वे सती रत्ने ऽएकं करोति सम्पदः कामाय तद्य-देतेन यजते यां वा ऽइमाः सभायां घ्नन्ति रुद्रो हैता अभिमन्यते ऽग्निर्व्वै रुद्रो ऽधिदेवनं वा ऽअग्निस्तस्यैते ऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वा ऽएषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतद्वा-ऽअस्यैकं रत्नं यदक्षावापश्च गोविकर्त्तश्च ताभ्या-मेवैतेन सूयते तौ ऽस्यानपक्रमिणौ कुरुते तस्य द्विरूपो गौर्द्दक्षिणा शितिबाहुर्वा शितिवालो वासिर्न्नखरी वालदामाक्षावपनं प्रवदमेतद्धि मयोर्भवति ‡ ॥ १० ॥

* 'त्रिषयुक्तेषु'—इति क त्रिषंयुक्तेषु'—इति ग त्रिषयुक्तेषु'—इति घ ।

† 'भूति'—इति क, ख । 'भूते'—इति ग ।

‡ र्भवति—इति क ।

अथ श्वो भूते। पालागलस्य गृहान् परेत्य चतुर्गृहीत माज्यं गृहीत्वाध्वन आज्यं जुहोति जुषाणो ऽध्वाज्यस्य वेतु स्वाहेति अहैयो वै पालागलो ऽध्वानं वै प्रहित एति तस्मादध्वन आज्यं जुहोत्येतद्वा ऽएतस्यैतद् रत्नं यत् पालागलस्तस्मा ऽएवैतेन सूयते तए स्व मनपक्रामिणं कुरुते तस्य दक्षिणा पृश्नावेष्टितं धनुश्चर्ममया वाणवन्तो लोहित उष्णीष एतद्ध हि तस्य भवति ॥ ११ ॥

तानि वा ऽएतानि*। एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुब् वीर्यं त्रिष्टुब् वीर्य मेवैतद्रत्नान्यभिसम्पादयति तद्यद्रत्निनाए हविर्भिर्यजत ऽएतेषां वै राजा भवति तेभ्य एवैतेन सूयते तान्स्वाननपक्रामिणः कुरुते † ॥ १२ ॥

अथ श्वो भूते। परिवृक्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्वपति या वा अपुत्रा पत्नी

* 'रत्नानि'—इति ग 'एतानि'—इति च।

† कुरुत'—इति ग, च।

सा परिवृक्ती स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुं श्रपयति स जुहोत्येष ते निर्ऋते भागस्तं जुषस्व स्वाहेति या वा ऽपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवास्या ऽत्र नैर्ऋतं रूपं तदेवैतच्छमयति तथो हैनं सूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह मा मे ऽद्योषायां वात्सीदिति तत् पाप्मानमपादत्ते ॥ १३ ॥ ५ ॥

॥ इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् [३.१.] ॥

॥ श्रीमहेशाय नमः ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयाध्याये * प्रथमब्राह्मणे द्वादश रत्नहवींष्यनुदिनं क्रमेण वक्ष्यन्ते† । तत्र कात्यायनो नैर्ऋतहविषा द्वादश हवींषीति सूत्रितवान्— "द्वादशोत्तराणि रत्नहवींषि, प्रतिरह

* एतत् पदं नास्ति क पुस्तके ।

† "रत्निनामेतानि हवींषि भवन्ति एते वै राष्ट्रस्य प्रदातारः"—इत्यादि तै० ब्रा० १ ७. ३ द्रष्टव्यम्

मेकैकं प्र: प्र., समारूढेऽग्नौ निर्मथितेऽग्नयेऽनीकवते"– इत्यादि *। तत्र प्रथमं हविर्विधत्ते— "अरण्योरग्नी इति। 'अग्नी' गार्हपत्याहवनीयौ 'अरण्योः' पृथक् पृथक् 'समारोह्य' † प्रतिदिवसं तत्तद्गृहं गत्वा तत्र तत्र निर्मथ्य यष्टव्य मिति सर्वेष्टिसाधारण मिदम् ‡।

'सेनान्यः' सेनापतेः 'गृहान्' 'परेत्य' प्रथमं गत्वा 'अनीकवते' अनीकवद्गुणकाय 'अग्नये' अष्टाकपालेन पुरोडाशेन प्रयजेत्। सेनानीगृहे अनीकवद्गुणकाग्निदेवत्यहविरनुष्ठाने कारण माह— "अग्निर्वा इति। देवानाम् 'अनीकं' मुखम् 'अग्निः', 'सेनायाः' 'अनीकं' मुखं 'सेनानीः'। अस्य रत्न हविष्टु गुणपादयितु माह— "एतद्वा इति। "सेनानीरिति। 'एतत्' खलु 'अस्य' राज्ञो यजमानस्य 'एकं' 'रत्नं' रत्नवत् प्रशस्तं शरीरभूतं वस्तु, 'एतेन' तस्य यद्वेदनुष्ठितेनाग्नेययागेन 'तस्मै' सेनान्ये 'सूयते', सेनानुज्ञायत इत्यर्थः। तद्ग्रहणमनेन 'तं' सेनान्यं 'स्वम्' आत्मीयम् 'अनपक्रमिणम्' अनतिक्रमिणं कृतवान् भवतीति। एव मुत्तरत्रापि व्याख्येयम् §।

दक्षिणां विधत्ते— "तस्य हिरण्य मिति ‖। 'तस्य' अग्निदेवताकस्य यागस्य अग्निरेतोरूपं 'हिरण्यं' दक्षिणात्वेन युक्त मित्यर्थः। हिरण्यस्याग्निरेतस्त्व माम्नायते— "अग्नो वरु-

---

* का० श्रौ० सू० १५ ३ १, २, ३।

† 'संरोप्य'—इति च। 'समारोह्य'—इति मूलपाठः।

‡ इहैवाग्रपदपर्यन्तमाख्यानां सर्वेष्वेवं बोध्य मिति भावः।

§ तै० सं० १ ८, ९ ४ विशेषत व्याख्यातम्।

‖ का० श्रौ० सू० १५ ३, १०।

यस्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ता समभवत्, तस्य रेत परापतत्, तद्धिरण्यमभवत्"–इति * ॥ १ ॥

द्वितीयदिवसेऽनुष्ठेयं रत्नहवि विधत्ते— "अथ श्वोभूत इति । पुरोहितस्य गृहे बार्हस्पत्यचरुप्रचारे † उपपत्तिमाह— "बृहस्पतिर्वै देवानामिति । बृहस्पतेर्देवपुरोहितत्वात् तद्वत्यो याग पुरोहितगृहे कर्त्तुं उचित इत्यर्थः । "एतश इत्यादि, गतम् ॥

दक्षिणां विधत्ते— "तस्य शितिपृष्ठ इति । श्वेतपृष्ठ । तत् प्रशंसति— "ऊर्ध्वेति । 'ऊर्ध्वा दिक्' बृहस्पतिदेवताका, तस्या उपरिभागे 'अर्यम्ण' सूर्यस्य 'पथ' परिदृश्यमान 'पन्था' मार्ग । स च किरणसम्बन्धात् श्वेत । अतो बृहस्पतियागदक्षिणाभूतस्य गो श्वेतपृष्ठत्वं युक्तम् ‡ ॥ २ ॥

तृतीयदिवसे कर्त्तव्यं याग विधत्ते— "अथ श्वोभूते इति । "सूयमानस्येति । सुन्वतो यजमानस्यैव 'गृहे' । अत एवा- स्मिन् पर्याये एतया यजेत एतम्"–इत्यादिवाक्यानुपन्यास § । सूयमानपदं यजमानवाचकमित्यभिप्रेत्य सूत्रकृता यजमानपदमेवोक्तम्— "ऐन्द्रो यजमानस्य"–इति ‖ । "क्षत्र वा इत्यादि ।

---

* तै० ब्रा० १ १ ३ ८ । 'आपो ०—० परापतत्, तदिय मभवत्' –इति तु मै० सं० १ ५ ४ १ ।

† "बार्हस्पत्यश्चरु पुरोहितस्य"–इति का० श्रौ० सू० १५ ३ ४ ।

‡ का० श्रौ० सू० १५ ३ १८ । तै० सं० १ ८ ९ १ ।

§ अन्विष्टमिव वाक्यं पुरस्तात् (१४२पृ० ५पं०) द्रष्टव्यम् ।

‖ का० श्रौ० सू० १५ ३ ५ "ऐन्द्र एकादशकपाल"–इत्यादि कल्प ‖ तै० सं० १ ८ ९ १ ।

इन्द्रयजमानयोरेकजातत्वमिति सम्बन्धात् यजमानस्य गृहे ऐन्द्रस्य हविषो निर्वापो युक्त ॥

दक्षिणां विधत्ते— "तस्य ऋषभ इति*। "स हि ऐन्द्र इति। "वार्त्रघ्न्या ऐन्द्र"-इति† भागाम्नानत्वात् तद्वत ऋषभस्यैन्द्रत्वं प्रसिद्ध मिति 'हि' शब्दस्यार्थः ॥ ३ ॥

चतुर्थदिवसकर्त्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति। "महिष्या इति‡। कृताभिषेकस्य राज्ञो मुख्या स्त्री महिषी, तस्या गृहे। चरुरयं चतुर्थी। "इयं वै पृथिवीति। देवानां हविषामाधारत्वात् भोग्यत्वात् पृथिव्यात्मिकाया अदितेर्देवपत्नीत्वम्। "तस्मादिति। यस्मादिदितेर्देवपत्नीत्वम्, 'तस्मात् तद्देवत्यचरोः पत्नीगृहे निर्वापो युक्त इत्यर्थः ॥

दक्षिणां विधत्ते— "तस्यै धेनुरिति§। 'तस्यै' अदित्यै, तद्देवत्यस्य यागस्येत्यर्थः। 'धेनुरिव वा इति। यथा 'धेनु' क्षीरादिरूपान् सर्वान् कामान् दोग्धि, एवम् 'इयं' पृथिव्यात्मिका अदिति 'मनुष्येभ्य' सर्वान् 'कामान्' 'दुहे' दुग्धे। दुहि "लोपस्त आत्मनेपदेषु"-इति‖ त लोप। धेनु' हि मातरं वत्सप्रसूतत्वात्, तथा 'इयं' भूमिरपि 'मातेव' 'मनुष्यान्' 'बिभर्त्ति' पालयति। 'तस्मात्' उक्तोपपत्तिरीत्या अदितिर्देवता, तत्सम्बन्धात् आदित्यचरौ धेनुर्दक्षिणात्वेन युज्यते¶ ॥ ४ ॥

---

* का० श्रौ० सू० १५ ३ १८।
† पुरस्तात् (१६४पृ० ४पं०) द्रष्टव्यम्।
‡ का० श्रौ० सू० १५ ३ ६
§ का० श्रौ० सू० १५ ३ २०। ‖ पा० सू० ७ १ ४१।
¶ तै० ब्रा० १ ८ ३ ७ पर्यन्त मेव।

पञ्चमदिवसे कर्त्तव्या मिष्टिं विधत्ते — × × × ॥ ५ * ॥

[ षष्ठदिवसे कर्त्तव्या मिष्टिं विधत्ते † — ] "अथ ग्रामण्यो गृहान् इति । 'ग्रामण्यः' ग्रामं नयतीति ग्रामणीः, वैश्यानां महत्तरः तस्य 'गृहान्'। महता साहाय्यात्मकत्वात् तद्देवत्यहविषः सप्तसु कपालेषु श्रपणं युक्त मित्याह— "सप्तकपाल मिति । ग्रामणी- गृहे मारुतकरणं सुमणोर्वैश्यत्वनिबन्धनत्वात मित्याह— "विशो वा इति । 'विशः' प्रजाः देवाना मिति शेषः ॥

मारुतस्य दक्षिणा विधत्ते— "तस्य पृषन्निति ‡ । 'पृषन्' बिन्दुमान्, श्वेतरक्तादिनानाबिन्दुयुक्त इत्यर्थः । पृषतं प्रशंसति— "भूमा वा इति । 'पृषत'-इति पञ्चम्यन्तं गोविशेषणम् । पृषतो गोर्यद्रूपं तत् भूमा इति पर्यायोक्तम् । तादृशे गवि नानाविधवर्णानां सद्भावात् रूपबाहुल्य मित्यर्थः । भूमानं मेवावरुन्ध्यै विचित्रवर्णस्य गोर्मारुतहविषो योग्यता माह— "विशो वा इति । "भूमो वा इति । भूमा च इति । भूमरूपेव खलु वैश्यजाति ॥ ६ ॥

सप्तमदिवसकर्त्तव्या मिष्टिं विधत्ते— "अथ क्षत्तुर्गृहान् इति § ।

---

* मदृष्टानां चतुर्णां भाष्यपुस्तकानां मेकतमेऽपि इत आरभ्य पाठाः पञ्चमकण्डिकाव्याख्याप्रभागो नावलोक्यते, लिपिकरप्रमाद एवात्र हेतुः स्यात ।

† का॰ श्रौ॰ सू॰ १५ ३ ८ सूत्रे षष्ठदिवसे ग्रामण्यो विहित इतीष्टिषाट्तरात्मिका पूर्वपूर्वक्रमया सम्भाव्यते, व्याख्यायां तु नास्ति ।

‡ का॰ श्रौ॰ सू॰ १५ ३ २२ । 'पृषन् = त्रिपिता गौः षष्ठौ'— इति च तत्र कर्क. । तै॰ स॰ १ ८ ९ ७ ।

§ का॰ श्रौ॰ सू॰ १५ ३ ९ ।

"क्षत्तुर्गृहानिति । क्षत्ता नाम यष्टिहस्तोऽन्तःपुराध्यक्षः, सर्वेषां नियन्ता, प्रतिहारापरपर्यायः * । 'सावित्रं' सवितृदेवत्यम् । क्षत्तुः सवितुश्च प्रसवितृत्वं साधारणो धर्म इत्याह— "सविता वै देवानामिति ॥

दक्षिणां विधत्ते— "तस्य श्वेत इति । 'श्वेतः' † शुक्लवर्णः 'अनड्वान्' ‡ । श्वेतस्यानडुहः सवितृसम्बन्धं आह— "एष वा इति । 'यः' 'एषः' सूर्यः 'तपति', 'एषः' 'वै' खलु 'सविता', स च सूर्यः, 'एति' प्रकाशप्रकाशादिना जगन्निर्वाहं कुर्वन् सर्वदा सञ्चरति ; 'अनड्वान्' अपि शकटरथवहनादौ 'युक्तः' सन् सर्वत्र गच्छति, अतो गन्तृत्वमुभयोः सम्बन्धहेतुः साधारणो धर्मः । श्वेतत्वमनूद्य स्तौति— श्वेत इति । 'एषः' सूर्यात्मकः सविता 'उद्यन्' उदयम् 'अस्तं यन्' च' उदयास्तकालेषु 'श्वेतः' शुक्लो वर्णः 'एव हि भवति' ॥ ७ ॥

अष्टमदिवसकर्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति । "संग्रहीतुर्गृहानिति § । संग्रहीता नाम रथयोजयिता । 'आश्विनम्' अश्विदेवत्यम् । संग्रहीतृदृष्टे आश्विनचरो निर्वापे कारणम् आह— "सयोनी इति । 'हि' यस्मात् 'सव्यष्ठृ-सारथी' सव्यष्ठृपदेन संग्रहीतोच्यते, 'स च सारथिश्च 'सयोनी' समानस्थानौ, एवम् 'अश्विनौ' अपि 'सयोनी' सहोत्पन्नौ । तौ

---

* 'मन्तोष्ठेके । भवो दूती वा । पारशिवायां शूद्राज्जातः क्षत्ता'—इत्यादिः कात्यायनश्रुतिपक्षः ।

† अत्र श्वेतश्वेत श्वेतेति मूलपाठः, श्वेतेति भाष्यस्येति ।

‡ का० श्रौ० सू० १५. ३. ११ । तै० सं० १. ८. ९. २ ।

§ का० श्रौ० सू० १५. ३. १० । तै० सं० १. ८. ९. १ ।

हिर्विधौ 'समानम्' एकं 'रथम्' 'अधितिष्ठतः' ; "युवं कवी ष्ठः पर्यश्विना रथम्"—इति श्रवणात् * ॥

आश्विनस्य हविषो योग्यदक्षिणां विधत्ते— "तस्य यमाविति। यमौ सहैवैकस्या मातुर्गर्भादुत्पन्नौ †। यमयोरश्वि-साम्यं आह— "तौ हि सयोनी इति। यमयोरलाभे पक्षा-न्तरं आह— "यदि यमाविति। 'अनूचीनगर्भौ' अनुक्रमेण पौर्वापर्येण जातगर्भौ। तयोरपि समानयोनित्वं दर्शयति— "ता उ हीति। यौ क्रमेणोत्पन्नौ 'तौ उ अपि हि' 'समान-योनी' मध्ये गर्भान्तरेणाव्यवहितत्वात् ‡ ॥ ८ ॥

नवमदिवसकर्त्तव्यां इष्टिं विधत्ते— "अथ श्वोभूत इति। "भागदुघस्य गृहानिति §। यो राज्ञः भाग्यं ‖ षष्ठं भागं प्रजाभ्यो गृहीत्वा राज्ञे दोग्धि प्रयच्छति, स भागदुघः ¶। "पूषा वा इति। 'पूषा' नाम भागधेयरचको देवः, 'देवानां' 'भागदुघः' भागं दोग्धि, स हि यजमानदत्तानि हवींषि भागं गृहीत्वा संरक्ष्य तान् ** देवान् समयतीत्यर्थः †† ॥

पौष्णचरुयागे श्यामवर्णां गां दक्षिणां विधत्ते— "तस्य

---

* ऋ० सं० १० ४० ६।

† का० श्रौ० सू० १५ ३ २७। 'यमवत्सौ द्वे गावौ'—इति कर्कः।

‡ का० श्रौ० सू० १५ ३ २८।

§ का० श्रौ० सू० १५ ३ ११।

‖ 'प्राप्य'—इति च, ञ।

¶ 'भागदुघो भोजयिता। परिवेष्टा, भाग मंशं दोग्धीति'—इति च का० इ०।   ** 'सांख्यान्'—इति च।

†† इहैव पुरस्तात् २ अ, ८ (१५६पृ० द्रं) द्रष्टव्यम्।

श्याम इति *। श्यामलश्यावक मतिदिशति— "तस्यासा विति। 'मन्तु' वाक्यशेष । वा पुनरसाविति ॥ माह— "यो ऽसौ विषयुक्तेष्विति। विषयुक्तानि उक्तानि तत्र द्वितीये पौष्णचरोद्दक्षिणात्वेन विहितस्य यो श्यामलश्यावक , 'स हि पौष्णो यच्छ्यामो हे वै श्यामस्य रूपे इत्यादि † यो वाक्यशेष , सोऽत्रापि समान इत्यर्थ ॥ ८ ॥

यजमानगृहे कर्त्तव्य दशम रत्नहविर्विधत्ते— "अथ श्वो भूत इति ‡। अक्षावाप नाम अक्षाणा वेप्ता, अक्षगोप्ता वा द्यूतकार , 'गोविकर्त्त' सगयासहायभूतो गो-हिंसको व्याध , तयोरुभयोर्गृहेभ्यो 'गवीधुका' § आरण्यगोधूमान् 'सम्भृत्य' तै रुद्रदैवत्य चरु 'सूयमानस्य' यजमानस्य 'गृहे' निर्वपेद् ॥ । उभयोर्गृहेभ्यो गवीधुकाना युगपत् सम्भरण प्रशसति— 'तै वा इति। अक्षावाप गोविकर्त्त रुपयोर्द्वयो रुतोरुभयोरेकत्रकरण सम्पदेतुरित्यर्थ । 'सम्पद कामाय' सम्पदभिलाषसिद्ध्यर्थ मिति। अक्षावाप गोविकर्त्तसम्भृतेरेवा रण्यगोधूमै रौद्रचरु कर्त्तव्य इत्यत्रोपपत्ति माह— "या वा

---

* का० श्री० सू० १५ ३ ११ तै० सं० १ ८ ९ १० ।

† इहैव पुरस्तात २ १ ८ (पृ १४४ १२प० ) द्रष्टव्यम् ।

‡ तै० सं० १ ८ ९ ११ ।

§ गवेधुका —इति मूलपाठ ।

॥ 'द्यूतकारक —इति द्यूताध्यक्ष —इति च एव 'गोविकर्त' कषुक्र अथवा गोहिंसको व्याध —इति च तथा 'गवधुकाशीर्हि सन्धौ ठव्याविशेषे ग्रहाकाराणि गोधूमप्रायाणि फलानि कसेया लोक प्रसिद्धानि —इति चैतत् सर्व का० श्री० १५ ३ १२ सूत्रव्याख्या ।

इमां क्षितिम्। 'सभायां' सभास्थले द्यूतस्थाने 'याम् इमाम्' पणत्वेन कृत्वा गां 'घ्नन्ति' जिनन्ति *। अत एव चतुर्थाध्याये वक्ष्यते— "एतैश्चैनमाह गां दीव्यध्वम् इति"—इति †। तत्र सूत्रम्— "गां सभ्यानीय घ्नन्ति"—इति ‡। तत्र ताम् 'एतां' 'रुद्र अभिमन्यते', क्रूरकर्मत्वात्। स तस्य रुद्र परम्परया § अधिदैवतात्मक ‖ इत्याह— "अग्निर्वै रुद्र इति। अग्निरेव खलु रोदनाद्रुद्रनामा सम्पन्नः। अतएव तैत्तिरीयके अग्नि प्रख्यानमाम्नातम्— "सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्"—इति ¶। स च 'अग्निः' 'अधिदेवम्' द्यूताधिकरणस्थानम्, अधिदेवमात्मकस्याग्ने अध्यायापाठात् 'स एव' अधिदेवमात्मकं रुद्रम् 'एनेन' अध्यायापचारकृतगवीधुकनिष्पन्नहविषा 'प्रीणाति' तर्पयति। "तस्य ह वेत्यादि। 'यो राजसूयेन यजते', 'यो वा' 'एतद्' एतं राजसूयप्रयोगं 'वेद', 'तस्य गृहेषु' 'अघ्नता' अध्वर्युप्रभृतिभिरनुज्ञाता सती 'गौः हन्यते' गोविकर्त्तनेन हिंस्यते, अतो गोविकर्त्तसम्बन्धादागतगवीधुका हननाभिमानिनो रुद्रस्य हविषे योग्या इत्यर्थः॥

तस्य रौद्रहविषो दक्षिणां विधत्ते— "तस्य शितिबाहुः" इति **। 'शितिबाहुः' श्वेतबाहुः 'वा' भवेत्, श्वेतवालो 'वा', वालौ

---

* ३ ५ २३ द्रष्टव्यम्।

† उपरिष्टात् ३ ४ २३ द्रष्टव्यम् "गां दीव्यध्व मित्याह"—इति च का० श्रौ० सू० १५ ७ १७।

‡ का० श्रौ० सू० १५ ७ २०।

§ परम्परा—इति च च। ‖ अधिदेवतात्मक—इति च।

¶ तै० सं० १ ५ १ १। ** तै० सं० १ ८ ६ ११।

याले ॥ ग्रोनत्वम्, सर्वाङ्गे कृष्णवर्णं इति दिकपत्वम्। दक्षिणान्तरं विधत्ते— "अक्षितिति। 'नखरो' मि कोष' 'अक्षि.' छपाद:। 'वालदाम्ना रोमसहिता 'प्रवदम्' 'नखावपनं' पात्रम्; यद्वा उभयस्मो अक्षिमिति 'नखावपनम्' नखस्थानावपनं पात्रम्। एव गौ, असि, नखावपन मिति चीण्यपि समुदित्य दक्षिणेत्यर्थः। तथैव कात्यायन— "त्रिदक्षिणो रौद्र, शितिबाहुर्शितिवालयो रन्यतरः, असिर्नखरी, वालदामबद्ध नखावपनम्"–इति *। किमर्थं नखरोमावपनस्य दक्षिणात्वेनोक्ति? इति। तत्राह— "एतद्ध्रीति। 'तयो.' नखावाप गोविकर्त्तयो तद् इय स 'भवति' एकैकस्यैकैक मस्ति; अतोऽत्र तदुभयसम्बन्धात् तद् इयं दक्षिणात्वेन प्रयुज्यत इत्यर्थः ॥ १० ॥

दूतवदिति कर्त्तव्य माज्यहोमरूप मेकादशं रवहविर्विधत्ते— "अथेति। पालामलो नाम दूत। तथैव कात्यायन. पालागलस्थाने दूतमव्द प्रयुक्तवान्— "चतुर्गृहीतं खुपाणो ध्वाध्वस्य वेत्त्विति दूतस्य"–इति †। आपस्तम्बेन तु यूपविधेयपरत्वेन व्याख्यात — "अध्वनी स्वाहेति पालागलस्य गृहे जुहोत्यन्तदूत जुवते"–इति ‡। 'पालागलम्' अनृतवादिनं दूत मिति ब्रुवते आचार्या इत्यर्थः। अध्वदेवत्यचतुर्गृहीताज्यहोम एवैकादश हविरित्यर्थः ॥

मन्त्रस्यार्थः ;— 'आज्यं खुपाण.' आज्यभागं सेवमान.

* का० श्रौ० सू० १५ ३ २७–१०।
† का० श्रौ० सू० १५ ३ १३।
‡ आप० श्रौ० सू० १८ १० १५। तत्र 'पालागलस्य –इति च पाठ.।

'अध्वा' देवता 'आज्यस्य वेतु' आज्यं पिबतु। 'स्वाहा' सुहुत मस्तु 'इति'। दूतगृहेऽध्वदेवत्यहोमस्य उपपत्ति माह— "प्रहेय इति। 'पालागल.' दूत' 'प्रहेय" राज्ञा प्रेष्यः, प्रस्थापनीयः। प्रेष्यत्व मेवाह— "अध्वान मिति। यर्हि तः प्रेषितः प्रस्थापितः सन् अध्वानं गच्छति, अतोऽध्वसम्बन्धात् तद्गृहे होमः कार्य इत्यर्थः॥

तस्य होमस्य दक्षिणा विधत्ते— "तस्य दक्षिणेति। 'उष्णवेष्टितम्' 'उष्ण'-शब्देन * स्नाय्वभिधीयते, चर्मविकारैः स्नायुभिः 'वेष्टितं' स्यूतं 'धनुः', 'चर्ममयाः वाणवन्तः' इषुधयः, 'लोहित.' लोहितवर्णः 'उष्णीष' शिरोवेष्टनम्। एतत् सर्वं दक्षिणेत्याह— "एतदु हीति। एतावदेव हि 'तस्य' दूतस्य स्वं 'भवति' † ॥ ११ ॥

एतेषां रत्नहविषाम् एकादश सङ्ख्या प्रशंसति— "तानि वा एतानीति। सङ्ख्यासाम्यात् त्रिष्टुप्त्वम्। त्रिष्टुभो वीर्यत्व मिन्द्रेण सहोत्पत्तेरित्यवगन्तव्यम्। 'एतत्' एतेन रत्नहविर्गुणानेन यजमाने वीर्यं मेव सम्पादितवान् भवति। प्रकारान्तरेण तदेव प्रशंसति— "यद्वदिति। यथोक्तसेनानीपुरोहितमहिष्यादयो रत्निनः; तदभिमानिदेवतानां प्रियार्थं तानि हवींषि; प्रत्येकं तद्गृहेष्वेव कर्त्रा गत्वा निर्वपेत्। एतैः

---

* 'उष्णशब्देन'—इति च। 'पृष्ठ्य वेष्टित'—इति का० श्रौ० सू० १५. ३ ३१। 'पृष्ठ्यशब्देन स्नायुभिधीयते, अथवा चर्मोच्यते'—इति कर्कः। 'पृष्ठ्यवेष्टितं कोशकारवेष्टितम् ( कोशकारः = धनुष्कोटौरचयिता ), मयूरपुच्छवेष्टितं मिति केचित्—इति का० श्रौ० सू० वृत्यन्तरम्।

† का० श्रौ० सू० १५ ३ ३१, ३२, ३३।

'रत्निना' हविर्नियोगेन सेनानी प्रभृतीनां रत्नानां स्वयं 'राजा' भवेत्। 'तस्य' तत्सङ्ग्रहार्थम् 'एतेन' रत्नहविरनुष्ठानेन 'सूयते' प्रेर्यते ॥ १२ ॥

परिवृक्तिगृहे कार्यं नैर्ऋतचरुं विधत्ते— "अथ श्वो भूत इति *। 'परिवृक्ति'-शब्दस्यार्थमाह— "या वा इति। 'अपुत्रा' राजपत्नी केवलं भोगार्था परिवृक्तिः †। हविषो द्रव्यं विदधत्तोदकप्राप्त्यवघातं निषेधति— "स कृष्णानां इति। नखैर्निर्भिन्नाना कृष्णव्रीहीणां तण्डुलैः नैर्ऋतं चरुं निर्वपेत्। हवनं समन्त्रकं विधत्ते— "स जुहोतीति। जुहोतिचोदितत्वात् स्वाहाकारप्रदानत्वार्थं होमो दर्विहोमः। कात्यायनेन तु पक्षान्तरं सूचितम्— "दर्विहोम एष ते निर्ऋत इति ‡ जुहोति, वषट्कृते वा"-इति §। परिवृक्तिगृहे नैर्ऋतचर्वनुष्ठानस्योपपत्तिमाह— "या वा इति। अपुत्रा स्त्री नि-र्ऋतिना ग्रसितत्वात् भवति॥

तस्य दक्षिणां विधत्ते— "तस्य दक्षिणा कृष्णा गौरिति। 'परिमूर्णी'। "मुर्छा मोहसमुच्छ्राययोः" ‖। अस्मात् क्तिनि 'राल्लोपः'-इति ¶ छस्य लोपे, निष्ठा-नत्वे च कृते रूपम्। परिमूढा ( पशमा ** )। 'पर्यारिणी' पतित वार्तिमती,

* तै० सं० १ ८ ९, १।

† 'परिवृत्ता परिगता निवृत्ता ईकारश्छान्दसः, पुत्रादिभिः परित्यक्ता'-इति का० श्रौ० १५ ३ १४ स० टी० देव०।

‡ वा० सं० ९. ३५. १।

§ का० श्रौ० सू० १५ ३ १४ १५।　‖ भ्वा० प० ३० धा०।

¶ पा० सू० ६ ४ २१।　** इदं अधिकं पदं च पुस्तके।

व्याधिग्रहीता केन चिदङ्गेन अपहता वा 'श्यामा गौः, दक्षिणा'। अत्र सूत्रम्— "कृष्णापरिमूर्णापहतोत्सस्य"–इति *॥

तैत्तिरीयके तु परिवृत्तिगृहकर्तव्यनैर्ऋतचरौ कृष्णा भवन्त्यष्टा कौटिल्यानेन युक्ता— "नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा"– इति †। 'कूटा' भग्नशृङ्गा इति हि व्याख्यातम्। दक्षिणाभूताया लौकिकतत्त्वयोग्यता नाह— सा ह्यपीति। जीर्णा निकृत्तनखा गौः निर्ऋतिगृहीता भवति॥

इत्यन्ते किञ्चित् वाक्यं विमृशे— "सा मावेति। 'सा' परिवृत्तिम् 'मा' अवेत्। वाक्यस्याय अर्थः— 'अथ' इदानीम् इत एव 'मे' मम 'इरायां' अन्ने 'मा वात्सीत्' मद्गोष्ठ्या मा भूदित्यर्थः ‡। अथ स्तौति—"तदिति। निर्ऋतिगृहीता परिवृत्तिं प्रति एतेन वचनेन 'पाप्मानम् एव' अपा हते' अपमारितवान् भवतीति ॥ १३ ॥ ५ [ ३ १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १५ ३ ४४।

† तै० ब्रा० १ ८ ६ २।

‡ "परिवृत्तिमाह मा मेऽद्येरायां वात्सीरिति"–इति का० श्रौ० सू० १५ ३ ३५। 'तत्राऽसौ आत्मगृहात् प्रविशति मम राष्ट्रे च स्थास्य मिति'–इति तत्र कर्कः।

( अथ द्वितीयं ब्राह्मणम् । )

उपरिष्टाद्रत्नानाᳯ सौमारौद्रेण यजते । स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति तद्य-दुपरिष्टाद्रत्नानाᳯ सौमारौद्रेण यजते * ॥ १ ॥

स्वर्भानुर्ह वा ऽआसुरः † । सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रा-वेवैतत्तमो ऽपाहताᳯ स एषो ऽपहतपाप्मा तपति तथो ऽएवैष एतत्तमः प्रविशत्येतं वा तमः प्रविशति यदयज्ञियान् यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् तस्य सोमा-रुद्रावेवैतत्तमो ऽपहतः सो ऽपहतपाप्मैव दीक्षते तद्यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमो ऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ २ ॥

स हैतेनापि यजेत । यो ऽलं यशसे सन्न यशो भवति यो वा ऽनूचानः सो ऽलं यशसे सन्न यशो भवति यो न यशो भवति स

* 'यजत'—इति ग। यजन—इति घ।

† 'आसुर—इति ग।

तमसा वै स तत् प्रावृतो भवति तद्य सोमा-रुद्रावेवैतत्तमो ऽपहतः सो ऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति * ॥ ३ ॥

अथ मैत्राबार्हस्पत्यं चरुं निर्वपति । च्यवति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञ-पथाद्यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्य-ज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत् पुनर्यज्ञपथ मपि-पद्यते सो ऽपि पद्येव यज्ञपथं दीयते तस्मान् मैत्राबार्हस्पत्यं चरुं निर्वपति ॥ ४ ॥

तद्यावृत् † । या स्वयम्प्रशीर्णाश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति स्वकृता वा ऽएषा या परशुवृक्णायैषा मैत्री या स्वयम्प्रशीर्णा तस्मात् स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति ‡ ॥ ५ ॥

अथातच्य दधि । विनाट ऽआसिच्य रथं

---

* भवति—इति क ।

† '०त्त्व' इति ग । 'त्रुत' इति घ ।　‡ करोति'—इति क ।

युक्त्वावध्य देदीयित वा ऽआह तद्यत् स्वयमुदितं नवनीतं तदाज्यं भवति व्यृद्धं वा ऽएतद्यन्मथितं समृद्धमेतन्मैत्रं यत् स्वयमुदितं तस्मात् स्वयमुदितमाज्यं भवति ॥ ६ ॥

द्वेधा तण्डुलान् कुर्वन्ति । स ये ऽणीयांसः परिभिन्नास्ते बार्हस्पत्या अथ ये स्थवीयांसो ऽपरिभिन्नास्ते मैत्रा न वै मित्रः कं चन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कण्टको विभिनत्ति नास्य व्रणश्चनास्ति सर्वस्य ह्येव मित्रो मित्रम् * ॥ ७ ॥

अथ बार्हस्पत्यं चरुमधिश्रयति । तं मैत्रेण पात्रेणापिदधाति तदाज्यमानयति तत्तण्डुलानावपति स एष ऊष्मणैव श्रप्यते व्यृद्धो वा ऽएष यो ऽग्निना शृतो ऽथैष मैत्रो य ऊष्मणा शृतस्तस्मादूष्मणा शृतो भवति तयोरुभयोरवदायाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती यजेति वषट्कृते जुहोति ॥ ८ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् [३ २] ॥

* मित्रम् इति ग। मित्रम्—इति घ।

अथ सौमारौद्रयागं विधत्ते — 'उपरिष्टाद्रौद्रानामि'ति *। त्र्यम्बकहविषामुपरिष्टात् सौमारौद्रयागः कर्त्तव्यः। स च कः? 'श्वेतवत्सायै श्वेतायै'। उभयत्र षष्ठ्यर्थे चतुर्थी। शुक्लवत्सायाः शुक्लाया गोः 'पयसि' 'शृतः' चरुः 'भवति' ॥ १ ॥

त्र्यम्बकहविर्भ्योऽनन्तरं विहितं सौमारौद्रयागमनूद्याख्यायिकया प्रशंसति— "स्वर्भानुरि"ति। 'आसुरः' असुरपुत्रः 'स्वर्भानुः' 'सूर्यं' 'तमसा' 'विव्याध' आच्छादितवान्। 'सः' सूर्यः 'तमसा' 'विद्धः' आच्छादितः 'न व्यरोचत' नातिप्रकाशवान् जातः। 'तस्य' 'तत् तमः' 'सोमारुद्रौ एव' 'अपाहताम्' अपहतवन्तौ। तत आरभ्य सूर्यो निवृत्ततमस्कः सन् 'तपति' नभसि दीप्यते। इदानीं तद्वदासुरपि तमसाच्छादनमाह— "तथो यदेव इति। 'अयज्ञियान्' अयज्ञार्हान् मेषाश्वादीन् 'यज्ञेन' 'प्रसजति' प्रसक्तान् तत्यागानुष्ठानेन सम्बद्धान् करोतीति 'यत्' 'एतत्' एतेन 'एष' अनुष्ठाता राजन्यः 'तथा उ' तथैव सूर्यवदेव 'तमः प्रविशति'। 'तमः वा' यास्तं 'एतं' † इत्यन्तं 'प्रविशति'। मेषाश्वादीनामयज्ञीयत्वं प्रसिद्धमित्याह— "अयज्ञियान् वा इति। तानेव प्रविविच्य दर्शयति— "शूद्रानिति। 'त्वत्'-इति एकपर्यायः। एकदा 'शूद्रान्' मेषाश्वादीन्, 'त्वत्' एकदा 'यान्' काश्चन गोविकर्त्तादीन् हीनजातीनपि 'यज्ञे' 'प्रसजति'। तेन अयज्ञियसम्बन्धेन तमः प्रविशतीति अतः 'तस्य' यष्टुः तथाविधं तमः 'सोमारुद्रौ एव' 'एतत्' एतेन चरुणा प्रीणीतौ 'अपहत' विनाशयतः। तत्र पाप-

* का० श्रौ० सू० २४ २ ॥। मै० सं० १ ८ ८. १४।
† 'एनं'—इति च, ख।

श्वेताश्वस्पृष्ट सन् 'दीव्यते' दीप्त्यार्हो भवतीत्यर्थः । श्वेतापयसि अपर प्रयसि—"तद्यदिति । 'तद्' 'यत्' यदि, 'तमो नाम कृष्ण', श्वेतवत्साया. श्वेतायाः सम्बन्धि 'पयसि' अपरेण कृष्णस्य तम अपहारितवान् भवतीत्यर्थः ॥

यस्याः पयसि चरुः पक्वः, तां सैव दक्षिणात्वेन विधत्ते —"तस्यैषैवेति * ॥ २ ॥

( प्रसङ्गात् † ) फलान्तरार्थस्य होमस्य ब्राह्मणेन दर्शयति— "स हैतेनापीति । 'अपि' भिन्नक्रम । 'सोऽपि' 'एतेन' सौमारौद्रेण चरुणा 'यजेत' । स इत्युक्तं क इत्यत ‡ — 'यः' क्षत्रिय पुरुष 'यशसे' यशसा प्राप्तये 'अलं सन्' समर्थो योग्यो भवन्नपि 'अयशः' कीर्तिरहित 'भवति' । अस्य स्वार्थं विविनक्ति— "यो वा अनूचान इति । साङ्गवेदाध्यायी 'अनूचान', 'स' 'यशसे' 'अलं' योग्यो भवन्नपि 'अयशः' यशोरहितो 'भवति' । 'य' तु यशोरहित , 'स' 'तमसा' 'प्रावृत', 'तस्य' 'एतत्' एतेन हविषा 'सौमारुद्री एव' कीर्त्य भावरूप 'तम' 'अपहत' § न कीर्तिमन्तं कुरुत इत्यर्थः, 'स' यजमान अयशोरूपतमसा वियुक्त सन्, ज्योतिरात्मको भूत्वा 'श्रिया' सम्पदा 'यशसा' चोपलक्षितो भवति ‖ ॥ ३ ॥

---

* का० श्रौ० सू० १५ ३ ३० ।

† नास्त्येतत् पदं क पुस्तकादर्शे ।

‡ स क ?—इत्येव ख । § अपहन्त्य—इति ख ।

‖ अनूचानोऽप्ययशो यजेत—इति का० श्रौ० सू० १५ ३ ३८ । अत्र उपस्थेयमन्त्र इह स्मृतम्— किलासा वाघन्त—इति । किलास शब्देन व्याधिविशेष उच्यते, तद्बाध मिच्छन्त्य यजति । तु शब्दार्थे —इति तद्दर्शितः ।

विधत्ते—"अथ मैत्रेति। 'मैत्राबार्हस्पत्यं' मित्राबृहस्पतिदेवत्यं 'चरुं' निर्वपेत *। देवतासम्बन्धं प्रशंसति— "छलति वा इति। अपक्रियाणां सेनान्यादीनां यज्ञे प्रसज्जन मिव यज्ञपथादप गमन मित्यर्थः। मित्राबृहस्पत्योर्यज्ञपथानयनत्वं निर्वक्ति— "ब्रह्म हि मित्र इति। 'ब्रह्म' वेद, तदेव हि 'यज्ञः'; तत्साध्यत्वात् यज्ञ एव पन्थाः। "यज्ञपथ मिति। समासं विवक्षित्वा, तयो परम्परया यज्ञरूपत्वोक्तिः। "तत पुन र्यज्ञेति। 'तत्' तस्मात् यज्ञात्मकमित्राबृहस्पतिदेवत्ययागानु ष्ठानात् पुनर्यज्ञपथं प्राप्य 'दीक्षते' दीक्षां कर्तुं मर्हतीत्यर्थः ॥ ४ ॥

तस्य चरोरनुष्ठानप्रकारं तत्र प्रतिजानीते— "तस्याश्वत्थेति। 'तस्य' मैत्राबार्हस्पत्यचरोः 'आवृत्' क्रिया, अनुष्ठानप्रकारो वक्ष्यत इति शेषः। 'स्वयम्प्रशीर्णा' स्वय मेव भग्ना, 'प्राची' प्रागायता, 'उदीची' उदगायता 'वा' या 'आश्वत्थी' अश्वत्थस्य 'शाखा' 'भवति', तस्याः शाखात 'मैत्रं' मित्रसम्बन्धिचरु पाकार्थं 'पात्रं' कुर्यात् †। स्वयम्प्रशीर्णाया मैत्रत्वं व्यतिरेक मुखे नुपपादयति— "वरुण्या वा एषेति। 'या' शाखा 'परशु वृक्णा' छिन्ना भवति, सा हिंसितत्वात् 'वरुण्या' वरुण देवत्या, स्वयम्प्रशीर्णा तु मित्रार्हा, हिंसाविरहात्, सर्व-सुहृत्त्वान्मित्रदेवस्य परशुच्छिन्नशाखानिर्मितं पात्रं मयोग्य मित्यर्थः ॥ ५ ॥

मैत्रचर्वर्थं साध्यान्तरं विधत्ते— "अथात्रेति। पयो-विशेषस्तैत्तिरीयके श्रुत— "श्वेतायै श्वेतवत्सायै दुग्धे स्वय

---

* का० श्रौ० सू० १५ ३ ४०। तै० सं० १ ८, ८. १२।

† का० श्रौ० सू० १५ ३ ४१ क।

भूतं"-इति *। तादृशं पय 'पातव्य' पातव्यद्रव्येषु 'दधि' कृत्वा 'विनाटे' चर्ममये पात्रे दृतौ 'आसिच्य', 'रथ' 'युक्ता' पश्चैः भयोज्य, 'आबध्य' दधिपूर्णं विनाटं रथे सम्बध्य, 'इदीधिरसवे' रथधावनाय 'प्राह' नियुञ्जीत। दीधेर्वा गति कर्मणो यङ्लुगन्तात् क्त्वार्थे तवैप्रत्ययः। तत्र रथधावनेन दध्नो यत् स्वयं मुदितम् मथनं मन्तरेण निष्पन्नं, नवनीतं, तदेव स्वयं नेव विलीनं सत् आज्यं भवति †। आज्य कारणप्रकारस्यापस्तम्बेन विशद उक्तः — "श्वेता श्वेतवत्सा सामनस्ये दृतौ दुहन्ति, तत् स्वयं मूर्तं संयोगेन परिवहन्ति, तत् स्वयं मथितं आतपे विषजन्ति, तत् स्वयं विलीनं आज्यं भवति'-इति ‡। स्वयमुदितान्यस्य निर्वाप्यत्व व्यतिरेक मुखेन दर्शयति— "अदस्य मिति। यन्मन्यमनिष्पन्नं आज्यं तद् 'अदस्यम्' उपद्रवकारिणो अदयस्य योग्यम्, न तु मर्त्ते सुहृदो मित्रस्य। यत्तु उदीरितरूपं स्वयमुदितं तदनन्यगरूपस्य हितमस्य मित्रस्य सेव्यम्॥ ६॥

देवताद्वयस्य पृथक् चरो अपाच विधित्सु तण्डुलानां द्विधाकरणं विधत्ते— "द्वेधेति। 'ये' 'अणीयांस' अणुतरा 'परिभिन्ना' छिन्नावयवास्तण्डुला, 'तै' सहस्वतिदेवस्य कर्त्तव्या। 'ये' 'स्थवीयांस' स्थूलतरा 'अपरिभिन्ना' अच्छिन्नावयवा

---

* तै॰ ब्रा॰ १ ८ ६ १३।

† विनाटो दतिमेषक इति प्रसिद्ध। विनाटे दध्यासेक दृढ बन्धनम् रथे स्थापनम् रथधावनम् चान्दोलायमानेन नवनीतं जायते, तदाज्य पत्न्याकार्यं माहम् —इति टीप्पणी।

‡ आप॰ श्रौ॰ सू॰ १८ ११ ३—६।

अपूर्णीकृता, 'वै' मित्रदेवत्या कर्त्तव्या *। मैत्रास्या ग्रभि
चस्य प्रशंसति—"न वै मित्र इति। 'मित्रो' देव 'कञ्चन'
प्राणिनं 'न हिनस्ति', 'मित्रम्' अपि 'न कश्चन हिनस्ति'।
'एनं' मित्रं 'कुश' दर्भो वा 'कण्टक' वा 'न भिनत्ति'
न विध्यति, अत एव तस्य 'व्रण' अपि 'नास्ति'। सर्वस्य
मित्रत्वादिति हेतु माह—'सर्वस्य ह्येवेति। पुलिङ्गो मित्र
शब्दो देवतावाची, नपुंसकलिङ्गस्तु सुहृद्वचन ॥ ७ ॥

अपरप्रकार विधत्ते—"अथ बार्हस्पत्य मिति। 'बार्ह
स्पत्य चरुम्' अधिश्रित्य, अग्निमध्ये स्थाल्या अधिश्रिताया
हव्यस्यर्योस्तण्डुलानोप्य, 'त' चरुम् अश्वत्थशाखानिर्मितेन
'मैत्रेण पात्रेण' 'अपि'-दध्यात् †। 'तत्' तस्मिन् पात्रे
स्वयं सुत्पन्नम् 'आज्यम्' 'आनयति' आसिञ्चेत्। 'तत्' तत्र
अविदाम् अपरिभिन्नाम् मैत्राम् 'तण्डुलान्' 'आ'-वपेत्। 'स
एष ‡ मैत्रश्चरु "जम्भीव' 'श्रप्यते' पच्यते §। 'अग्निना'
'शृत' पक्वो 'वरुण्य', दाहप्रयुक्तहिंसासम्बन्धात् 'वरुण्य'
वरुणार्हो न मित्रार्ह। ऊष्मणा शृत तु 'मैत्र' मित्र
दैवत्यो युक्त, दोषविरहात्।

एव पृथक् श्रपण सभिधाय देवता प्रदाने साहित्य विधत्ते
—"तयोरुभयोरिति। 'तयोरुभयो' सर्वोर्द्धविषययोर्दाम्पित्योर्
रिव एकैकस्माद् द्विर्द्विरवद्यन् जुह्वा सहावदान कुर्वन् "मित्रा

* का० श्रौ० सू० १५ २ ४२ ४३।
† का० श्रौ० सू० १५ २ ४१ स।
‡ स एव—इति क
§ का० श्रौ० सू० १५ २ ४२

पति तदेन मिन्द्र एव ज्यैष्ठो ज्यैष्ठ्य मभि परि-णयत्यथ यद्गायनानां भवत्यतिष्ठा वा ऽएता ओषधयो यद्गायना अतिष्ठो वा ऽइन्द्रस्तस्माद्गाय-नानां भवति ॥ ६ ॥

अथ रुद्राय पशुपतये। रौद्रं गावेधुकं चरुं निर्व्वपति तदेनꣳ रुद्र एव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति ॥ ७ ॥

अथ मित्राय सत्याय। नाम्बानां चरुं निर्व्वपति तदेनं मित्र एव सत्यो ब्रह्मणे सुव-त्यथ यन्नाम्बानां भवति वरुण्या वा ऽएता ओषधयो याः कृष्टे जायन्ते ऽथैते मैत्रा यन्नाम्बा-स्तस्मान्नाम्बानां भवति ॥ ८ ॥

अथ वरुणाय धर्मपतये। वारुणं यवमयं चरुं निर्व्वपति तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पति-रसद्यो हि परमतां गच्छति तꣳ हि धर्मं ऽउप-यन्ति तस्माद्वरुणाय धर्मपतये ॥ ९ ॥

अथाग्नीषोमीयेण पुरोडाशेन प्रचरति । तस्या-
निष्ट एव स्विष्टकृद् भवत्यथैतैर्हविर्भिः प्रचरति
यदैतैर्हविर्भिः प्रचरति * ॥ १० ॥

अथैनं दक्षिणे बाहावभिपद्य जपति । सविता
त्वा सवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो
व्वनस्पतीनाम् । बृहस्पतिर्व्वाच ऽइन्द्रो ज्यैष्ठ्याय
रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्मपती-
नाम् ॥ ११ ॥

इमं देवाः । असपत्नꣳ सुवध्वमितीमं देवा
अभ्रातृव्यꣳ सुवध्वमित्येवैतदाह महते क्षत्राय
महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति
महते जानराज्यायेति महते जनानाꣳ † राज्याये-
त्येवैतदाहेन्द्रस्येन्द्रियायेति व्वीर्यायेत्येवैतदाह यदा-
हेन्द्रस्येन्द्रियायेतीमममुष्य ‡ पुत्रममुष्यै पुत्रमिति
तद्यदेवास्य जन्म तत एवैतदाहास्यै व्विश ऽइति
यस्यै व्विशो राजा भवत्येष व्वोऽमी राजा

* 'प्रचरति'—इति क।

† 'जानानाꣳ'—इति ख। ‡ 'अमुष्य'—इति क, ख।

बृहस्पतिभ्या मनुब्रूहि"—'इति' एवं संयुज्य* अनुवाक्याप्रैषं ब्रूयात्; एवं 'यजेति' याज्याप्रैषेऽपि 'वषट्कृते' सहैव प्रदेय.† ॥ ८ ॥ ६ [ ३. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् . )

स वै दीक्षते। स उपवसथे ऽग्नीषोमीयं पशु मालभते तस्य वपया प्रचर्याग्नीषोमीय मेकादशकपालं पुरोडाशं निर्वपति तदनु देवसूना हवींऽषि निरुप्यन्ते ॥ १ ॥

सवित्रे सत्यप्रसवाय। द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्वपति आशुकानां व्रीहिणाम् सविता वै देवानां प्रसविता सवितृ-

---

* 'संसृज्य'—इति च।

† "एकं दानम्, गौर्दक्षिणा"—इति का० श्रौ० सू० १५. ९. ४१। 'स चाय मेक एव यागः सेनान्यादिरूपत्व इति महद्दानात् संहितोत्पत्तेः, अतश्च एकं प्रदानम्, अष्टादशिकया चावदानग्रहणम्'—इति तत्र कर्कोपाध्यायः।

प्रसूतः सुया ऽइत्यथ यदाशूनां व्रीहीणां क्षिप्रे मा प्रसुवानिति * ॥ २ ॥

अथाग्नये गृहपतये। अष्टाकपालं पुरोडाशं निर्व्वपत्याशूनाᳬ व्रीहीणां गार्हपतं यावतो यावत ईष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभि परिणयत्यथ यदाशूनां क्षिप्रे मा परिणयानिति † ॥ ३ ॥

अथ सोमाय वनस्पतये। श्यामाकं चरुं निर्व्वपति तदेनᳬ सोम एव वनस्पतिरोषधिभ्यः सुवत्यथ यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकास्तस्माच्छ्यामाको भवति ‡ ॥ ४ ॥

अथ बृहस्पतये वाचे। नैवारं चरुं निर्व्वपति तदेनं बृहस्पतिरेव वाचे सुवत्यथ यन्नैवारो भवति ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥ ५ ॥

अथेन्द्राय ज्येष्ठाय। हायनानां चरुं निर्व्व-

---

* 'प्रसुवानिति'—इति क। 'प्रसुवानिति'—इति ग।

† 'परिणयानिति'—इति क। 'परिणयानिति'—इति ग।

‡ 'भवति'—इति क। एवमितोऽपरत्रापि।

सोमो ऽस्माकं ब्राह्मणानाᳫं राजेति तदस्मा ऽइदᳫं सर्व्वं माद्यं करोति ब्राह्मण मेवापोद्धरति तस्माद् ब्राह्मणो ऽनाद्यः सोम राजा हि भवति ॥ १२ ॥

एता ह वै देवाः * सवस्येशते । तस्माद् देवस्वो नाम तदेन मेता एव देवताः सुवते ताभिः सूतः श्वः सूयते ॥ १३ ॥

ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्य्यं वीर्य्यवत्यः सुवान्ता ऽइति तस्माद् द्विनाम्न्यो भवन्ति † ॥ १४ ॥

अथाऽग्नये स्विष्टकृते ऽनुब्रूहीति । तद्यद्-न्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजा-पतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतस्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवै-तस्य प्रजापतेर्द्दधाति मध्यतः सुवति तस्मादन्त-

---

* 'देवताः'—इति क, ख ।

† 'भवन्ति'—इति क ।

रेणाहुती ऽएतत् कर्म क्रियत * ऽआश्राव्याहाग्नये स्विष्टकृते प्रेष्येति व्वषट्कृते जुहोति ॥ १५ ॥ ७ ॥

॥ इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् [३. ३.] ॥

एवं पवित्राख्यात् प्रथमसोमयागादनन्तरभावीनि चातुर्मास्यादीनि इष्टिविशेषात्मकानि संवत्सरपर्यन्तमनुष्ठेयानि चातुर्मास्यानुक्तानि †, अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगोऽभिधास्यते, तत्राभिषेचनीयस्य चौदक्ष्यास्तां दीक्षा माह— "स वै दीक्षत इति। तत्कालः, सूत्रे दर्शितः — "फाल्गुनीपक्ष-यजनीयेऽभिषेचनीयाय दीक्षते"–इति ‡।

देवसुवां हवींषि विधित्सुस्तेषामग्नीषोमीयपशुपुरोडाशानन्तर-भावित्वं वक्तु माह— "स उपवसथ इति। 'उपवसथ' सुत्या-दिवसात् पूर्वं अहः। अग्नीषोमीयं पशुपुरोडाशं निरुप्य, तदनु देवसुवां हवींषि निर्वपेत् §। सुवन्त्यनुजानन्तीति सुवः, देवाश्च ते सुवश्चेति देवसुवः, तेषां 'देवसुवाम्', "षो सुचि"–इति ‖

---

* 'क्रियत'–इति क. ख।

† पुरस्तात् ५अ० १ब्रा० एकत्रीतः (१२१ पृ०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १५ ३ ३६। 'फाल्गुन्याः पञ्चम्यां यद् यजनीयम्, तत्र दीक्षा, शुक्लपक्षप्रतिपद्यर्थः'–इति तद्वृत्तिः।

§ का० श्रौ० सू० १५ ४ १–२। 'देवसुवां एतानि हवींषि भवन्ति'–इत्यादि तै० ब्रा० १ ७ ४ द्रष्टव्यम्।

‖ धा० पा० ६ ८ ५१।

यथादेवं । अथविद्वत्त चैषा समाम्नायते— "देवसुवा मेतानि हवींषि भवन्ति, एतावन्तो वै देवानां सवाः, त एवास्मै सवान् प्रयच्छन्ति, त एनं सुवन्ते"—इति * ॥ १ ॥

तत्र प्रथमं सावित्रं हविर्विधत्ते — "सवित्रे सत्यप्रसवायेति † । 'सत्यप्रसवाय' अमोघाभ्यनुज्ञाय 'सवित्रे' 'आशुकानाम्' अकर्षेण पाद्य शीघ्रं पच्यमानानां पुनः प्रकृष्टानां व्रीहीणाम् ‡ । ऐकस्य छान्दसो सत्वनिर्देशः । सवितृदेवतासम्बन्धं प्रशंसति— "सवितेति । 'सुवे' मत्र सवचाणि । आशुकव्रीहिजन्यत्वं प्रशंसति— "अथ यदिति । 'क्षिप्रे' क्षिप्रकाले 'मा' मां 'प्रसुवान्' । सवितृदेवत्या आशुका व्रीहय, प्रसुवन्तु प्रेरयन्त्विति आशुकत्वम् । आशु-कानिति, अपूर्वात् सवर्णसंज्ञाभावे वैरिकारलोपे कृते रूपम् ॥ २ ॥

द्वितीयं हविर्विधत्ते— "अग्नये इति । 'गृहपतये' गृहपतित्वगुणकाय 'अग्नये' 'आशुना व्रीहीणां 'पुरोडाशं' निर्वपेत् । "आशुना मिति § । आशुका पुनः प्रकृष्टा व्रीहय इत्युक्तम्, ततोऽप्यधिककाले पच्यमाना षष्टिका व्रीहय आशवः । तेषां आशुत्वं च विषयसमासनियतपरिपाकव्रीह्यपेक्षम् । गृहपतिपदं प्रशंसति — "श्रीर्वा इति । 'श्री' खलु 'गार्हपतं' गृहपतित्वमेव, तस्माद् यजमानो 'यावत' धनस्य 'इष्टे' ईश्वरो भवति । 'तत्' 'गार्हपतं' गृहपतिसम्बन्धि

* तै० ब्रा० १ ७ ४ । 'देवस्वाम् — देवसुवाम्—इति शुक्लकृष्णयोर्भेदः ।

† का० श्रौ० सू० १५ ४ ५ । तै० स० १ ८ १० १ ।

‡ पूर्वं क्षिप्रा० मन्त्रा पुनराशु परोहन्तीति पुनराशुका इत्यर्थे आशुका० कान्दस —इति का० टीप्पनी ।

§ का० श्रौ० सू० १५ ४ ६ । तै० सं० १ ८ १० १ ।

अथैनं प्रसुतानाम् 'अभि' 'एनं' यजमानं गृहपतिगुणकोऽग्निः 'परिणयात्' परिणयति प्रापयति । व्रीहीणामाशुत्वं प्रशंसति— "अथ यदिति । 'क्षिप्रे' क्षिप्रं 'मा' मां परिणयेयु 'इति' अतो हेतोराशुभिरेव हविः कर्त्तव्य मित्यर्थः ॥ ३ ॥

तृतीयं हविर्विधत्ते— "अथ सोमायेति * । 'वनस्पतये' वनानां ओषधीनां पतिं वनस्पतिं । पारस्करादित्वात् सुट् । तस्मै 'सोमाय' श्यामाकप्रकृतिकं 'चरुं' निर्वपेत् । देवता सम्बन्धं प्रशंसति— "तदेनमिति । श्यामाकानां सोमार्हत्व मुपपादयति— "अथ यच्छ्यामाका इति । 'श्यामाका इति यत्', 'एते' खलु 'ओषधीनां' मध्ये 'सोमस्य' 'प्रत्यक्षतमं' अतिशयेन प्रत्यक्ष रूप मित्यर्थः ॥ ४ ॥

चतुर्थं हविर्विधत्ते— "अथ बृहस्पतय इति † । 'वाचे' वाग्रूपायत्वेन नैवारचरुणा प्रीतो 'बृहस्पतिरेव' 'एनं' यजमानं 'वाचे' 'सुवति' अनुजानाति । 'अथ यन्नैवारो भवति"-इत्यादिकं वाजपेये व्याख्यातम् ‡ ॥ ५ ॥

पञ्चमं हविर्विधत्ते— "अथेन्द्रायेति § । ज्येष्ठत्वगुणकाय इन्द्राय 'हायनानां' सत्वरपक्वानां व्रीहीणां 'चरुं' निर्वपेत् । सत्वरपक्वानां ज्येष्ठगुणकेन्द्रयोग्यत्व मुपपादयति— "अथ यद्धायनानां मिति । 'हायना' सत्वरपक्वा व्रीहय इति । 'यत्'

---

* का० श्रौ० सू० १५ ४ ८ । तै० सं० १ ८ १० १ ।
† का० श्रौ० सू० १५ ४ ९ । तै० सं० १ ८ १० १ ।
‡ पुरस्तात् ५।१ ए० १४ प० द्रष्टव्यम् ।
§ का० श्रौ० सू० १५ ४ १० । तै० सं० १ ८ १० १ ।
|| पा० सू० ३ १ १३८ द्रष्टव्यम् ।

'एता' 'अनिष्टा.' अतीत्य तिष्ठन्त्य 'ओषधयः' चिरकालेन पाकात् 'इन्द्र' अपि 'अनिष्टः' * सर्वानतिक्रम्य स्थितः † ॥ ६ ॥

षष्ठं हविर्विधत्ते— "अथ रुद्रायेति ‡। 'पशुपतये' पशुपतिगुणकाय 'रुद्राय'। रौद्र मिति तद्धितेन विहित एव रुद्रसम्बन्धः, पुनः 'पशुपतये'-इति विशेषसम्बन्धार्थं 'रुद्राय'-इति चतुर्थी कृता। पशुपतिपदं प्रशंसति— "तदेन मिति। 'तत्' तेन हविषा एनं सन्तुष्टं 'पशुपतिः रुद्र एव' 'पशून्' तदर्थं 'सुवति' प्रेरयति, पशुमन्तं करोतीत्यर्थः। 'वास्तव्य.'-इत्यादि पूर्ववद् व्याख्येयम् ॥ ७ ॥

सप्तमं हविर्विधत्ते— "अथ मित्रायेति §। 'सत्याय' सत्यगुणकाय 'मित्राय' 'नाम्बानां' नाम्बा नाम अकृष्टपच्याः श्यामाका व्रीहयः। नाम्बाना मित्रयोग्यत्व मुपपादयति— "अथ यन्नाम्बाना मिति। कृष्टेपच्याः 'ओषधय.' 'वरुण्या.' कर्षणादिलक्षणहिंसासम्बन्धात् वरुणार्थाः, अकृष्टपच्यास्तु तद्विरहात् 'मैत्रा' ॥ ८ ॥

अष्टमं हविर्विधत्ते— "अथ वरुणायेति ‖। 'धर्मपतये' धर्मपतिगुणकाय 'वरुणाय' 'यवमयं चरुं' निर्वपेत्। रौद्र

* 'अनिष्टा.'- इति च, ज।

† तिष्ठति'—इति ज।

‡ का० श्रौ० सू० १५ । ४ । ११। 'गावीधुकश्चरुर्भवति'—इति १, ३८ इत्ययम्। तै० सं० १ । ८ । १० । ६ ।

§ का० श्रौ० सू० १५ । ४ । १२। 'नाम्बश्यामाकाः'—इति। तै० सं० १ । ८ । १० । ७ ।

‖ का० श्रौ० सू० १५ । ४ । १३। 'यवमयश्चरुर्भवतीति शेषः'—इति। २१ इत्ययम्। तै० सं० १ । ८ । १० । ८ ।

मित्रियद्ध वारुण मिति व्याख्येयम् । 'तत्' तेन 'एनं' यजमानं साक्षात् 'वरुणः' 'धर्मस्य पतिं' कुर्यात् । धर्मपतित्वं प्रशंसति— "परमतेति । 'यः' पुमान् 'धर्मस्य पतिः' 'असद्' भवेत्, 'सा वै' 'परमता' परमत्वम् । तदेव विवृणोति— "यो हीति । 'तं परमं' 'धर्मं' 'उपयन्ति' प्राप्नुवन्ति ॥ ९ ॥

एतेषां निरुप्तानां हविषां प्रचरणकालं विधत्ते— "अथाग्नीषोमीयेणेति । चोदकप्राप्तेन अग्नीषोमीयपशुपुरोडाशेन प्रचर्य्य तदीयस्विष्टकृत प्राक् एतैर्हविर्भिर्यजेतेत्यर्थः ॥ १० ॥

विधत्ते— "अथैन मिति । 'अथ' देवसुवां हविर्यागानन्तरं स्विष्टकृतः पूर्वम् 'एनं' यजमानं 'दक्षिणे बाहौ' 'अभिपद्य' गृहीत्वा 'जपति', अध्वर्युरिति शेषः । सूत्रम्— "उत्तमेन चरित्वा सविता त्वेत्याह यजमानं बाहुं दक्षिणं गृहीत्वा"—इति *।

मन्त्रस्यार्थः †,— हे यजमान ! 'त्वा' त्वां 'सविता' 'सवानां' प्रसवानां स्वामित्वेन 'सुवताम्' अनुजानातु । तथा 'अग्निः' अन्येषां 'गृहपतीनाम्' ईश्वरम् अनुजानातु । 'त्वाम्'—इत्यनुषङ्गः । एव मुत्तरत्रापि त्वां सुवता मिति योज्यम् । 'यामे', 'ज्येष्ठाय' इत्यादौ तादर्थ्ये चतुर्थी । 'मित्रः सत्यः'—इत्यत्र सत्य-शब्दात् चतुर्थ्येकवचनस्य सुः ‡, सत्यायेत्यर्थः ॥ ११ ॥

परोक्षवदुक्त्वा, अथ प्रत्यक्षवदाह— "इमं देवा इति §। हे 'देवाः' ! सवित्रादयः 'इमं' यजमानम् 'असपत्नं' शत्रुरहितं

* का० श्रौ० सू० १५, ४ १४ ।
† तन्पाठस्तु वा० सं० ९, ३९ १ ।
‡ पा० सू० ७, १ ३९ द्रष्टव्यम् ।
§ वा० सं० ९, ४०, १ ।

'सुवध्वम्' अनुजानीत। तथा 'महते क्षत्राय' अतिप्रभूताय क्षत्रियकुलाय, 'महते ज्यैष्ठ्याय' अवनिहतनियमनसामर्थ्यायेत्यर्थः। 'महते जानराज्याय' जनसम्बन्धि यद्राज्यं तस्य सागरपर्यन्तभूमिविषयत्वात्, महत्सार्वभौमत्वाय। 'इन्द्रस्य' सम्बन्धिने 'इन्द्रियाय' वीर्याय 'इमम्' उत्ताम्यमानं यजमानम्, 'अमुष्य' पितुः 'पुत्रम्', 'अमुष्यै' अमुष्या मातुः पुत्रम्, सुवध्वमित्यनुषङ्गः। 'अस्यै' अस्याः 'विशः' प्रजायाः 'राजा', एष यजमान इत्यर्थः। प्रजा अपि सम्बोध्याः— "एष इति। 'अमी'-इति सम्बोधनप्रथमाबहुवचनान्तम्। अदःशब्दस्थाने जनपदनाम सम्बोधनप्रथमाबहुवचनान्तं गृह्णीयादित्यर्थः। तत एवामी इत्यस्य स्थाने भरतपदं प्रक्षिप्य पठितं बौधायनेन— "अथैनं रत्निभ्य आवेदयति, एष वो भरता राजा"-इति। आपस्तम्बेन तु राजविशेषेण जनपदनामग्रहणं सूत्रम्— "अथैनं रत्निभ्य आवेदयति, एष वो भरता राजेत्येष वः कुरवो राजेति कौरव्य मेष वः पञ्चाला राजेति पाञ्चाल्य मेष वः कुरुपञ्चाला राजेति वा कुरुपञ्चाल मेष वो जनता राजेत्यन्यान् राज्ञः"-इति *। कात्यायनेन त्विदं सर्वं सङ्गृहीतम्— "यस्याथ जाती राजा भवति देशस्यानवस्थितत्वात्"-इति †। हे प्रजाः! 'वः' युष्माकम् एष राजा, एनं स्वामिनं यथोचितं सेवध्वमित्यर्थः। 'ब्राह्मणानामस्माकं' 'सोमः' एव 'राजा', न तु क्षत्रिय इत्यर्थः॥

---

* आप० श्रौ० सू० १८. १२. ७। 'सोमोऽस्माकं ब्राह्मणानां राजेति ब्रह्मा जपति'-इति च तत्र तदुत्तरसूत्रम् (८)।

† का० श्रौ० सू० १५ ४. १७। "ये देवा देवसुवः स्थ"—इत्यादि तै० सं० १. ८. १० द्रष्टव्यम्।

मन्त्रभागमनूद्य व्याचष्टे—'इमं देवा इति *। भ्रातृव्य शत्रु। "व्यन् सपत्ने"–इति † व्यन् प्रत्ययः। शेषं सुगमम्। यजमानस्य मातापित्रोर्नामग्रहणस्थानं दर्शयति— "इमम् अमुष्येति। इमं मित्यस्यानन्तरं यजमानस्य नाम, 'अमुष्य'-'अमुष्या'-इत्येतयोः स्थाने तस्य मातापित्रोर्नामेत्यर्थः। अत एव सूत्रम्— "नामान्यस्य गृह्णाति मन्त्रे यथास्थानं, मातापित्रोश्च"-इति ‡। मन्त्रभागस्य तात्पर्यं माह— 'तस्मा इति। 'तत्' तेन, एष वो राजेति स्वामित्वप्रतिपादनेन 'यज्ञे' राज्ञे 'इदं' दृश्यमानं 'सर्वं' जगत् ब्राह्मणव्यतिरिक्तम् 'आद्यं' भोग्यं करोति। सोमोऽस्माक मिति मन्त्रभागस्य तात्पर्यं माह— "ब्राह्मण मेवेति। तत्र सोमोऽस्माकं ब्राह्मणाना राजेति ब्राह्मणजाति सोम *स्वामित्वेन पृथक् कृत्वा, तस्मात् ब्राह्मणं अनाद्यं आह।* 'हि' यस्मात् 'ब्राह्मणः' 'सोमराजा' सोमो राजा यस्येति बहुव्रीहिः, अत एव 'राजाहस्सखिभ्य" इति § टच् समासान्तो न कृतः। यथाऽध्वर्युः स्वकीयं राजानं विभज्य निर्दिष्टवान् तस्माल्लोकेऽपि ब्राह्मणा अग्निष्टोमादियागेषु सोम मेव राजत्वेनोद्दिश्य 'सोम राजन्नेवावतोच मा मे"–इत्यादिभिर्मन्त्रै रुपचरन्ति ॥ १२ ॥

---

* वा० सं० १० १८ १।
† पा० सू० ४ १ १४५।
‡ का० श्रौ० सू० १५ ४ १५ १६।
§ पा० सू० ५ ४ ९१
‖ तै० सं० १ ३ १३ २। तत्रोपात्तयोरिमन्त्रयोर्द्वितीय एव। गाविमौ विहितौ बौधायनेन यथा—"अथैनमक्षसंकलकयो प्राचीनमपीव

पञ्चहविरिष्टिकस्य देवतानां समूह्य नाम निर्वक्ति— "एता ह वा इति । "सदेन मिति । यस्माद् 'एताः' देवताः 'सर्वम्' ईशयितारः, 'सत्' तस्मात् 'एताः देवताः' देवसूनामिकं हविःप्रसूतम्, 'एनं' सुन्वन्तं हविः 'सुवते' अनुजानन्ति ; 'ताभिः' देवताभिः 'सुतः' अनुज्ञातः सन् 'स' सुत्यादिवसे 'सुनोति' अभि-षावयति ; देवसूहविःप्रचारस्य अग्नीषोमीयदिवसकर्तव्यत्वात् स्व-त्वनेन सुत्यादिने विवक्षित इत्यभिप्रायः ॥ १३ ॥

एतासां देवतानां निर्वचनं 'सविता सत्यप्रसवाय'-इत्यादि-विशेषणविशेष्यात्मकं नामद्वयं तद् द्वन्द्वात्मना प्रशंसति— "ता वै द्विनाम्न्य इति । 'सुवान्तै'-इति पञ्चमलकारान्तं पदम् । "लेटो-ऽडाटौ"-इत्यडागमः *, "एत ऐ"-इत्यैकारादेशश्च † ॥ १४ ॥

अग्नीषोमीयपशुपुरोडाशप्रधानाहुतेरनन्तरं कर्तव्यं विधाय प्रसक्तं स्विष्टकृद्याग मनुवदति— "यथाम्नाय इति ‡ । प्रधान-

---

सुतसोमोपकरणानि, यज्ञप्रविष्टानि वा सूर्यो वा तस्मिन् सम्मु-खान् मान्यः; तथा हविषस्त्र हविर्द्धानस्यान्तरेव सोमम् राजानं समावहरति 'इदं त्वा मनसे संवि राज्याम्'—इति [ आप० श्रौ० सू० १९ ३ १२ ] । समाम्नातौ चेमौ मन्त्रौ तै० १ २ १३, १, ९ । पर मैत्रायणीये एव व्याख्यातकाण्डोत्तरत्र ( ४ ४ ३ ) 'ब्रह्मवादिनो वदन्ति'—इत्यादिना । उक्तश्चैतद्व्याख्याने सायणाचार्येण— 'सोम राज-न्निति मन्त्र उपेक्षितः'—इति । तदिदं सर्वं विशेषतो विवेच्यम् ।

* पा० सू० ३ ४ ९४ ।

† पा० सू० ३ ४ ९३ ।

‡ 'यथायेति'-इति च ।

शिटकृदाहुत्योर्मध्ये देवसूहविःप्रचारेण यज्ञरूपप्रजापतिमध्ये एव यजमानं निहितवान् भवतीत्यर्थः ॥ १५ ॥ ७ [ ३. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥

## ॥ इति पञ्चमकाण्डे द्वितीयः प्रपाठकः † ॥

---

* "मधुप्ररोडाशत्वं प्राधान्यात्, हविर्भेदो वा भूयस्त्वात्, स्विष्टकृच्चैव"—इति का० श्रौ० सू० (१५ ॥ १८, १९) इह पर्यालोच्यं। 'उभयकृत्या हि स्विष्टकृद्भिः'—काण्वानां यथाविशेषः स्विष्टकृत्, माध्यन्दिनानां द्विप्रयोग इति'—इति भाष्य कर्कः।

† इत उत्तरं सिद्ध 'कण्डिकाः १०४'—इति क, 'कण्डिकासंख्या ११४'—इति ख, 'कण्डिकासंख्या १०४'—इति ग, घ। तत्र १ब्रा० २१ क०, २ ब्रा० १० क०, ३ ब्रा० २० क०, ४ ब्रा० १७ क०, ५ ब्रा० १३ क०, ६ ब्रा० ८ क०, ७ ब्रा० १५ क०। सम्भवम् मञ्जूषयाऽस्मिन् प्रपाठके सप्तसु ब्राह्मणेषु १०४ कण्डिकाः सम्पन्ना इति शिवम् ॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

तृतीयेऽध्याये चतुर्थं ब्राह्मणम्।

॥ हरिः ॐ ॥

स वा अपः सम्भरति। तद्यदपः सम्भरति वीर्यं वा ऽआपो वीर्यमेवैतद्रसमपाए सम्भरति * ॥ १ ॥

औदुम्बरे पात्रे †। अन्नं वा ऽऊर्गुदुम्बर ऊर्जो ऽन्नाद्यस्यावरुध्यै तस्मादौदुम्बरे पात्रे ॥ २ ॥

स सारस्वतीरेव प्रथमा गृह्णाति। अपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदाहोर्जस्वती राजस्वश्चितानाः इति रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति राजस्वश्चि-

---

* 'सम्भरति'—इति क।

† 'पात्रे'—इति ख। 'पात्रे'—इति ग, घ।

ताना इति याः प्रजाता राजस्व इत्येवैतदाह याभिर्मित्रावरुणावभ्यषिञ्चन्नित्येताभिर्हि मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीरित्येताभिर्हीन्द्रं नाष्ट्रा रक्षांस्यत्यनयंस्ताभिरभिषिञ्चति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति * ॥ ३ ॥

अथाध्वर्युः । चतुर्गृहीत माज्यं गृहीत्वापो ऽभ्येति तस्या ऽऊर्मौ व्यूहतः पशौ वा पुरुषे वा-ऽभ्यवेते तौ गृह्णाति ॥ ४ ॥

स यः प्राङुदूहति । तं गृह्णाति वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति † ॥ ५ ॥

अथ यः प्रत्यङुदूहति । तं गृह्णाति ‡ वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनो ऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति वीर्यं वा ऽएतदपा मुदूहति पशौ वा

* 'सम्भवति'—इति क ।

† 'देहीति'—इति क । देहीति इति ख, ग घ ।

‡ 'गृह्णाति'—इति क ।

पुरुषे वाऽन्ववेते व्वीर्य्यैवैन मेतदभिषिञ्चत्येता वा ऽएका ऽऽपस्ता एवैतत् सम्भरति * ॥ ६ ॥

अथ स्यन्दमाना गृह्णाति । अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रं ममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्य्यं वा ऽएताः स्यन्दन्ते तस्मादेताः स्यन्दमाना न किञ्चन प्रतिधारयते व्वीर्य्यैवैन मेतदभिषिञ्चत्येता वा ऽएका ऽऽपस्ता एवैतत् सम्भरति † ॥ ७ ॥

अथ याः स्यन्दमानानां प्रतीपं स्यन्दन्ते । ता गृह्णात्योजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रं ममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्य्यं वा ऽएताः स्यन्दमानानां प्रतीपं स्यन्दन्ते व्वीर्य्यैवैन मेतदभिषिञ्चत्येता वा ऽएका ऽऽपस्ता एवैतत् सम्भरति ‡ ॥ ८ ॥

अथापयतीर्गृह्णाति । आपः परिवाहिणी स्थ राष्ट्रदा [ राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ

*, †, ‡ 'सम्भरति'—इति क ।

राष्ट्रदा *] राष्ट्रं ममुष्मै दत्तेति ताभिरभिषिञ्चत्ये-तद्वै वा ऽएषापाच्छिद्यैव पुनर्भवत्यपि ह वा ऽअस्यान्यराष्ट्रीयो राष्ट्रे भवत्यप्यन्यराष्ट्रीयं मवहरते तथास्मिन् भूमानं दधाति भूम्नैवैन मेतदभिषिञ्चत्येता वा ऽएषा आपस्ता एवैतत् सम्भरति † ॥ ९ ॥

अथ नदीपतिं गृह्णाति। अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्रं ममुष्मै देहीति ताभिरभिषिञ्चत्यपां वा ऽएष पतिर्यन्नदीपतिर्विशा मेवैन मेतत् पतिं करोत्येता वा ऽएषा आपस्ता एवैतत् सम्भरति ‡ ॥ १० ॥

अथ निवेष्यं गृह्णाति। अपां गर्भो ऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भो ऽसि राष्ट्रदा राष्ट्रं ममुष्मै देहीति ताभिरभिषिञ्चति गर्भं वा ऽएतदाप उपनिवेष्टन्ते विशा मेवैन

---

* बन्धनीचिह्नान्तर्गतपाठो ग-पुस्तके नास्ति।

†, ‡ 'सम्भरति'—इति क।

मेतद् गर्भं करोत्येता वा ऽएका आपस्ता एवै-
तत् सम्भरति * ॥ ११ ॥

अथ यः स्यन्दमानानाᳫं स्थावरो ह्रदो भव-
ति। प्रत्यातपे ता गृह्णाति सूर्यत्वचस स्थ
राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति
वर्चसैवैनमेतदभिषिञ्चति सूर्यत्वचसमेवैनमेतत्
करोति व्यवृत्ता वा ऽएता आपो भवन्ति याः
स्यन्दमानानां न स्यन्दन्ते व्यवृतसवो वा ऽएष
यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएका
आपस्ता एवैतत् सम्भरति † ॥ १२ ॥

अथ या आतपति वर्षन्ति। ता गृह्णाति
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति
ताभिरभिषिञ्चति वर्चसैवैनमेतदभिषिञ्चति
सूर्यवर्चसमेवैनमेतत् करोति मेध्या वा ऽएता
आपो भवन्ति या आतपति वर्षन्त्यप्राप्य

---

*, † सम्भरति—इति क।

श्रीमां * भवन्त्यथैना गृह्णाति श्रियमेवैन मेतत् करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति † ॥ १३ ॥

अथ वैशन्तीर्गृह्णाति। मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति विशमेवास्मा ऽएतत् स्थावरामनपक्रमिणीं करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ १४ ॥

अथ कूप्या गृह्णाति। व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति तद्या इमां परेणापस्ता एवैतत् सम्भरत्यपामु चैव सर्वत्वाय तस्मादेताभिरभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति § ॥ १५ ॥

अथ प्रुष्वा गृह्णाति। वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्र

---

* 'श्रीमा'—इति क ख० तैत्तिरीय पुस्त०।

†, ‡, § 'सम्भरति'—इति क।

ममुष्मै दत्तेति ताभिरभिषिञ्चत्यन्नाद्येनैवैन मेत-
दभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद्दधातीदं वा ऽअसा-
वादित्य उद्यन्नेव यथाय मग्निर्निर्दहेदेव मोष-
धीरन्नाद्यं निर्दहति तदेता आपो ऽभ्यवयत्यः शम-
यन्ति न ह वा ऽअस्यान्नाद्य परिशिष्यते यदेता
आपो नाभ्यवेयुरन्नाद्येनैवैन मेतदभिषिञ्चत्येता वा
ऽएका आपस्ता एवैतत् सम्भरति * ॥ १६ ॥

अथ मधु गृह्णाति। शविष्ठा स्थ राष्ट्रदा
राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्र
ममुष्मै दत्तेति ताभिरभिषिञ्चत्यपां चैवैन मेत-
दोषधीनां च रसेनाभिषिञ्चत्येता वा एका आपस्ता
एवैतत् सम्भरति † ॥ १७ ॥

अथ गोर्विजायमानाया उल्ब्या गृह्णाति।
शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी
स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषि-
ञ्चति पशुभिरेवैन मेतदभिषिञ्चत्येता वा ऽएका
आपस्ता एवैतत् सम्भरति ‡ ॥ १८ ॥

---

*, † °सम्भरन्ति—इति क।

‡ सम्भरन्ति—इति [illegible] पाठः।

अथ पयो गृह्णाति। ऊर्जभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा ऊर्जभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा ऽएता आपस्ता एवैतत् सम्भरति * ॥ १९ ॥

अथ घृतं गृह्णाति। विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशूनां मेवैनमेतद्रसेनाभिषिञ्चत्येता वा ऽएता आपस्ता एवैतत् सम्भरति † ॥ २० ॥

अथ मरीचीः। अञ्जलिना सङ्गृह्णापिसृजत्यापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्येता वा ऽआपः स्वराजो यन्मरीचयस्ता यत् स्यन्दन्त ऽइवान्यो ऽन्यस्या एवैतच्छ्रियया ऽभितिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वा ऽएता आपस्ता एवैतत् सम्भरति ॥ २१ ॥

*, † 'सम्भरति'—इति क।

ता वा ऽएताः। सप्तदशापः सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात् सप्तदशापः सम्भरति ॥ २२ ॥

षोडश ता आपो या अभिजुहोति। षोडशाहुतीर्जुहोति ता द्वात्रिंशद्यासु न जुहोति सारस्वतीषु च मरीचिषु च तास्त्रयस्त्रिंशत्त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिं करोति * ॥ २३ ॥

अथ यद्धुत्वा हुत्वा गृह्णाति। वज्रो वा ऽआज्यं वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति † ॥ २४ ॥

अथ यत् सारस्वतीषु न जुहोति। वाग्वै सरस्वती वज्र आज्यं नेद्वज्रेणाज्येन वाचं हिनसानीति तस्मात् सारस्वतीषु न जुहोति ‡ ॥ २५ ॥

अथ यन्मरीचिषु न जुहोति। नेद्वज्रे-

---

* करोति—इति क।

† गृह्णाति—इति क।

‡ जुहोति—इति क।

वैता माहुतिं जुहवानीति तस्मान् मरीचिषु न जुहोति ॥ २६ ॥

ताः सार्द्धमौदुम्बरे पात्रे समवनयति । मधुमतीर्मधुमतीभिः पृच्यन्ता मिति रसवती रसवतीभिः पृच्यन्ता मित्येवैतदाह महि क्षत्रं क्षत्रियाय वन्वाना इति तत्परोऽक्षं क्षत्रं यजमानायाशिष माशास्ते यदाह महि क्षत्रं क्षत्रियाय वन्वाना इति ॥ २७ ॥

ता पश्चेण मैत्रावरुणस्य धिष्ण्याए सादयति । अनाधृष्टाः सीदत सहौजस इत्यनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह सहौजस इति सवीर्या इत्येवैतदाह महि क्षत्रं क्षत्रियाय दधतीरिति तत्परोऽक्षं क्षत्रं यजमानायाशिष माशास्ते यदाह महि क्षत्रं क्षत्रियाय दधतीरिति ॥ २८ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३. ४.] ॥

चतुर्थब्राह्मणे यजमानाभिषेकार्थे सप्तदशपञ्चकानां मपा सम्भरणं मुच्यते । कात्यायनः कञ्चिद् विशेषं सूचयामास— "इडान्तेऽपो ग्रहाति, यूप सुसरेण नैमित्तिकीरसंधवाद्,

गत्वेतराः, पृथक् पात्रेष्वौदुम्बरेषु'-इति *। वातपवर्याया-न्युदकानि यूपस्योत्तरप्रदेशे निधाय गृह्णीयात्। इतराः सरस्वतीरपस्तु तत्र तत्र गत्वा गृह्णीयात्। तदिदं सम्भरणं विधत्ते— "स वा अप इति। उदकसम्भरणं वीर्यात्मना प्रशंसति— "तद्यदिति। अपां वीर्यरूपं रसमेव सम्भृतवान् भवतीत्यर्थः. ॥ १ ॥

सम्भरणस्य पात्रविशेषं विधत्ते— "औदुम्बर इति †। 'पात्रे'-इति जात्येकवचनम्। सर्वाणि सप्तदश पात्राणि औदुम्बराणि भवेयुः। तथा च सूत्र मुदाहृतम् ‡। औदुम्बरत्व मन्नावरोधकत्वेन प्रशंसति— "अन्नं वा इति ॥ २ ॥

जलसम्भरणे क्रम विधत्ते— "स सारस्वतीरेवेति। सरस्वत्या नद्या अपः प्रथमं गृह्णीयात् §। 'एव'-शब्दोऽन्ययोग-व्यवच्छेदार्थः। तत्र मन्त्रं विधत्ते— "अपो देवा इति ‖। 'मधुमती.' मधुररसवतीः, 'ऊर्जस्वती' विशिष्टान्नरसवतीः। 'राजस्वः' राजानं सुवते, जनयन्ति, अनुज्ञामन्तीति राजस्वः; ताः 'चितानाः' देवत्वेन चेतयमानाः, 'अपः' उदकानि 'देवाः' 'अगृभ्णन्' भकारश्छान्दसः। ता अपो विशिनष्टि— 'याभिः' अद्भिः 'मित्रावरुणौ' 'अभ्यषिञ्चन्' देवाः, 'याभिः' च 'इन्द्रम्'। 'अरातीः' अदानशीलाः शत्रुसेनाः 'अत्यनयन्' अतिक्रम्य नीतवन्तः इति।

---

* का० श्रौ० सू० १५. ४ २१—२४ ख।
† का० श्रौ० सू० १५. ४ २४ ख। ‡ प्रथमकण्डिकाभाष्ये।
§ का० श्रौ० सू० १५ ४ २५, २६।
‖ वा० सं० १०. १. १।

मन्त्रं प्रतिपदमनुव्याचष्टे— "अपो देवा इति। 'चितानाः' इत्यस्य व्याख्यानम्— 'मन्वानाः'—इति। शेषं निगदमिदम्।

एतासामभिषेकार्थत्वं प्रशंसति— "ताभिरभिषिञ्चतीति। यस्या अपो गृह्णाति, तां सरस्वतीं नदीं वागात्मना प्रशंसति— "वाग् वै सरस्वतीति। सारस्वतीभिरद्भिरभिषेककरणेन वाचैवाभिषिक्तं कृतवान् भवतीत्यर्थः। "एता वा एका इति। सारस्वत्य 'आपः' 'एकाः' एव मुदकम्। एवं सारस्वतीरपो गृहीत्वा षोडशापो गृह्णीयात् ॥

तत्र विशेषं दर्शयामास कात्यायनः— "सारस्वतीर्गृह्णात्यपो देवा इति, षुङ्खेष्वपरासु चतुर्गृहीतानि वृष्णऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वं पूर्वैः प्रतिमन्त्रं मुत्तरैरुत्तरैर्गृह्णाति"—इति *। उत्तरासु षोडशासु चतुर्गृहीतेनाज्येन पूर्वं स्वाहा-न्तैर्मन्त्रैर्हुत्वा हुत्वा उत्तरैरुत्तरैस्तास्ता अपो गृह्णीयादित्यर्थः ॥ ३ ॥

तदिदानीं क्रमेण विधास्यति; तत्र प्रथमां मूर्मिद्वयग्रहणं विधत्ते— "अथाध्वर्युरिति †। चतुर्गृहीताज्येन सह 'आपः' वक्ष्यमाणाः षोडश 'अभि'–शब्दम् 'अवैति' गच्छतीति सर्वत्रैव। 'तत्' तत्र नद्या पशुपुरुषयोरन्यतरस्मिन् 'अवयवेते' अवगाढे सति 'यौ ऊर्मी' 'व्यूहत' द्विविधं पूर्वापरीभावेन गच्छतः 'तौ गृह्णीयात्' ‡ ॥ ४ ॥

---

* का० श्रौ० सू० १५ ४ २२, २३। अत्र "कात्यायनस्य यथा श्रुति विनियोगक्रमेण च आपो गृहीतव्याः"—इति कर्काचार्यः।

† का० श्रौ० सू० १५ ४ २४।

‡ 'ऊर्मी कल्लोलौ'—इति कर्काचार्यः।

तयोर्मिङ्दयस्यानियमेन सत्यस्य वाचा यहवे प्राप्ते क्रमं विधत्ते— "स य. प्राङ्तिष्ठन्निति। 'यः' ऊर्मिः 'प्राङ्' प्राङ्मुखः 'उदर्हति' उत्सृच्छेत्, 'तं' गृह्णीयात् ॥

तत्र हवनमन्त्रं ग्रहणमन्त्रं च विधत्ते— "हव्य ऊर्मिरिति। स्वाहान्तो हवनमन्त्रः, द्वितीयो ग्रहणमन्त्र इति विभागः। अर्थस्तु— हे ऊर्मे ! 'हव्यो.' यष्टुः देवता सम्बन्धी 'ऊर्मिः' भवसि। 'राष्ट्रदाः' त्वं तु स्वभावत एव राष्ट्रं जनपदं ददातीति राष्ट्रदाः। अतो 'राष्ट्रं' 'मे' मह्यं 'देहि'। 'स्वाहा' -इति होमार्थः * ॥

द्वितीयोऽप्येवं व्याख्येयः ; तत्र 'अमुष्मै'-इति विशेषः। एतन्नामकाय यजमानाय राष्ट्रं देहीति तस्यार्थः † ॥

एवं सुपठिता अपि मन्त्रा व्याख्येयाः ॥ ५ ॥

द्वितीयस्योर्मेर्ग्रहणं विधत्ते— "अथ य प्रत्यङ्ङिति। "हव्येन इति ‡। 'हव्येन.' "हय सेचने", सेनो नाम यद्भवति ; सर्पण्गीमजन्त्रसक्तो भवति। शिष्टं पूर्ववत् ॥

ऊर्मिद्वयं जलवीर्यात्मना प्रशंसति— "वीर्यं वा इति। उभयोरप्यूर्म्योरिकत्वेन परिगणन माह— "एता वा एका आप इति ॥ ६ ॥

---

* वा० सं० १० २ १।

† वा० सं० १०, २ २।

‡ अत्र होममन्त्रः—वा० सं० १०, २ ३। ततो ग्रहणमन्त्रः— वा० सं० १० २ ४। 'पूर्वं मासं चतुर्गृहीतस्य होमः पश्चात् तासां ग्रहणम्'—इति कर्कः। 'मारुत्सतीषु अवीचिषु न होमः, प्रतिषेधात्' —इति च तत्रैव (का० सू०)।

प्रवहन्तीनां अपां ग्रहणं विधत्ते—"अथ स्यन्दमाना इति *। 'स्यन्दमाना' प्रवहन्तीरपो गृह्णीयात् ॥

तद्ग्रहणस्याश्रयं अर्थं — इ याय । 'अर्यन्त' अयं प्रयोजनं गच्छन्तीति तादृश 'स्थ भवथ। अत्र 'इत'-इति विशेष †। प्रवहन्तीनां अपां वीर्यात्मकत्व माह— 'वीर्येणेति। यत आपो वीर्येणैव 'स्यन्दन्ते', 'तस्मात्' 'स्यन्दमाना' 'एना' अप' 'किञ्चन' वस्त्वपि 'प्रति'-मुख 'न धारयते' न धृत भवति। यद्वा, प्रवहन्तीरपो न कश्चिदपि धारयितुं शक्नोतीत्यर्थः ॥ ७ ॥

प्रतिलोमं प्रवहन्तीनां अपां ग्रहणं विधत्ते— "अथ या' स्यन्दमानानामिति। 'स्यन्दमानानाम्' अपां मध्ये 'प्रतीप' प्रतिकूलं ‡ 'स्यन्दन्ते', 'ता' गृह्णीयात् §। 'ओजस्वती' बलवत्य 'स्थ' "वीर्येणेत्यादि पूर्ववद् व्याख्येयम् ॥ ८ ॥

नद्या स्वकीयात् अपच्छिद्य गच्छन्तीनां अपां ग्रहणं विधत्ते— "अपयतीरिति। 'अपयती' नदीप्रवाह परि त्यज्य पृथक-प्रवाहरूपेण या स्यन्दन्ते अपयत्य, ता गृह्णीयात् ¶ ॥

---

* का० श्रौ० सू० १५ ४ २७। नद्यादिस्था वहन्त्य आपः स्यन्दमाना उच्यन्ते—इति कर्काचार्यः

† वा० सं० १० ३ १ २।

‡ चन्द्राकर्षणात स्फीता विपरीतवाहिन्य ( ज्वोयार—इति प्रसिद्धा ) आप प्रतिलोमा उच्यन्ते।

§ का० श्रौ० सू० १५ ४ २८

‖ वा० सं० १० ३ २ ४।

¶ का० श्रौ० सू० १५ ४ २९।

हे 'आपः' आप्नुवन्ति सर्वं मित्यापः, 'परिवाहिणीः' परितः सर्वतो वाहो यासां ताः। यद्वा, 'परिवाहिणीः' परित्यज्य पृथग् वहन्त्यः स्थ। तत्र स्वाहान्तो हवनमन्त्रः, उत्तरो ग्रहणमन्त्र इति प्राग्वत्। एवमुत्तरत्राप्यवगन्तव्यम् ॥

परिवाहिणीभिरभिषेकं प्रशंसति— "एतस्मै वा इति। 'एषा' परिवाहिणी*, 'एतस्याः' महानद्याः सकाशाद् 'अपच्छिद्य' पृथक्-कृत्य परिवहति, 'एषैव पुनर्भवति'। संसृष्टा परिवाही पुनरेषैव महानदी भवतीत्यर्थः। यस्मादपच्छिन्ना नदी, पुनस्तां महानदीं प्राप्नोति। तस्मादसौ ताभिरद्भिरभिषिक्तः अन्यराष्ट्रीयः पुरुषः 'राष्ट्रे' स्वराष्ट्रे भवति, अन्यराष्ट्रीयम् 'अवहरति' आगमयति। यथा महानदी परिवाहीसंसर्गेण भूयसी जाता, 'तथा' तस्मिन् राजनि अन्यराष्ट्रीयसमवधानेन 'भूमानं' भूयस्त्वं 'दधाति'† ॥ ८ ॥

अथ समुद्रोदकग्रहणं विधत्ते— "अथ नदीपतिं गृह्णाति‡। नदीपतिसमुद्रस्थितानां अपां सन्निधेरेव ग्रहणे प्राप्ते सुवानाम् उच्छलन्तीनां अपां ग्रहणं कर्तव्य मिति विशेषः; "नदीपतेः सुवाः"—इति सूत्रान्तरात्§। सुष्ठु उद्यन्ति ऊर्ध्वं यान्तीति सुवाः, ता गृह्णीयादित्यर्थः। अपाम् उदकानां पतिः पालकः‖ ॥ १० ॥

* 'परिवहा'—इति क, ख, ग। 'परिवाहिणी स्रोतसि परिवहीनाम्'—इति चेह आप० श्रौ० सू० १८. १६ ६।

† का० सं० १० ३ ५, ६।     ‡ का० श्रौ० सू० १५ ४. २०।

§ का० श्रौ० सू० १५ ४ २१। 'सुवाः वीचिमत्यः'।

‖ अत्र मन्त्रौ— वा० सं० १० ३ ७, ८।

अथावर्त्तोदकग्रहणं विधत्ते— "अथ निवेष्य मिति *। निवेष्यते † आवर्त्तेऽस्मिन् तृणादिक मिति 'निवेष्यः' आवर्त्तः। तत्रस्थ मुदकं गृह्णीयात्। 'अपाम्' उदकानां 'गर्भः' अपत्यं भवति। "गर्भो वा एतद्"-इत्यादिश्रुत्य र्थः ‡॥ ११॥

"अथ यः स्यन्दमानाना मिति। ये 'आपः।' 'सूर्यत्वचसः' सूर्यस्य त्वक् दीप्तिर्यासां ताः, यद्वा, सूर्यस्य त्वक् शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः; तथाविधाः 'स्थ'। "वर्चसैवेति। 'वर्चसा' दीप्त्या अभिषिक्तवान् भवति। 'सूर्यत्वचसं' सूर्यसमानतेजस्कं कृतवान् भवति §॥

"वशस्था इति। स्थावरा आपो वशादेवत्या इत्यर्थः ‖। "वरुणस्य इति। 'राजसूयम्'-इति यत् 'एषः वरुणसवः' वरुणाभिषेकः; वरुणोऽभिषिच्यते यस्मिन्निति सः। अतो वरुणदेवत्याभिः कृत्वाभिरद्भिरभिषेकः कर्त्तव्यः॥ १२॥

अथातपवर्ष्योग्रहणं विधत्ते— "अथ या आतपतीति ¶। सूर्ये आतपति सति या वर्षन्ति, स्यन्दन्ते, ता गृह्णीयात्। "सूर्यवर्चस इत्यातपति वर्ष्याणाम्"-इति हि आपस्तम्बः **।

---

* का० श्रौ० सू० १५ ४ २२।

† 'निवेश्यते'—इति च।

‡ अत्र मन्त्रौ— वा० सं० १० ३ ६ १०।

§ वा० सं० १० ४ १, २।

‖ का० श्रौ० सू० १५ ४ २४। 'स्यन्दमानानां मध्ये याः स्थावराः स्थिराः न वहन्ति'—इत्यादिवृत्तिरिहालोच्या।

¶ का० श्रौ० सू० १५ ४ २५।

** आप० श्रौ० सू० १८ १३ १०।

भूमेरधस्ताद् विप्रकृष्टे देशे कूपे स्थिताः आपः गृह्णीयात्। किमर्थं भूमिस्थितानामपां ग्रहणम्? तत्राह— "अपां सु चेति। 'अपां सर्वत्वाय' सर्वेषामुदकानां समष्ट्या इत्यर्थः ॥ १५ ॥

अथ नीहारोदकानां ग्रहणं विधत्ते— "अथ प्रुष्वा इति *। 'प्रुष्वाः' नीहाराः। हे आपः! 'वाशाः स्थ'। "वश कान्तौ" †। सर्वैः काम्यमाना भवथ ‡। यद्वा, वशाः स्थ; नीहारो हि नदीप्रवाहवत् मनुष्यादिगतिं न प्रतिबध्नाति, अतो वश्यत्वम्। प्रुष्वाणां समाख्यामस्य सुपपादयति— "इदं वा प्रशासिति। 'उद्यन्' 'असौ' अन्तरिक्षे दृश्यमानः 'आदित्यः' 'इदम्' ओषधिरूपम् 'अन्नाद्यं' निर्दहति। अन्नं च तदाद्यमदनीयं चेत्यन्नाद्यम्। तत्र दृष्टान्तः— "यथाग्निर्निर्दहेदेव मित्यादि। 'तत्' तदा अस्याग्नेः सन्तापजातज्वरनिमित्ते § नीहाररूपाः 'आपः' 'अभ्यवयन्ति'। अन्यतिरेकं दर्शयति— "स य वेत्यादिना। तस्मादोषधिवर्द्धनहेतुभूताभिः प्रुष्वाभिरद्भिः अभिषेचेन यजमाने अन्नाद्यमेव निहितवान् भवतीत्यर्थः ॥ १६ ॥

अथ माधुनी ग्रहणं विधत्ते— "अथ मध्विति ‖। हे 'मधु!' द्रवरूपा आपः! 'वशिताः' वशवर्तमानाः 'स्थ' ¶। "अथार्द्धेवेति। 'एतत्' एताभिः मधुद्रवरूपाभिरद्भिः अभि-

---

* का० श्रौ० सू० १५ ॥ ३८ ।

† अदा० प० ६८ धा० ।

‡ शु० यं० १०, ॥ ८, १० ।

§ "०शमाय (?)"—इति ख ।

‖ का० श्रौ० सू० १५ ॥ ३९ ।

¶ शु० यं० १०, ॥ ११, १२ ।

अप्सु संसृजेदित्यर्थः। अत्र सूत्रम्— "आपः स्वराज इति मरीचीर्गङ्गीलाश्चलिना सर्वासु संसृजति"-इति *॥

हे मरीचिरूपा आपः! 'स्वराजः स्थ' स्वय मेव राजमाना भवथ †। अत्र सोमाभावात् खाड्वाः पूर्वो मध्यो न पठितः ‡। कथं मरीचीनां अप्सु न परिगणन मिति तदुपपादयति— "एता वा आप इति। 'मरीचयः'-इति 'एत्', 'एताः' 'स्वराजः' स्वय मेव दीप्यमानाः 'आपः'। "ता यत् स्यन्दन्त इति। 'यत्' यस्मात् 'ताः' मरीचयः 'स्यन्दन्त इव' प्रवहन्तीव। 'इव'-शब्दः उपमार्थे §; साक्षात् प्रवहणाभावात्। यथा जलसङ्घा उपर्युपरिभावेन वर्तन्ते, तद्वदेता मरीचयः 'अन्योऽन्यस्य' मरीचेः 'श्रिये' शोभायै 'यतिष्ठमानाः' स्थातुं प्रयतमानाः 'उत्तराधरा इव भवन्त्यः' 'यन्ति' गच्छन्ति। अतो जलसाम्यादप्सु न परिगणन मित्यर्थः ‖। मरीचीनां ग्रहणं स्वाराज्यहेतुत्वेन प्रशंसति— "स्वाराज्य मिति। अतो 'मरीचयः' स्वराज आपः ¶॥ २१॥

---

* का० कौ० सू० १५ ४ ४१।

† वा० सं० १० ४ २३।

‡ इह अभिलापाद, आर्षोऽलङ्कारो वा।

§ 'अल्पार्थे'—इति क।

‖ आरण्यकाः पूर्वाभ्यः, अपरीभ्यः, स्यन्दमानाः, प्रतिलोमाः, आपयन्त्यः, मधुदिघाः (कौपिस्याः, तीर्थोदकानि च), सिन्ध्वाः, स्थावराः, आतपवर्ष्याः, सरस्याः, कूप्याः, कुम्भ्याः, प्रप्याः, ग्रीष्मप्याः, पयस्याः, एतानिकार्येति समदशविधा आपो भवन्तीति।

¶ 'अभ्योऽसि मिथुनाता आपो मरीचयः'—इति का० श०।

सम्भृतानां सर्वासां सप्तदशसङ्ख्यां प्राजापत्यात्मना स्तौति— "ता वा एताः सप्तदशेति। प्रजापतेः सप्तदशत्वं प्रागुक्तम् * ॥ २२ ॥

अथोक्तानां सारस्वतीप्रभृतिमरीच्यन्तानां सर्वासामाहुतीनां च सङ्ख्यां समस्य प्राजापत्यात्मना प्रशंसति— "षोडश ता याप इति। 'याः' 'आपः' अभिलक्ष्य जुहोति, 'ताः' 'षोडश'; ऊर्मिद्वयस्य विवेके षोडशसङ्ख्याका भवन्ति; आहुतयोऽपि षोडश, आहुतिभिः द्विगुणिताः सारस्वत्यो मरीचय इति द्वयं, ताः सम्भूय चतुस्त्रिंशत् सम्पद्यते। अत्र चतुस्त्रिंशत्सम्पत्त्या चतुस्त्रिंशद्देवतात्मकं प्रजापतिमेव ज्ञातवान् भवतीति तत्कारणं प्रशस्तमित्यर्थः ॥ २३ ॥

होमपूर्वकं ग्रहणं प्रशंसति— "अथ यद्धुत्वा गृह्णाति। आज्यस्य वज्रात्मकत्वस्तुतिः प्रागुदाहृता †। वज्ररूपेण 'आज्येन' 'स्तृत्वा-स्तृत्वा' छित्त्वा-छित्त्वा, तत 'स्वीकृत्य' स्वाधीनं कृत्वा ग्रहणो भवेत्। यथा लोके राजादिः प्रबलः शत्रुप्रभृति जनं प्रथमं बाधित्वा पश्चात् स्वाधीनं करोति, तद्वदित्यर्थः ॥ २४ ॥

सारस्वतीषु मरीचिषु च होमाभावे कारणमाह— 'अथ यदिति ‡। सरस्वत्या वाक्त्वात् वाचो वज्रेण हिंसा माभूदिति न होतव्यम् ॥ २५ ॥

---

* इतैव पुरस्तात्— २३ पृ० १ पं० द्रष्टव्यम्।

† प्रथमकाण्डे— ३६२ पृ० ७ पं० द्रष्टव्यम्।

‡ सारस्वतीषु मरीचिषु च न होमः, प्रतिषेधात्। अत एव संहितायामपि एतद्द्वयस्य आहरणमन्त्राभावो न श्रूयते।

"अंशु यन्मरीचिष्विति । मरीचिष्वपि 'अन्तरा' मध्ये अस्थाने मा सा होमाधिकरणत्वाभावात् होतव्य मित्यर्थः । 'नेत्'-इति निपात परिभये, 'जुहवानि'-इत्यनेन सम्बध्यते ॥ २६ ॥

विधत्ते— "ता सार्धं मिति । 'ता' विहिता, पृथक् पृथक् पात्रे गृहीता आप 'सार्धं' सम्भूय एकस्मिन् 'पात्रे' 'समवनयति' आसिञ्चेदित्यर्थः * । 'मधुमती' मधुरसवत्य आप 'मधुमतीभि' अद्भि 'पृच्यन्ताम्' । "पृची सम्पर्के †", सम्पृच्यन्ताम् । ता विशिनष्टि— 'महि' महत् 'क्षत्रं' बलं क्षत्रियकुलं वा 'क्षत्रियाय' यजमानाय 'वन्वाना' वातु याचयमाना कामयमाना इति । अत्र मन्त्रं ‡ आचष्टे— "मधुमतीरित्यादि । 'महि क्षत्र क्षत्रियाय वन्वाना इति यदाह', 'तत्' तेन 'यजमानाय' 'परोक्ष' मेव अप्रत्यक्षमाशासितवान् भवतीति योजना । 'क्षत्रियाय'-इति तस्याभिधानात्, 'वन्वाना' इति याचनाभिधानात्, आशिषः परोक्षत्व मित्यर्थः ॥ २७ ॥

सङ्गृहीताना मपां मैत्रावरुणधिष्ण्यस्य पुरोदेशे सादनं समन्त्रकं विधत्ते— "ता अप्रेषेति § । हे आप ! 'अनाधृष्टा' रक्षोभिरनभिभूता, 'सहौजस' ओजसा बलेन सहिता, सवीर्या 'सीदत' उपविशत । 'महि' महत्, 'क्षत्र' बलं क्षत्रियत्वं वा, 'क्षत्रियाय' 'दधती' दधत्य, धारयन्त्य,

---

* का० श्रौ० सू० १५ । ४६ ।
† चुरा० आ० १० धा० ।
‡ मा० सं० १ । १० ।
§ का० श्रौ० सू० १५ । ४७

प्रथमपुरुषस्य इति । मन्त्रं व्याचष्टे— "पनाष्टष्टा इति *। 'दधती' -इति प्रदानस्य साक्षादुक्तेः प्रत्यक्षत्वं माभूत्, 'सीदत'-इति मध्यमपुरुषप्रयोगादेति वेदितव्यम् ॥ २८ ॥ १ [ ३ ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् )

तं वै माध्यन्दिने सवने ऽभिषिञ्चति । एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति † ॥ १ ॥

षष्ठीति माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यवैतन्निष्केवल्यमेव स्तोत्र निष्केवल्यं शस्त्रमिन्द्रो वै यजमानस्-

---

* शा० श्र० १० ३ ३१ ।

† 'सुवति'—इति क ।

देनेऽ स्व ऽएवायतने ऽभिषिञ्चति तस्माद्गृह्णीते माहेन्द्रे * ॥ २ ॥

अथैत मैत्रावरुणस्य धिष्ण्याए। शार्दूलचर्मो-पस्तृणाति सोमस्य त्विषिरसीति यत्र वै सोम इन्द्र मत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषि मेवा-स्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूया-दिति † ॥ ३ ॥

अथ पार्थानि जुहोति। पृथी ह वै ‡ वैन्यो मनुष्याणां प्रथमो ऽभिषिषिचे ऽ सो ऽकामयत सर्व्वं मन्नाद्य मवरुन्धीयेति तस्मा ऽएतान्यजुहवुः स इदए सर्व्वं मन्नाद्य मवरुरुधेऽपि ह स्मास्मा ऽआरण्यान् पशूनभिह्वयन्त्यसावेहि राजा त्वा

पत्यस इइति तथेदᳫं सर्व्वं सन्नाय संवत्स्यं
सर्वᳫं ह वा ऽस्मादा संवत्से यस्यैवं विदुष
एतानि हूयन्ते ॥ ४ ॥

तानि वै द्वादश भवन्ति। द्वादश वै मासाः
संवत्सरस्य तस्माद्द्वादश भवन्ति ॥ ५ ॥

षट् पुरस्तादभिषेकस्य जुहोति। षडुपरि-
ष्टात्तदेन मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः
सुवति ॥ ६ ॥

स यानि पुरस्तादभिषेकस्य जुहोति। बृह-
स्पतिस्तेषां मुखमो भवत्यथ यान्युपरिष्टादभि-
षेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै
बृहस्पतिरिन्द्रियं वीर्यं मिन्द्र एताभ्या मेवैन मेत-
द्वीर्याभ्या मुभयतः परिवृणक्ति ॥ ७ ॥

स जुहोति। यानि पुरस्तादभिषेकस्य जुहो-
त्यग्नये स्वाहेति तेजो वा ऽअग्निस्तेजसैवैन
मेतदभिषिञ्चति सोमाय स्वाहेति क्षत्रं वै सोमः
क्षत्रेणैवैन मेतदभिषिञ्चति सवित्रे स्वाहेति
सविता वै देवानां प्रसविता सवितृप्रसूत एवैन
मेतदभिषिञ्चति सरस्वत्यै स्वाहेति वाग्वै सर-

स्वती व्वाचैवैन मेतदभिषिञ्चति पूष्णे स्वाहेति पशवो वै पूषा पशुभिरेवैन मेतदभिषिञ्चति बृहस्पतये स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैन मेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते * ॥ ८ ॥

अथ जुहोति। यान्युपरिष्टादभिषेकस्य जुहोतीन्द्राय स्वाहेति व्वीर्यं वा ऽइन्द्रो व्वीर्येणैवैन मेतदभिषिञ्चति घोषाय स्वाहेति व्वीर्यं वै घोषो व्वीर्येणैवैन मेतदभिषिञ्चति श्लोकाय स्वाहेति व्वीर्यं वै श्लोको व्वीर्येणैवैन मेतदभिषिञ्चत्यंशाय स्वाहेति व्वीर्यं वा ऽअंशो व्वीर्येणैवैन मेतदभिषिञ्चति भगाय स्वाहेति व्वीर्यं वै भगो व्वीर्येणैवैन मेतदभिषिञ्चत्यर्यम्णे स्वाहेति तदेन मस्य सर्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जुहोति † तान्येतान्यादित्यनामानीत्याचक्षते ‡ ॥ ९ ॥

* '०त्याचक्षते'—इति क। † 'जुहोति'—इति ख।
‡ '०त्याचक्षते'—इति क ख।

अग्रेण मैत्रावरुणस्य धिष्ण्यम्। अभिषेचनीयानि पात्राणि भवन्ति यैरेता आपो ऽभिषेचनीया भवन्ति ॥ १० ॥

पालाशं भवति। तेन ब्राह्मणो ऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैन मेतदभिषिञ्चति* ॥ ११ ॥

औदुम्बरं भवति। तेन स्वो ऽभिषिञ्चत्यन्नं वा† ऽऊर्गुदुम्बर ऊर्जं स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोर्क् स्वं तस्मादौदुम्बरेण स्वो ऽभिषिञ्चति ॥ १२ ॥

नैयग्रोधपादं भवति। तेन मित्र्यो राजन्यो ऽभिषिञ्चति पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्यो ऽभिषिञ्चति‡ ॥ १३ ॥

आश्वत्थं भवति। तेन वैश्यो ऽभिषिञ्चति स यदेवादो ऽश्वत्थे तिष्ठत इन्द्रो मरुत उपा-

* '°षिञ्चति'—इति क।
† '°मूर्जा'—इति ख।
‡ '°षिञ्चति' इति क।

मन्वयत तस्मादाश्वत्थेन व्यैश्यो ऽभिषिच्यत्येता-न्यभिषेचनीयानि पात्राणि भवन्ति * ॥ १४ ॥

अथ पवित्रे करोति। पवित्रे स्थो वैष्णव्याविति सो ऽसावेव बन्धुस्तयोर्हिरण्यं प्रवयति ताभ्यामेता अभिषेचनीया अप उत् पुनाति तद्यद्धिरण्यं प्रवयत्यमृतमायुर्हिरण्यं तदासु मृतमायुर्दधाति तस्माद्धिरण्यं प्रवयति ॥ १५ ॥

स उत्पुनाति। सवितुर्व्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सो ऽसावेव बन्धुरनिभृष्ट मसि व्वाचो बन्धुस्तपोजा इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानिभृष्टमसीति व्वाचो बन्धुरिति यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा व्वदति तस्मादाह व्वाचो बन्धुरिति ॥ १६ ॥

तपोजा इति। अग्नेर्व्वै धूमो जायते धूमादभ्र मभ्राद्वृष्टिरग्नेर्वा ऽएता जायन्ते तस्मादाह तपोजा इति ॥ १७ ॥

---

*, भवन्ति'—इति क।

सोमस्य दात्रमसीति । यदा वा ऽएतमेताभिरभिषुण्व*न्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्रमसीति स्वाहा राजस्व इति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥ १८ ॥

ता एतेषु पात्रेषु व्यानयति । सधमादो द्युम्निनीराप एता इत्यनतिमानिन्य इत्येवैतदाह यदाह सधमाद इति द्युम्निनीराप एता इति वीर्यवत्य इत्येवैतदाहानाधृष्टा अपस्यो वसाना इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानाधृष्टा अपस्यो वसाना इति पस्त्यासु चक्रे वरुणः सधस्थमिति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाहापां शिशुर्मातृतमास्वन्तरित्यपां वा ऽएष शिशुर्भवति यो राजसूयेन यजते तस्मादाहापां शिशुर्मातृतमास्वन्तरिति † ॥ १९ ॥

---

* 'मेताभिरभिषुण्व०'—इति क ख । 'मेताभिरभिषुण्व०'—इति च छ ज वा० वेबरस्य ।

† रिति—इति क ख 'रिति—इति ग ।

अथैनं वाससाऽसि परिधापयति। तत्तार्प्य-मिति वासो भवति तस्मिन्त् सर्व्वाणि यज्ञ-रूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति क्षत्रस्योल्वमसीति तदेव क्षत्रस्योल्वं तत एवैन-मेतज्जनयति * ॥ २० ॥

अथैनं पाण्ड्वं परिधापयति। क्षत्रस्य जरा-य्वसीति तदेव क्षत्रस्य जरायु तत एवैन मेत-ज्जनयति † ॥ २१ ॥

अथाधीवासं प्रति मुञ्चति। क्षत्रस्य योनि-रसीति तदेव क्षत्रस्य योनिस्तस्या एवैन मेत-ज्जनयति ‡ ॥ २२ ॥

अथोष्णीषं सं हृत्य §। पुरस्तादवगूहति क्षत्रस्य नाभिरसीति तदेव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥ २३ ॥

तद्वैके। समन्तं परिवेष्टयन्ति नाभिर्वा ऽअस्यैषा समन्तं वा ऽइयं नाभिः पर्य्येतीति

---

*, †, ‡ 'जनयति'—इति ख।

§ 'परिहृत्य'—इति क, सर्वं चैतत् का०—शैवरीय।

व्यवदध्यात्तदु तथा न कुर्य्यात् पुरस्तादेवावगूहेत् पुरस्ताद्वीर्यं नाभिस्तद्यदेनं व्वासाऽसि परिधापयति जनयत्येवैन मेतज्जात मभिविपश्यानीति तस्मादेनं व्वासाऽसि परिधापयति ॥ २४ ॥

तद्धैके। निदधत्येतानि व्वासाऽस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्यादङ्गानि वा ऽअस्य तनूर्व्वासाऽस्यङ्गैरेनऽ सतन्वा * तन्वा व्यर्धयन्ति व्यृद्धं दीक्षितवसनऽ स एतेषा मेवैकं व्वाससां परिदधीत तदेन मङ्गैस्तन्वा तन्वा समर्द्धयति व्यृद्धं दीक्षितवसनं तदेन व्यृद्धाद्दीक्षितवसनात् प्रमुञ्चति ॥ २५ ॥

स यत्रावभृथ मभ्यवैति। तदेतदभ्यवहरन्ति यत् सक्षौम क्रियते स एतेषा मेवैकं व्वाससा परिधायोदैति तानि व्यगाये वा व्यपायाऽ हुतायां दद्यादुदवसानीयाया व्वेष्टौ ॥ २६ ॥

अथ धनुरधितनोति। इन्द्रस्य व्वार्त्रघ्न मसीति व्वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वा

* 'सतन्वा'—इति च इदं पा०-भेदस्य।

ऽएष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वार्त्रघ्नमसीति * ॥ २७ ॥

अथ बाहू विमार्ष्टि। मित्रस्यासि वरुणस्यासीति बाह्वोर्वै धनुर्बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्यासि वरुणस्यासीति तदस्मै प्रयच्छति त्वयायं वृत्रं वधेदिति त्वयायं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह † ॥ २८ ॥

अथास्मै तिस्र इषूः प्रयच्छति। स यया प्रथमया समर्पयेन परा भिनत्ति‡ सैका सेयं पृथिवी सैषा दृढा नामाथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षं सैषा रुजा नामाथ ययापैव राध्नोति सा तृतीया सासौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र इषवस्तस्मादस्मै तिस्र इषूः प्रयच्छति ॥ २९ ॥

ताः प्रयच्छति। पातैनं प्राञ्चं पातैनं

---

* 'समाप्ति—इति क।

† '०द्दाह' इति क।

‡ 'परान् भिनत्ति'—इति क। परान् भिनत्ति—इति माधव समात, पाठ इति च डा० वेबर:।

प्रत्यञ्चं पातेन तिर्यञ्चं दिग्भ्यः पातेति तदस्मै सर्वा एव दिशो ऽशरव्याः करोति तद्यदस्मै धनुः प्रयच्छति व्वीर्यं वा ऽएतद्राजन्यस्य यद्धनुर्व्वीर्यवन्तमभिषिञ्चानीति तस्माद्वा ऽअस्मा ऽआयुधं प्रयच्छति * ॥ ३० ॥

अथैन माविदो व्वाचयति । आविर्मर्या इत्यनिरुक्तं प्रजापतिर्व्वा ऽअनिरुक्तस्तदेनं प्रजापतय ऽआवेदयति सोऽस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३१ ॥

आवित्तो ऽअग्निर्गृहपतिरिति । ब्रह्म वा ऽअग्निस्तदेनं ब्रह्मण ऽआवेदयति तदस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३२ ॥

आवित्तो ऽइन्द्रो व्वृद्धश्रवा इति । क्षत्रं वा ऽइन्द्रस्तदेनं क्षत्रायावेदयति तदस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३३ ॥

आवित्तौ मित्रावरुणौ धृतव्रताविति । प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्या

---

* 'प्रयच्छति—इति क॰।

मावेदयति तावस्मै सर्व मनुमन्येते ताभ्या मनुमतः सूयते ॥ ३४ ॥

आवित्तः पूषा विश्ववेदा इति । पशवो वै पूषा तदेनं पशुभ्य आवेदयति तेऽस्मै सर्वमनुमन्यन्ते तैरनुमतः सूयते ॥ ३५ ॥

आवित्ते द्यावापृथिवी विश्वशम्भुवाविति । तदेन माभ्यां द्यावापृथिवीभ्या मावेदयति तेऽस्मै सर्व मनुमन्येते ताभ्या मनुमतः सूयते ॥ ३६ ॥

आवित्तादितिरुरुशर्मेति । इयं वै पृथिव्यदितिस्तदेन मस्यै पृथिव्या ऽआवेदयति सास्मै सर्व मनुमन्यते तयानुमतः सूयते तद्याभ्य एवैन मेतद्देवताभ्य आवेदयति ता अस्मै सर्व मनुमन्यन्ते ताभिरनुमतः सूयते ॥ ३७ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [३. ५.] ॥

पञ्चमे ब्राह्मणे यजमानाभिषेकः, तत्रत्या धर्माश्च विधीयन्ते । तत्र यजमानाभिषेकं सकालं विधत्ते— "स वै माध्यन्दिन. इति । माध्यन्दिनसवने क्रियमाणं अभिषेकं प्रशंसति—

"अपि ह स्मेति। 'अपि' खलु 'अस्मै' यजमानाय, तदर्थम्, 'आरण्यान्' अरण्ये भवान् 'पशून्' 'अभिह्वयन्ति'। किम्? इति। "असाविति। तत्सम्बोधनार्थं सम्बुद्ध्यन्तस्य सामान्यनिर्देशः। हे असौ। 'एहि' आगच्छ, अयं 'राजा' 'त्वा' त्वां 'पश्यते' भोक्तुं अक्षं करिष्यति 'इति'। सोऽपि पशुः तद् वचः श्रुत्वा तत्समीपं स्वय मेवागच्छति। 'तथा' सति ग्राम्यारण्यभक्षणस्य सर्वस्याप्यवरोधः। विदुषोऽस्यातनस्यापि पशुलाभरूपफलं माह— "सर्वं ह वा इति ॥ ४ ॥

एतेषां संख्यां विधत्ते— "तानि वै द्वादशेति। उक्तां संख्यां संवत्सरात्मना प्रशंसति— "द्वादशेति ॥ ५ ॥

एतेषां हवनक्रमं विधत्ते— "षडिति। द्वादशानां पदार्थानां मध्ये पूर्वषट्कस्यान्ते "बृहस्पतये स्वाहा"–इति पठ्यते, उत्तरषट्कस्यादौ "इन्द्राय स्वाहा"–इति *। तयोरुभयोर्मध्ये अभिषेकेण यजमानं ब्रह्मक्षत्रवीर्याभ्याम् उभयतः सम्परिहितवान् भवतीति ॥ ६, ७ ॥

अभिषेकस्य पुरस्तात् कर्त्तव्यं होमं मन्त्रान् विधत्ते— "स जुहोतीति। "अग्नये स्वाहा"–इत्यादयो मन्त्राः †। तमेवैकं मन्त्रं स्तौति— "तेजो वा अग्निरित्यादिना। अर्थवादवाक्येषु स्पष्टोऽर्थः। सोमादिपदानां देवतान्तरवाचकत्वं व्युदस्यति— "नामधेयान्यभिमतानीति। 'तानि' पूर्वाणि पदानि 'अग्निनामान्यावर्तते', ब्रह्मवादिन इति शेषः; अग्नेः सर्वदेवतात्मकत्वादिति भावः ॥ ८ ॥

---

* वा० सं० १० ५ ६, ०अन्तौ स्वाहा ।
† वा० सं० १० ५ १–६ ।

अभिषेकस्योपरि कर्त्तव्यं होममन्त्रं मनूद्य मन्त्रान् सार्थवादं विधत्ते— "अथ जुहोतीति। "इन्द्राय स्वाहा"–इत्यादयो मन्त्राः *। अत्रेन्द्रादयः पञ्च देवता अपि वीर्यात्मना स्तुताः। "तदेनं सर्वस्येति। अर्यमदेवत्यहोमेन 'एनं' यजमानं 'सर्वस्य' 'अर्यमणं' नियन्तारं अधिपतिं कृतवान् भवतीत्यर्थः। इन्द्रादिषड्देवतावाचकानां पदानां देवतानानात्ववाचकत्वं व्युदस्यति— "आदित्यनामानीति। इन्द्रादयः शब्दा आदित्यस्यैव मूर्त्तिभेदेनावस्थितस्य नामानि। पूर्वं सवितृवाचकैर्नामभिर्होमेन भूलोके यजमानं निहितवान् भवति, अत्र तु आदित्यवाचकैर्नामभिर्होमेन स्वर्गलोके अवस्थापितवान् भवतीत्युभयार्थवादवाक्ययोरर्थः ॥ ९ ॥

अभिषेचनीयानां पात्राणां आसादनप्रदेशं विधत्ते— "अथैतानीति। एतच्च पूर्वं मुदाहृतम्। अभिषेचनीयशब्दं निर्वक्ति— "यदेति। यत् तेषु पात्रेषु 'एताः' विहिताः सप्तदश 'आपः' 'अभिषेचनीयाः' अभिषेकार्थं आसिच्यमानाः 'भवन्ति', तानि अभिषेचनीयानीति ॥ १० ॥

तानि पात्राणि अभिषेक्तृविशेषसहितानि क्रमेण विधत्ते— "पालाशं भवतीति †। 'पालाशम्' पलाशशाखानिर्मितं एकं पात्रम्। 'तेन' पात्रेण 'ब्राह्मणः' यजमानं अभिषिञ्चेत्। पालाशेनैव ब्राह्मणकर्तृकयजमानाभिषेककरणे कारणमाह— "ब्रह्म वा इति। 'पलाशः' 'ब्रह्म वै' इत्येषु ब्राह्मणजातिः ॥ ११ ॥

---

* का० सं० १० ५ ७—१२ ।

† 'अभिषेचनीयैश्चैना आनयति'—इति का० श्रौ० सू० १५. ५. ६ । 'पालाशादिचतुर्षु पात्रेषु चतुर्धा विभज्य आनयति एवा व्ययः'—इति तद्वृत्तिः ।

"एष वै प्रजापतिरिति। माध्यन्दिनसवने क्रियमाणेनाभिषेकेण 'एनं' यजमानं 'मध्यत एव' यज्ञरूपप्रजापतिमध्ये एव निहितवान् भवति। 'मध्यतः' मध्ये 'सुवति' प्रेरयति, अध्वर्युरित्यर्थः ॥ १ ॥

कालविशेषं विधत्ते— "मरुत्वतीय इति*। 'माहेन्द्रे' ग्रहे 'अगृहीते' सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः। माहेन्द्रग्रहणात् पूर्वं यजमानाभिषेकं स्वायतननिधानरूपेण प्रशंसति— "एष वा इन्द्रस्येति। इदं प्रथमाध्याये व्याख्यातम्†। अत्र यदुक्तं कात्यायनेन— "मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति व्याघ्रचर्म सौदेति, पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधवटाश्वत्थान्यभिषेकाय"-इति‡। "मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति§, अपरेऽन्ते सीसं निदधाति, पादेना सञ्चये स्वाहेति। षड् जुहोति प्रतिमन्त्रम्"-इति ॥ च ॥ २ ॥

तदिदं क्रमेण विधित्सुर्व्याघ्रचर्मास्तरणं समन्त्रकं विधत्ते— "अथ पेति। मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मास्तृणीयात्** । हे चर्मन्! 'सोमस्य' 'त्विषिः' दीप्तिः 'असि'। 'तवेव' यथा

* का० श्रौ० सू० १५ ५ १।
† १ ३ ४ (३८ पृ० १८पं० पुन. ५३पृ० ४पं०), द्रष्टव्यम् ।
‡ का० श्रौ० सू० १५ ४ ३७, ३८।
§ वा० सं० १० ५ १।
|| वा० सं० १० ५. २—३।
¶ का० श्रौ० सू० १५ ५. ५, ७ १।
** का० श्रौ० सू० १५ ५. १।

तव दीप्तिरस्ति, तथा 'मे' मम 'त्विषि.' दीप्तिः 'भूयात्' अस्त्विति *। शार्दूलस्य सोमत्विषित्वं माख्यायिकामुखेनोपपादयति— "यत्र वै सोम इति। पूर्वं मिन्द्रेण पीयमानः सोमः, तम् 'अत्यपवत' शरीरादधो निरगच्छत्। स सोमो यदा अत्यपवत, ततः सोऽतिपवितः सोम शार्दूलः सम्भूतवान् †। 'तस्मात्' शार्दूलस्य सोमकार्यत्वात् तदीयत्वचः सोमत्विषित्वम्। "तवेव मे"-इतिमन्त्रभागस्य तात्पर्यं माह— "तवेव म इति। 'एतत्' एतेन मन्त्रभागकथनेन 'अस्मिन्' यजमाने शार्दूलदीप्ति मेव निहितवान् भवति ॥ ३ ॥

अथाभिषेकस्य पुरस्तात् पश्चाच्च क्रियमाणान् पार्थहोमान् विधत्ते— "अथ पार्थानीति ‡। 'पार्थानि' पृथिनानुष्ठितानि। एतेषां पृथिसम्बन्धं दर्शयति— "पृथी हेति। 'वैन्यः' वेनो नाम राजा, तस्य पुत्रः 'पृथी' नाम §, 'मनुष्याणां' मध्ये 'प्रथमः' अभिषिक्तः। 'सर्वम् अन्नाद्यम्' 'अवरुन्धीय' स्वाधीनं कुर्याम् 'इति' कामयमानाय 'तस्मै' पृथवे ‖ 'एतानि' पार्थानि 'अजुहवुः' अध्वर्यवः। ततः 'सः' राजा 'इदं सर्वं मन्नाद्यम्' 'अवरुरुधे' स्वाधीनं कृतवान्। तत्रैवाभिषेकदृष्टान्तं दर्शयति—

---

* वा० सं० १० ५ १।

† "यदस्याधः शरीरादस्रवत् ततः शार्दूलस्यैकाः श्यामदा अभवन्"— इति उपरिष्टाद् द्रष्टव्यम् (५ ४ १०)।

‡ का० श्रौ० सू० १५ ५. २।

§ अत्र पृथिमिति मान्तशब्द एव भाष्यसम्मतः पाठो लभ्यते, चतुर्ष्वादर्शपुस्तकेष्वेकविधदर्शनात, मूले तु पृथुरिति च पाठः।

‖ चतुर्ष्वादर्शटीकापुस्तकेष्विह 'पृथवे'—इत्येव।

औदुम्बर मिति । 'औदुम्बरम्' उदुम्बरनिर्मितं पात्रं द्वितीयम् । 'तेन' पात्रेण 'स्वः' ज्ञातिः भ्राता अभिषेकं कुर्यात् । तत्रोपपत्तिं दर्शयति— "अन्नं वा इति । उदुम्बरस्यान्नसाधनत्वात् तदुक्तम् । अन्न मेव पुरुषस्य 'स्व' धनं यतः, अतोऽस्य 'पुरुषस्य यावत् स्वं भवति', 'तावत्' 'न एव अशनायति' क्षुधितो न भवतीत्यर्थः, धनस्य विद्यमानत्वात् । अतोऽन्नस्य स्वस्यान्नसाधनेनौदुम्बरपात्रेण 'स्वः' ज्ञातिर्भ्राता एवाभिषिञ्चेत् ॥ १२ ॥

"नैयग्रोधपाद मिति । तृतीयं 'नैयग्रोधपादम्' । न्यग्रोधो नाम वटः, तस्य पादः शाखावरोहः, तेन निर्मितं नैयग्रोधपादम् । 'तेन' 'मित्रः' सखिकर्मण्यपि साधुः सखा 'राजन्य' अभिषिञ्चेत् । तत्र हेतु माह— "पद्भिरिति । न्यग्रोधस्य पादैरेव प्रतिष्ठा दृश्यते ; राजापि हितोपदेशकैराप्तैः सखिभिः प्रतिष्ठितो भवति, नान्यथा । अतस्तेन पात्रेण मित्रकर्तृक मभिषेककरणं युक्त मित्यर्थः ॥ १३ ॥

"आश्वत्थ मिति । चतुर्थम् 'आश्वत्थम्' अश्वत्थनिर्मितम्, तेन 'वैश्यः' अभिषिञ्चेत् । अश्वत्थस्य वैश्यसम्बन्धं दर्शयति— "स यदेवेति । व्याख्यातम् । विड्रूपाणां मरुतां अश्वत्थेऽवस्थानात् वैश्यस्य तत्सम्बन्धः ॥ १४ ॥

अथ पवित्रकरणं विधत्ते— "अथ पवित्रे इति * । द्वे 'पवित्रे ।' 'वैष्णव्यौ' विष्णुर्देवः, तत्सम्बन्धिन्यौ दर्भनाड्यौ 'स्थ' भवथः, इति मन्त्रार्थः † । दर्भनाड्योर्विष्णुसम्बन्धप्रतिपादक मर्थवादवाक्य मतिदिशति— "सोऽसावेव बन्धुरिति ।

* का॰ श्रौ॰ सू॰ १५ ४ ४७ ।
† वा॰ सं॰ १० ६ ।

दानसाधनभूता भवत। स्वाहाकारेण पूता स्थ। अत्र स्वाहा-शब्दो न होमार्थः ; मन्त्रान्ते पाठाभावात्। 'राजस्वः' राजानं सुवते जनयन्तीति राजस्व *, राजोत्पादका इत्यर्थः ॥

मन्त्रे भागद्वयोऽनूद्य व्याख्यास्यन् सवितुर्व इति मन्त्रभागस्य प्रथमकाण्डे उत्पवनसमये समाम्नात अर्थवादवाक्यं प्रति-दिशति— "सोऽसाविति। तत्र स्रोव माम्नातम्— "सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति, सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति, यो वा अयं पवत एषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरिति, एते वा उत्पवितारो यत् सूर्यस्य रश्मयः, तस्मादाह सूर्यस्य रश्मिभिरिति"–इति †। "वृषिणश्च स्थेति। सामान्यविवक्षयैकवचनान्तत्वेन प्रयुक्त मर्पा बहुत्वेन बहुवचना-न्ततया व्याचष्टे—"वृषाण्स्थ स्थेति। अथ वाक्यमन्तुल्य भव-पादयति— "यावद्वै प्राणेष्विति। 'प्राणेषु' मुखनासिकादिषु यावदपां सद्भाव, तावत् पुरुषो वाचं वदति ; तद्विरहे शुष्का जिह्वा मन्त्रानुच्चारयितुं न शक्नोतीत्यर्थः ॥ १६ ॥

"तपोजा इति। अथा परम्परया अग्निजनकत्वं दर्शयति— "अग्नेर्वा इति ॥ १७ ॥

सोमदानसाधनत्व मुदकस्य निरूपयति— "यदा [illegible] एन मिति। 'यदा' यस्मिन् काले 'एन' सोमम् 'एताभिः' अद्भिः 'अभिषुण्वन्ति' अभिषवं कुर्वन्ति, अध्वर्यवः। 'अथ' अभिषवा-नन्तरम् 'आहुति भवति' ॥ १८ ॥

---

* 'राजसूः'- इति पाठान्तरीयः पाठः।

† १का० १अ० ३ब्रा० ६क० (५१ पृ० १ पं०) द्रष्टव्यम्।

विधत्ते— "ता एतेष्विति। 'एतेषु' अभिषेचनीयेषु 'पात्रेषु' 'एताः' उक्ताः 'अपः' 'व्यानयति' आसिञ्चेदित्यर्थः *। 'सध-मादः' सह माद्यन्तीति सधमादः, परस्परं सन्नतिमानिन्य इत्यर्थः। "सध मादस्थयोश्छन्दसि"–इति † सहस्य सधादेशः। 'द्युम्निनीः' वीर्यवत्य 'एताः आपः'। 'ऋतावरीः' 'अनाधृष्टाः' अनभिभूताः, 'अपस्यवः' अप इति कर्मनाम ‡, राजसूयाख्यं कर्म इच्छन्त्यः, 'वसानाः' "वस आच्छादने" § आच्छा-दयन्त्यो या आपः, सन्तीति शेषः। तासु अतिशयेन मातृ-भूतासु 'पस्त्यासु' 'पस्त्या'–इति गृहनाम ‖, गृहावस्थितास्वप्सु 'अप्सुः' मध्ये 'सधस्थं' सहस्थानं 'प्रतिष्ठाम्', 'अपां शिशुः' वरुणः; राजसूयेऽभिषिच्यमानत्वात् तदात्मकत्व मुच्यते। तथा-विधो वरुणः 'चक्रे' कृतवानिति। यद्वा, 'पस्त्यासु' गृहा-वस्थितासु 'विक्षु' प्रजास्विति व्याख्येयम् ¶॥

मन्त्रं प्रतिपाद्य मनूद्य तात्पर्यपुरस्सरं व्याचष्टे— "सन्नति-मानिन्य इति ॥ १८ ॥

विधत्ते— "अथैनं वासांसीति। 'एनं' यजमानं 'वासां-सि' ( 'तार्प्यम्' ) तार्प्यपाण्ड्वधिवासोष्णीषाणि परिधापयेदिति सामान्यविधिः। तत्तात्पर्यार्थकथनपुरस्सरं विधत्ते— "तत्तार्प्य मिति। 'तत्' तत्र, तेषु प्रथमं 'तार्प्य मिति वासः'; तृप्यत्, कल्पनादिक मित्यर्थः। अत एव कात्यायनः—

---

* का० श्रौ० सू० १५ ५. ६।
† पा० सू० ६ ३ ६६। ‡ निघ० २. १. १।
§ धात० भ्वा० १३ धा०। ‖ निघ० ३. ४. ६।
¶ पा० सं० १०. ७ १।

"तार्प्यं परिधापयति , क्षौमं , त्रिपार्णं वा, घृतोक्षं भवेत्"— इति । तृपा नामौषधिविशेषः , तत्तन्तुनिर्मितम् , क्षौमं वस्त्रं 'तार्प्यम्', त्रिः सत्त्वः पायितं 'त्रिपार्णम्', 'घृतोक्षम्' "उन्दी क्लेदने" *, घृतसिक्तमिति 'एके' आचार्या वदन्ति † ॥

तत्र कश्चिद् विशेषं विधत्ते— "तस्मिन्त्सर्वाणीति ‡ । 'यज्ञरूपाणि' स्रुक्चमसादीनि 'सर्वाणि' तस्मिन् 'स्यूतानि' भवेयुः । तार्प्यस्य परिधापने मन्त्रं विधत्ते— "क्षत्रस्येति § । हे तार्प्य ! 'क्षत्रस्य' राज्ञो यजमानस्य गर्भत्वेनोपचर्यमाणस्य 'उल्बम्' आवरणम् 'असि' । उल्बावृतो गर्भ इति छन्दोगा आमनन्ति । उक्तमर्थं साधयति— "तद्यदेवेति । 'यद्' उल्बं तस्मादेव 'एनं' यजमानम् 'एतत्' एतेन तार्प्यपरिधापनेन उत्पादितवान् भवति ॥ २० ॥

विधत्ते—"अथैन मिति । 'पाण्डुम्' पाण्डरम् , श्वेतं कम्बलम् परिधापयेत् , तार्प्यस्योपरि परिदध्यादित्यर्थः ‖ । 'पाण्डु'-शब्दार्थ उक्त । तदिदं पाण्डरं द्वितीयम् ; श्वेतम् पाण्डर मित्याचक्षते । हे पाण्डर-कम्बल । 'क्षत्रस्य' पूर्वोक्तविशेषणस्य 'जरायु' जरायुस्थानीयम् 'असि'-'इति' । 'एतेन' पाण्डरपरिधापनेन । 'तत ' जरायोः ¶ ॥ २१ ॥

---

* रु० पा० १६ धा० ।
† का० श्रौ० सू० १५ ५ ७—१० ।
‡ का० श्रौ० सू० १५ ५ ११ ।
§ वा० सं० १० ८ १ ।
‖ का० श्रौ० सू० १५ ५ १२ ।
¶ वा० सं० १०. ८. २ ।

विधत्ते—"यथाधीवास मिति *। अधि उपरि वसनीय माच्छादनीयं वस्त्रम् 'अधीवासम्', तत् प्रतिमुञ्चेत्। तार्प्यं सुपसंव्याय पाण्डर मुत्तरीयवदाच्छाद्य, 'अधीवास' मासुकादिकम्, उपरि प्रतिमुञ्चेदित्यर्थः। हे वस्त्र! 'वरुणस्य' 'योनिः' स्थानम् 'असि'। गर्भरूपयजमानस्य एतानि त्रीणि वस्त्राणि उल्ब जरायु-योनि रूपत्वेन प्रशस्तानीति समुदितोऽर्थः †॥ २२॥

उष्णीषवेष्टनं विधत्ते—'यथोष्णीष मिति ‡। 'उष्णीषं संहृत्य' § शिरोगतरूपेण कण्ठेऽवसज्य 'पुरस्तात्' पूर्वभागे नाभिदेशे 'अवगूहति' उष्णीषान्त नीवीस्थाने प्रवेशयेदित्यर्थः। तन्मन्त्रस्य अर्थः—'वरुणस्य' 'नाभिः' नाभिस्थानीयम् 'असि' इति ॥ ॥ २३॥

उक्त उष्णीषान्तस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्ष मेव पक्षिक मनुवदति—"तदेक इति ¶। 'एके' शाखान्तराध्यायिनः 'तत्' उष्णीषं 'समन्तं' सर्वतो नाभिदेशे 'परिवेष्टयन्ति'। तदुपपादयति—"नाभिर्वा इति। 'अस्य' क्षत्रियस्य 'एषा' उष्णीषरूपा 'नाभिः' अपि 'समन्तं' 'पर्येति' परिवेष्टिता भवति। अत "क्षत्रियस्य नाभिरसि"—इति मन्त्रे उष्णीषस्य नाभित्ववचनात् तत्तात्पर्याय समन्तात् वेष्टन मुक्त मित्येषां मतम् ॥

---

* का० श्रौ० सू० १५ ५ ११ क।
† वा० सं० १० ८ ३।
‡ का० श्रौ० सू० १५ ५ १६ ख।
§ 'संहृत्य'—इति ख-पाठः।
|| वा० सं० १० ८ ३।
¶ का० श्रौ० सू० १५ ५ १७।

तद् दूषयति— "तदु तथेति। उक्तं मतं निगमयति— "पुरस्तादेवेति। तत्र हेतु माह— "पुरस्ताद्धीय मिति। तार्प्यादिवासःपरिधापनं सम्भूय प्रशंसति— "तद्यदेनं वासांसीति। 'एतत्' एतेन वासःपरिधापनेन 'एनं' यजमानं 'जनयति' उत्पादितवान् भवति; तेषां वाससां उल्वजरायुयोनिरूपत्वोक्तेः। किमर्थं जनन मिति तत्राह— "जात ममीति। 'जातं' यजमानम् 'अभिषिञ्चानि' अभिषिक्तं करवाणि 'इति' बुद्ध्या 'वासांसि' परिधापयेदित्यर्थः * ॥ २४ ॥

पूर्वं निहितस्य दीक्षितवसनस्य परित्यागं विधित्सुरेकेषां मत मुपन्यस्यति। यद्वा, अथ अपरः सम्बन्धः— विहितानां तार्प्यादीनां परिधापनादिक मेव द्रढयितुं पूर्वपक्षयति— "तदेक इति। 'एके' शाखिनः एकवारं परिधापितानि 'एतानि वासांसि' 'निदधति' निक्षिप्य निदधुः। 'अथ' तदानीं मेव तार्प्यादिवसनकाले निहितं 'दीक्षितवसनम्' 'एनं' यजमानं 'पुनः परिधापयन्ति'। पुनःपरिधापनकालस्तु सूत्रकृता दर्शितः— "दीक्षितवसननिष्क्रमितिर्विरोधात्, माहेन्द्रादौ वा पुनःपरिधानं निधायैतान्"-इति †। तद् दूषयति— "तदु तथेति। अङ्गानि वा इति। 'वासांसि'-इति यत् तानि 'अस्य' यजमानस्य 'तनूः अङ्गानि' सहोत्पन्नानि। तार्प्यादीनां वाससां उल्व-जरायु-प्रभृत्यात्मकत्वादङ्गत्वम्। उल्वादीनान्तु गर्भावस्थायां सह निवासा-दङ्गत्व मुपचरितम् ॥

---

* "तार्प्यप्रभृतीनि यजमानस्येति प्रतिमन्त्रम्"—इति का० श्रौ० सू० १५. ५. १५। मन्त्रास्तु ते वा० सं० १०. ८ १—४।

† का० श्रौ० सू० १५. ५-२६।

यद्वा, अथ मन्त्रार्थः— 'वासांसि तनूरूपाणि' सहोत्पन्नत्वात् * त्वगूपाण्यङ्गानि। 'वै'-शब्दः प्रसिद्धिद्योतकः। तृतीयकाण्डे दीक्षाप्रकरणे "अथ वासः परिधत्ते"–इत्युपक्रम्याम्नातम्— "तस्मिन् एतां त्वचं अदधुः वास एव तस्मात् नान्यः पुरुषाद् वासो बिभर्ति"–इति †। अतो वासोभिः परिधापनेन 'जन्वा' 'तन्वा' सहोत्पन्नैः शरीररूपैः 'अङ्गैः' समर्धितवान् भवति। अङ्गसमुदाय एव हि तनूः, शरीरेण तदङ्गैश्च संवर्धितवान् भवति। दीक्षितवसनस्य परित्यागं दर्शयितुं तस्य दुष्टत्व माह— "वरुण्य मिति। वरुणगृहीतं दुष्ट मित्यर्थः॥

"न एतेषा मित्यादिव्याख्याय मर्थः— एतेषां वाससा मेकेन नार्घ्येण ‡ प्रथमानिमन्त्रे कारणाभावात्। यद्वा, 'एकम्' प्रथम मित्यर्थः। प्रथमन्तु तार्प्येण, तेन परिधापनं कर्त्तव्यम्। न तु दीक्षितवसनस्य पुनः परिधापन मित्यर्थः॥ २५॥

निहितस्य दीक्षितवसनस्य अवभृथे प्रासनं विधत्ते— "स पर्येति। 'अवभृथम्' 'अभ्यवहरन्ति' आहरेयुः, अप्सु प्रक्षिपेयुरित्यर्थः। 'तत्' तथा सति 'मनोभ क्रियते' प्रजागत मनुष्यस्य भवतीत्यर्थः। अतो तु § दीक्षितवसनस्य अवभृथे परित्याग उक्तः। "न एतेषा मित्यादिनादिशति। माहेन्द्रादौ दीक्षितवसनस्य पुनः परिधानं न कृतम्, तदा तार्प्यादीना मेकैकेनैव परिहितेन वाससा अवभृथादारभ्य मनुसरणं च

---

* 'सहोत्पन्नानि'–इति ह, ञ।

† श ३. १ १३–१६ (११, १(२०))।

‡ 'तार्प्यं'–इति ञ।

§ 'तु'-शब्दो नास्ति ञ-पुस्तके।

कर्त्तव्य मित्यर्थः। 'उदेति' उत्सरेत्। तेषां वाससां दानकालं विधत्ते— "तानि ददाति इति। अनुबन्ध्यावपायाः वपायाग-काले आध्वर्यवे 'दद्यात्'। अवसाने कर्त्तव्या उदवसानीयेष्टिः, तस्यां वा दद्यात्। अतएव कात्यायनः— "अवभृथ मेकेन ताप्यादीनि वेदुद्देत्येके, दीक्षितवसनं च प्राश्नाति, अनूबन्ध्या-वपाहोमान्ते दद्यादेतानि, उदवसानीयायां वा"—इति * ॥ २६ ॥

"अथ धनुरधीति †। 'अधितनोति' आतनोतीत्यर्थः। मन्त्रस्याय मर्थः— हे धनुः! त्वम् 'इन्द्रस्य' 'वार्त्रघ्नं' वृत्र-हननसाधन मायुधम् 'असि' भवसि ‡। इन्द्रशब्दार्थ माह— "इन्द्रो वा इति। कथं यजमानस्येन्द्रत्व मिति तदुपपादयति— "द्वयेनेति। क्षत्रिय इति यत्, यजमान इति यत्, तेन द्वयेनेत्यर्थः। क्षत्रं नाम बलम्; तत्सम्बन्धात्, यष्टृत्वाच्चेत्यर्थः। इन्द्रस्य यजमानत्वं प्रसिद्धम् ॥ २७ ॥

विधत्ते— "अथ बाहू इति §। हे बाहो! 'मित्रस्य' 'असि' भवसि ‖। तथापरं बाहुं प्रत्याह— "वरुणस्यासीति ¶। बाहुद्वयं विमृज्यात्। कर्कोपाध्यायेन ‖ बाहुशब्दस्य धनुष्कोटि-परत्वं व्याख्यातम् **। तमिमं प्रशंसति— "बाहू इति। बाहुभ्यां यद् मित्रवरुणसम्बन्धी राजन्यो भवति; बाहुवीर्य-

* का० श्रौ० सू० १५ ७. २५—२८ द्रष्टव्यम्।

† का० श्रौ० सू० १५ ५. १७।

‡ वा० सं० १० ८ ९।

§ का० श्रौ० सू० १५ ५ १८।

‖, ¶ वा० सं० १० ८ ६, ७।

** "बाहू धनुःकोट्याबूचेते"—इति (१५ ५. १९)।

सहायो राज्ञो लक्षण मित्यर्थः । धनु प्रदानं समन्त्रक विधत्ते-- “तदस्मा इति *। हे धनु ! ‘त्वया’ साधनेन ‘अयं’ यज मानो ‘वृत्र’ शत्रु ‘वधेत्’ हिंस्यादिति। मन्त्र व्याचष्टे-- “त्वयायं द्विषन्त मिति †॥ २८ ॥

अथेषुत्रयप्रदानं विधत्ते-- “अथास्मा इति। ‘तिस्रः’-इति लोकत्रयात्मकत्वेन। अस्ताना मिषूणा लक्षण दृष्ट्वा च दर्श यति-- ‘स यथेति।

‘समर्पणेन’ परित्यागमात्रेण ‘यया’ ‘परान् भिनत्ति’ शत्रून् विदारयति, तस्या एकस्या ‘दृभा’-नामधेयायाः पृथिव्यात्मक त्वेन प्राधान्य मित्यर्थः। ‘यया’ विद्धस्य ताडितस्य जीवने सन्देह, तस्या ‘रुजा’-नाम्न्या अन्तरिक्षात्मकत्वम्। यया शत्रुम् ‘अपराध्नोति’ हिनस्त्येव, तस्याः ‘क्षुमा’-नामधे यायाः द्युलोकात्मकत्वेन प्राधान्य मित्यर्थः ‡॥

अत्र कश्चिद् विशेष कात्यायन सूत्रयामास-- “दृभासीति प्रतिमन्त्र मादाय तिस्र इषू प्रयच्छति”-इति §। तेषां मन्त्राणा मय मर्थः-- ‘दृभा’ “दृ विदारणे” ‖, दृभासीति ‘दृभा’ विदारिका ‘असि’ इति। दृभ्यतेऽसौ रूपम्। इति प्रथमेषुग्रहणम्। ‘रुजा’ “रुजो भङ्गे” ¶, भङ्गहेतुरिषुरसि।

---

* का० श्रौ० १५ ५ १८।
† वा० सं० १ ८ ६।
‡ एतदन्तानि व्याख्यानानि एतद्ब्राह्मणाध्ययनमूलानि इह पुस्तके।
§ का० श्रौ० सू० १५ ५ २०।
‖ धा० प० २० धा०।
¶ तु० प० १२६ धा०।

अनेन द्वितीयशरप्रक्षेपणम्। 'क्षुमा' "क्षुप विधूनने" *, क्षुपतीति क्षुमा, पकारस्य स्थाने मकारः; अनुक्षुपणकारिणी इषुरसि। अनेन तृतीयशरप्रक्षेपणम्। एवं मादाय दद्यात् ॥ २९ ॥

इषुदान मन्त्रं सम्म विधत्ते— "ताः प्रयच्छतीति †। 'एनं' यजमानं 'प्राञ्च' प्राग्गमनम्, प्राग् गन्तारम् हे इषवः !, 'पात' पालयत। 'प्रत्यञ्चम्' प्रत्यग् गन्तारम्, 'तिर्यञ्चम्' तिर्यग् गन्तारम्, किं बहुना 'दिग्भ्यः' सर्वाभ्यः 'पात' इति। "तद्वमा इति। 'अशरव्याः' अहिंसकाः; शरव्य शरलक्ष्यम्, तद्रहिताः 'करोति'। अनेन सर्वास्वपि दिक्षु परकीयशरलक्ष्यत्वं निवर्त्यते ‡ ॥

इमं मन्त्रं त्रिष्वभिमर्शनेऽपि कात्यायनो विनियुक्तवान्— "पातैनं मित्यभिमृशति"–इति §। आपस्तम्बोऽपि— "पात मा प्रत्यञ्च मिति प्रदीयमानाननुमन्त्रयते"–इति ‖ ॥ ३० ॥

विधत्ते— "अथैनं माविद इति ¶। आविद-पदयुक्ताः सप्त मन्त्राः 'आविद', तान् वाचयतीत्यर्थः। आवेदयन्ति ज्ञापयन्ति देवताभ्य एनं यजमान मित्याविदो मन्त्राः।

तान् मन्त्रान् विधत्ते— "आविर्मर्या इति **। 'आवि-

---

* भौवादिक मवमादेनार्थो धातुः, ततो बोपदेवेन धा० पा० पठितः।

† वा० सं० १० ८ १०, ११, १२।

‡ वा० सं० १० ८ १३।

§ का० श्रौ० सू० १५ ५ २० सू०।

‖ आप० श्रौ० सू० १८ ‖ १३।

¶ का० श्रौ० सू० १५ ५ २२।

** वा० सं० १० ९ १-७।

मैया इत्यनिरुक्तम्' साक्षाद्देवतावाचकपदरहितं मन्त्रं वाचये-दित्यर्थः । हे 'मर्याः' मरणयोग्या मनुष्याः । 'आविः' प्रकाशो-ऽभूत् । अनेन कस्मै देवतायै यजमान आवेदितो भवतीत्या-शङ्क्य तां देवतां दर्शयति— "प्रजापतिरिति । 'प्रजापतिः' खलु 'अनिरुक्तः' ईदृश इति वक्तु मशक्यं ; तस्मादनेन यजुषा अनिरुक्तेन अनिरुक्तात्मने 'प्रजापतये' 'एनं' यजमानम् आवेदितवान् भव-तीत्यर्थः । आवेदनस्य फल माह— "सोऽस्मा इति । 'सः' आवेदितः ज्ञापितः प्रजापतिः 'अस्मै' सुन्वते 'सवम्' अभिषेकम् 'अनुमन्यते', 'तेन' प्रजापतिना 'अनुमतः' अनुज्ञातः 'सूयते' अभिषिच्यते । एवमुत्तरत्रापि व्याख्येयम् ॥ ३१ ॥

"आवित्तो ऽग्निर्गृहपतिरितीति । गृहपतिगुणकः 'अग्निः' 'आवित्तः' आवेदितः, ज्ञापितः । "विदो भोगप्रत्यययोः"–इति * निपातितः । अग्नये यजमानं ज्ञापितवानित्यर्थः ॥ ३२ ॥

"आवित्त ऽइन्द्रो † इति । 'वृद्धश्रवाः' । "श्रव इत्यन्ननाम, शृणृत इति सतः"–इति हि यास्कः ‡ । वृद्धं प्रभूतं श्रवो यस्य ॥ ३३ ॥

"आवित्तौ मित्रावरुणाविति । 'धृतव्रतौ' । व्रत मिति कर्म-नाम §, धृतौ स्वीकृतकर्माणौ ॥ ३४ ॥

"आवित्तः पूषा इति । 'विश्ववेदाः' सर्वधनः ॥ ३५ ॥

"आवित्ते द्यावापृथिवी इति । 'विश्वशम्भुवौ' सर्वस्य जगतः सुखस्य भावयित्र्यौ ॥ ३६ ॥

---

* पा० सू० ८. २ ५८ ।

† 'आवित्तोऽइन्द्रः'—इति म, घ ।

‡ निरु० १०. १ ३ ।    § निघ० २ १. ३ ।

"आवित्तादितिरिति *। 'उरुशर्मा' प्रभूतं सुखं यस्याः, 'अदिति' अखण्डनीया देवमाता। भूमिरेव काचिन्मूर्त्तिं धृत्वा देवमातादितिरित्युच्यते †॥

एता देवता सम्भूय प्रशंसति— "तदाभ्य एवैन मिति ॥ ३७ ॥ २ [ १ ५ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्ड गोसहस्र कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रा रुक्माश्विहिरण्यहस्तिरथौ सायणि विप्रवार्यौ,
ध्यात्वाणौ विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रि पञ्चजन्मा तिलभव सतुनं सर्वजं पर्वमुख्यं,
कार्पासीय कृपावान् गुडकृत सजलो राजत राजपूज्य ।

---

* देवाश्चिनु प्रतिमन्त्रम् नेति सम्प्रदाय —इति का० श्रौ० सू० १५ ५ २१ वृत्ति । † अखण्डनीयेयमदितिरिति नैरुक्ता ।

प्राभ्योर्थं प्राज्यजन्मा लवणज मनुषः शार्करं चार्कतेजाः,
यक्षाश्वो रत्नरूपं गिरि मकृत मुदा पात्रधाविद्रणार्थं. ॥ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

१ अश्वकटीपण्यो द्वितीयाध्याये (१६१ पृ०) द्रष्टव्यः ।

( अथ चतुर्थाध्याये प्रथमं ब्राह्मणम् । )

केशवस्य पुरुषस्य । लोहायसम् मास्य ऽआविध्यत्-
द्वेष्टा दन्दशूका इति सर्व्वान्वा ऽएष मृत्यूनति-
मुच्यते सर्व्वान् वधान् * यो राजसूयेन यजते तस्य
जरैव मृत्युर्भवति तदो मृत्युर्यो व्यधस्त† मेवैतदति-
नयति यद्दन्दशूकान् ॥ १ ॥

अथ यत् केशवस्य पुरुषस्य । न वा ऽएष
स्त्री न पुमान्यत् केशवः पुरुषो यदह पुमांस्तेन
न स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न
हिरण्यं‡ यल्लोहायसं नैते क्रिमयो नाक्रिमयो
यद्दन्दशूका अथ यल्लोहायसम्भवति लोहिता इव
हि दन्दशूकास्तस्मात् केशवस्य पुरुषस्य§ ॥ २ ॥

---

* 'वधान्'—इति ग, घ।

† 'वधस्त'—इति ग, घ।  ‡ 'हिरण्य'—इति क।

§ 'पुरुषस्य'—इति क, ख।

अथैनं दिशः समारोहयति। प्राचीमारोह गायत्री त्वावतु रथन्तरꣳ साम त्रिवृत् स्तोमो व्वसन्त ऋतुर्ब्रह्म द्रविणम् ॥ ३ ॥

दक्षिणा मारोह। त्रिष्टुप् त्वावतु वृहत् साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ॥ ४ ॥

प्रतीची मारोह। जगती त्वावतु व्वैरूपꣳ साम सप्तदश स्तोमो व्वर्षा ऋतुर्व्विड् द्रविणम् ॥ ५ ॥

उदीची मारोह। अनुष्टुप् त्वावतु व्वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥ ६ ॥

ऊर्ध्वा मारोह। पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू व्वर्चो द्रविण मिति ॥ ७ ॥

तद्यदेनं दिशः समारोहयति। ऋतूना मेवैतद्रूप मृतूनेवैतत् * संवत्सरꣳ समारोहयति स ऋतून् संवत्सरꣳ समारुह्य सर्व्व मेवेद मुपर्युपरि भवत्यर्व्वागि-†-वास्मादिदꣳ सर्व्वं भवति ॥ ८ ॥

---

* '०मेवैन मेतद्रूप मृतूनेवैन मेतत्०'—इति घ।

† 'भवत्यर्व्वागि'—इति ग, घ।

शार्दूलचर्म्मणो जघनार्द्धे*। सीसं निहितं भवति तत् पदा प्रत्यस्यति प्रत्यस्तं नमुचेः शिर इति नमुचिर्ह वै नामासुर आस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठित उदबाधत स उच्छ्वङ्कस्तस्य† पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्धैनमनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यसऽइति ॥ ९ ॥

तत् सीसेनापजघान। तस्मात् सीसं मृदु सन्तजवꣳ हि सर्व्वेण हि व्वीर्य्येणापजघान तस्माद्धिरण्यरूपꣳ सन्न कियच्चनार्हति सन्तजवꣳ हि सर्व्वेण हि व्वीर्य्येणापजघान तद्वै स तन्नाष्ट्रा रक्षाꣳस्यपजघान तथो ऽएवैष एतन्नाष्ट्रा रक्षाꣳस्यतो ऽपहन्ति‡ ॥ १० ॥

अथैनꣳ शार्दूलचर्म्मा रोहयति। सोमस्य त्विषिरसीति यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषि-

---

* 'नार्धे'—इति ख, घ।

† 'उच्छ्वङ्कस्तस्य'—इति ख।

‡ 'ऽपहन्ति'—इति क।

स्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषि-र्भूयादिति शार्दूलत्विषि मेवास्मिन्नेतद्दधाति तस्मा-दाह तवेव मे त्विषिर्भूयादिति * ॥ ११ ॥

अथ रुक्म मधस्तादुपास्यति । स्त्योः पाष्टीत्य-मृत मायुर्हिरण्यं तदमृत ऽआयुषि प्रति-तिष्ठति † ॥ १२ ॥

अथ रुक्मः शतविदृषो वा भवति । नव-वितृषो वा स यदि शतवितृषः शतायुर्वा ऽयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृषो यद्यु नववितृषो नवेमे पुरुषे प्राणास्तस्मान्नव-वितृषः ॥ १३ ॥

त सुपरिष्टाच्छीर्ष्णी निदधाति । श्रोतोऽसि सद्दो ऽस्यमृत मसीत्यमृत मायुर्हिरण्यं तदस्मिन्नमृत मायुर्दधाति तद्युक्मा ऽउभयतो भवतो ऽमृत मायुर्हिरण्यं तदमृतेनैवैन मेतदायुषोभयतः परि-वृण्हति तस्माद्रुक्मा ऽउभयतो भवतः ‡ ॥ १४ ॥

---

* '०दिति'—इति क। '०दिति'—इति ग, घ।

† 'तिष्ठति'—इति क। ‡ 'भवतः'—इति ग, घ।

अथ बाहू उद्गृह्णाति। हिरण्यरूपा उषसो व्यिरोक उभाविन्द्रो उदिथः सूर्यश्च। आरोहतं व्वरुण मित्र गर्त्तं ततश्चाथा मदितिं दितिं चेति बाहू वै मित्रावरुणौ पुरुषो गर्त्तस्तस्मादाहारोहतं व्वरुण मित्र गर्त्तं मिति ततश्चाथा मदितिं दितिं चेति ततः पश्यतम् स्वं चारणं चेत्येवैतदाह * ॥ १५ ॥

मैत्रेणोद्गृह्णीयात्। मित्रोऽसि व्वरुणोऽसीत्येवोद्गृह्णीयाद् बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि व्वरुणोऽसीत्येवोद्गृह्णीयात् ॥ १६ ॥

तावदेन मूर्द्धबाहु मभिषिञ्चति। व्वीर्यं वा एतद्राजन्यस्य यद्बाहू वीर्यं वा एतदपाᳪ रसः सम्भृतो भवति येनैन मेतदभिषिञ्चति नेन्म इदं व्वीर्यं व्वीर्यं मपाᳪ रसः सम्भृतो बाहू विलनादिति तस्मादेन मूर्द्धबाहु मभिषिञ्चति ॥ १७ ॥३॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. १.] ॥

* 'भगदाह'—इति ग, घ।

"अथ यत् वैशयस्तोति *। एतद् वाक्यं परिस्तुत्मक्षयणे व्याख्यातम्। इन्द्रशूकाना मप्यन्तरालवर्त्तित्वं दर्शयति— "नैते क्रिमय इति। इन्द्रशूकाना मपि लोहितत्वात् लोहितायसेन भाव्य मित्यर्थः ॥ २ ॥

सूत्रम्— "सुन्वन्त माक्रमयन् दिशः प्राची मारोहेति पाच यति प्रतिमन्त्रं प्रतिदिशं यथालिङ्ग मावाम्य"–इति †। अध्वर्युः प्राच्यादिकाः पञ्च दिशो यजमान माक्रमयन् "प्राची मारोह" –इत्यादिकांस्तत्तद्दिक्प्रतिपादकान् मन्त्रान् वाचयेदित्यर्थः। तत्र दिगाक्रमणं विधत्ते— "पथैनं दिश इति। 'समारोहयति' आक्रमेत्। प्राचीदिगाक्रमणमन्त्रं विधत्ते— प्राची मारोहेति ‡। हे यजमान। 'प्राचीम् आरोह'। तथा स्थितं 'त्वा' त्वा छन्दसां मध्ये गायत्री 'अवतु', साम्नां मध्ये 'रथन्तर' साम रक्षतु, स्तोमानां मध्ये 'त्रिवृत्' त्र्यङ्गनवकात्मकः स्तोमः, ऋतूनां मध्ये वसन्ताख्य ऋतु, 'ब्रह्म' त्वदीयं 'द्रविण' धनं रक्षतु; ब्रह्मरूपं धनं वा भवत्विति। एव मुत्तरत्रापि।

"अभि त्वा शूर नोनुम."–इत्यस्या § मृचुत्पन्नं साम रथन्तर मित्युच्यते ||। "उपास्मै गायता नर."–इति सूत्रपदे

* इत उत्तरस्य ( ४ १ ३—४ ४ ५ ) ग्रन्थस्य भाष्यं क-ख-ग-पुस्तकेषु नास्ति, छ-पुस्तकमात्रे उपलभ्यते।

† का० श्रौ० सू० १५ ५ १३।

‡ वा० सं० १० १० २।

§ सा० छ० आ० ३ १ ५ १ ऋचि।

|| सा० गा० आ० २ १ २१ साम।

चायाभिस्तिसृभिर्मध्यमाभिरुत्तमाभिर्योऽष्टागानेन त्रिरावृत्तस्त्रि-वृत्स्तोमो भवति * ॥ ३ ॥

दक्षिणदिग्गाक्रमणं विधत्ते— "दक्षिणा मारोहेति †। पूर्ववद् योजनीयम्। "त्वा मिद्धि हवामहे"—इत्यस्या मृचि ‡ उत्पन्नं साम 'बृहत्' §। पञ्चदशस्तोमकरण मेवम्— पूर्वोक्त-त्रिवृत्स्तोमः खलु सूक्तत्रयाणिष्पाद्यः; अन्ये तु स्तोमा एकै-केन तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्र चायं क्रमः— "प्रथमं पर्यायं पञ्चभिर्ऋग्भिर्गायेत्। तद्यथा— प्रथमा मृचं त्रिर्गायेत्, इतरे द्वे सकृत् सकृत्; तृतीये तु उत्तमां त्रिर्गायेत्, आद्ये द्वे सकृत् सकृदिति ‖। 'क्षत्रम्' क्षत्रियः ॥ ४ ॥

प्रतीच्या मन्नं विधत्ते— "प्रतीची मारोहेति ¶। "यद्द्याव इन्द्र ते शतम्"—इत्यस्या मृचि ** उत्पन्नं साम 'वैरू-पम्' ††। सप्तदशस्तोमसम्पादन मेवम्— प्रथमपर्याये प्रथमा मृचं त्रिर्गायेत्, द्वितीयपर्याये मध्यमां त्रिः, तृतीयपर्याये मध्यमा मुत्तमाञ्च त्रिः, अन्याः सकृत्-सकृदिति ‡‡। वैश्यो जातिरित्यर्थः ॥ ५ ॥

---

* ता० ब्रा० १ २ १—३ ख०।
† वा० सं० १० ११. १।
‡ सा० छ० आ० ३ १ ५. २।
§ सा० गा० आ० १ १. २७।
‖ ता० ब्रा० १ २ ४—६।
¶ वा० सं० १० १२ १।
** सा० छ० आ० ३ २ ४ ६।
†† सा० आ० आ० १ १. ६।
‡‡ ता० ब्रा० १ २ ७—१३।

उदीच्या मर्स्थं विधत्ते— "उदीची मारोहेति *। "पिबा सोम मिन्द्र मन्दतु त्वा"–इत्यस्या मृचि † उत्पन्नं साम 'वैराजम्' ‡। एकविंशतिस्तोमनिष्पत्तिप्रकारस्त्वेवम्— प्रथमे पर्याये उत्तमां सकृद् गायेत्, द्वितीये पर्याये मध्यमां सकृद् गायेत्, तृतीये पर्याये सर्वास्तिस्रस्त्रिरित्येवं सति एकविंशः स्तोमो भवति § । ६ ॥

ऊर्ध्वायां मर्स्थं विधत्ते— "ऊर्ध्वा मारोहेति ‖। "प्रोष्वस्मै पुरोरथम्"–इत्यस्या मृचि ¶ उत्पन्नं साम 'शाक्वरम्' **, "रेवतीर्नः सधमादे"–इत्यस्या मृचि †† उत्पन्नं साम 'रैवतम्' ‡‡। त्रिणवस्तोमनिष्पत्ति प्रकारस्त्वेवम्— प्रथमे पर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्, उत्तमां सकृत्; द्वितीये पर्याये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां पञ्चकृत्वः; तृतीये पर्याये प्रथमां पञ्चकृत्वः, मध्यमां सकृत्, उत्तमां

---

* वा० सं० १०. १३. १।

† सा० छ० आ० ९ १. १. ८।

‡ सा० ग्रा० गे० १०. ३ ३१।

§ ता० ब्रा० १. २ १४–१०।

‖ वा० सं० १०. १४ १।

¶ सा० उ० आ० ६. १. १४ १।

** सा० आ० छ० ५. २ ६। भाष्यकारैस्त्वपौषिरिवैषा गण्यते, शाक्वरसामत्वात्। वस्तुतो महानाम्नीनामेव शाक्वर मिति प्रसिद्धो व्यवहारेषु, अस्ति च तत्र सामम् आर्षेयकं शाक्वरम्। तत्र ३ २९ द्रष्टव्यम्।

†† सा० छ० आ० ९ २ १ ८।

‡‡ सा० ग्रा० गा० २ १. २०।

त्रिर्गायेदिति। सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात् 'त्रिणव'-नामकः स्तोमो भवति * ॥ ॥ त्रयस्त्रिंशस्तोमनिष्पत्तिप्रकार उच्यते— प्रथमपर्याये प्रथमां त्रिः सत्वः, मध्यमां सप्तकृत्वः, उत्तमां सकृत्; द्वितीये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां सप्तकृत्वः; तृतीयपर्याये प्रथमां सप्तकृत्वः, मध्यमां सकृत्, उत्तमां त्रिः। सोऽयं त्रयस्त्रिंशस्तोमो नाम † ॥

त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या धनरक्षकत्वेन धनरूपत्वेन वा कथिताः; चतुर्थे उदुम्बरादिफलस्य तद्रूपत्वम्, पञ्चमे 'वर्चः' प्रख्यातमुत्क्रान्तस्य तेजसो रक्षकत्वं तद्रूपत्वं चोक्तम् ॥ ७ ॥

दिशां समारोहणं सत्रस्य संवत्सरारोहात्मना प्रशंसति— "तद्यदेन मिति। यदात्मा दिशां समारोहणम् ऋतुरूपत्वम्। ऋतूना मपि "हेमन्तशिशिरयोः समासेन" ‡ पञ्चसङ्ख्यात्मकत्वात् संवत्सरारोहणेन यजमानं 'सर्वं मिदं' जगत् 'उपर्युपरि भवति' सर्वस्योपरि वर्त्तमानो भवति; कालस्य सर्वेषां परिभावात्। 'अस्मात्' सुन्वतः सकाशात् 'इदं सर्वम्' 'अर्वाक्' अर्वाचीनम् अधस्तात् 'भवति' इति ॥ ८ ॥

पूर्वं मैत्रावरुणधिष्ण्यस्य पुरस्तादभिहिताया अभिषेचनीयपात्राया मध्ये व्याघ्रस्य शार्दूलचर्मणोऽपरेऽन्ते निहितस्य सीसस्य घ्नान मिदानीं विधत्ते— "शार्दूलेति। 'शार्दूलचर्मण.' 'जघ-

---

* ता० ब्रा० २ ५ १ ३।

† ता० ब्रा० २ ६ ३—७।

‡ ऐ० ब्रा० १. १ १।

नार्हे' अपरभागे 'सीसं निहितं भवति'। निहित मिति 'निष्ठा प्रयोगेण पूर्वं बर्हिरास्तरणसमये एव सीसनिधानं सम्पन्न' मिति मन्तव्यम्। तथैव कात्यायनः— "मध्यतीयाज्ये पादाधि पूर्वेण व्याघ्रचर्मास्तृणाति सीसमस्य त्विषिरिति, अपरेऽन्ते सीसं निदधाति"—इति *। अत्र तु "पादेन सीसं निरस्यति"— इत्येतावदेवासूत्रयत् †। 'तत्' सीसं 'पदा' पादेन "प्रत्यस्तम्"— इतिमन्त्रेण ‡ निरस्येत्। 'नमुचेः' असुरस्य 'शिरः' 'प्रत्यस्तं' निरस्त मिति तदर्थः ॥

नमुचिशिरसः सीसेन निरास आख्यायिकयोपपादयति— "नमुचिर्ह वा इति। पूर्वं किलेन्द्रो नमुचिनाम्नोऽसुरस्य 'शिरः' स्वेन 'पादेन' 'अभितष्ठौ' आक्रान्तवान्। 'सः' आक्रान्तः 'उदबाधत'। 'उष्कूदः' उद्गतः मद्गुः। मद्गुर्नाम प्राणिविशेषः, मद्गुर्नीमत्योर्ष्वीति छान्द्यपान्नातम् §। 'तस्य' शिरः 'पदा' सव्येन पादेन 'अभिचिच्छेद' छिन्नवान्, 'ततः' छिन्नशिराः 'रक्षः' राक्षसः 'समभवत्', 'तत्' रक्षः 'एनं' घातक मिन्द्रम् 'अनुभाषते' वदति, हे इन्द्र। 'क्व गमिष्यसि ?', 'मे' मत्तः सकाशात् क्व 'मोक्ष्यसे' मुक्तो भविष्यसि ? 'इति' वदति ॥ ८ ॥

"तत्सीसेनेति। 'तत्' रक्षः, एतद्रूपं राक्षसं 'सीसेन अपाघ्नन्'। 'तस्मात्' 'सीसं' 'मृदु' जातम्। 'हि' यस्मात् 'हतवर्यं' गतवीर्यम्। अर्थ मुपपादयति— "अयैव हीति।

---

* का० श्रौ० सू० १५. ५ १, २।

† का० श्रौ० सू० १५. ५. २४।

‡ वा० सं० १०. १४ १।

§ मद्गुरिति ग्रामशैल भद्गी रूपम् ( आ० धा० ८४ पां० )।

तस्माद् गतसार मेतत् सीसं 'हिरण्यरूपं' रजतरूपं 'सत्' अपि 'किञ्चन' किमपि मूल्यं 'नार्हति' न लभते। रजतस्यापि हिरण्यशब्दव्यवहारोऽस्ति; "यदश्रवशीयत तद्रजतं हिरण्य मभवत्"-इति * तैत्तिरीयश्रुतेः। अतः पूर्वं रक्षसः सीसेन हतत्वादिदानीं अपि सीसप्रासनेन रक्षांसि हतानि भवन्तीत्यर्थः ॥ १० ॥

विधत्ते— "पदेन मिति †। 'आरोहयति' आक्रामयति। "सोमस्य त्विषिरित्यादि पूर्वं व्याख्यातम् ‡ ॥ ११ ॥

विधत्ते— "अथ रुक्म मिति। 'रुक्मं' हिरण्यम् § 'अधस्तात्' अधःप्रदेशे 'उपास्यति' निदधाति। अत्र सूत्रम्— "रुक्म मधःपदे कुरुते मृत्योरिति"-इति ‖। हे रुक्म! 'मृत्योः' सकाशात् 'पाहि' पालय; इत्ययं मन्त्रलिङ्गम् ¶। रुक्मस्य मृत्युपरिहारकत्व मुपपादयति— "अमृत मिति। हिरण्य ममृत मायुः; हिरण्यदानेन अपमृत्योः परिहर्त्तुं शक्यत्वात् आयुर्हेतुत्वम्। तस्मात् असौ यजमानः पादस्याधःप्रदेशे रुक्मनिधानेन आयुषि एव प्रतिष्ठितवान् भवतीत्यर्थः ॥ १२ ॥

शिरसि निधीयमानस्य रुक्मस्य कञ्चिद् गुणं विधत्ते— "अथ रुक्म मिति **। 'शतवितृण्णः' शतच्छिद्रः, 'नववितृण्णः'

---

* तै० सं० १ ५ १ २।

† का० श्रौ० सू० १५ ५ २५।

‡ २३८ पृ० १७ पं द्रष्टव्यम्।

§ 'रुक्मः स्वाभरणविशेषः'—इतीह कर्काचार्यः। तत्र परिमण्डलं भामेत्युपदेश इतीह वृत्तिः।

‖ का० श्रौ० सू० १५. ५. २६।

¶ वा० सं० १० १५ २।

** का० श्रौ० सू० १५ ५. २७।

नवच्छिद्रः 'वा' भवेत्। तदुभयं क्रमेणायुःप्राणात्मना प्रशं-सति— "स यदि वर्तेति। आयुरनुसारेण 'तेजोवीर्ययोरपि' गतसङ्ख्याकत्वं द्रष्टव्यम् ॥ १३ ॥

तस्य शिरसि निधानं विधत्ते— "तं मुपरिष्टादिति। 'वीर्यः' इति षष्ठी। 'ओजः'-इति मनोबलम्। 'सहः'-इति बाह्येन्द्रियबलम्। 'अमृतम्'-इति प्राणबलम्; "प्राणो वा अमृतम्"-इतिश्रुतेः। हे रुक्म ! तत् त्रितयरूपोऽसीति मन्त्रार्थः *।

अधस्तादुपरिष्टाच्च रुक्मनिधानम् आयुःसहितरूपेण प्रशं-सति— "तदुभयत इति। रुक्मशब्दात् प्रथमा द्विवचनस्याकारादेशे कृते "लोपः शाकल्यस्य"-इति † यकारलोपः। उभयतो रुक्मनिधानेन 'एनं' यजमानम् अमृतरूपेण 'आयुषा' 'उभयतः' 'परिगृह्णाति' संवर्द्धितवान् भवति ॥ १४ ॥

विधत्ते— "अथ बाहू इति। 'उद्गृह्णाति' यजमानः बाहू प्रसारितौ कुर्यात्। अत्र "मित्रोऽसि वरुणोऽसि"-इत्ययमेव मन्त्रो बाहुद्वये विधास्यते। तत्र पूर्वपक्षत्वेन मन्त्रं पठति— "हिरण्यरूपाविति। अतएव कात्यायनो विकल्पेन सूत्रयामास— "बाहू उद्गृह्णाति हिरण्यरूपा इति, मित्रोऽसि वरुणोऽसीति वा"-इति ‡। हिरण्येतिमन्त्रस्य § अथ मांध्यान्दिनोऽर्थः। हे वरुण ! हे मित्र ! बाहुद्वयस्य पृथक्सम्बुद्धिः।

* वा० सं० १०. १५. ३।

† पा० सू० ८. ३. १९।

‡ का० श्रौ० सू० १५. ५. २८, २९।

§ वा० सं० १०. १६. १, २।

'हिरण्यरूपौ' हितरमणीयरूपौ, हिरण्यस्वरूपौ वा सालङ्कारत्वात्। 'इन्द्रौ' परमैश्वर्यसम्पन्नौ उभौ युवाम् 'उषसः' 'विरोके' विरोचने 'उदिथ', 'सूर्यः' 'उद्गम'। एतेलंटि मध्यमद्विवचने रूपम्। हे मित्रावरुणौ। बाहुरूपौ 'गर्त्तं' पुरुषम् 'आरोहतम्' पुरुषस्योपरि भवत मित्यर्थः। 'ततः' अनन्तरम् 'अदितिम्' अखण्डनीयाम्, पृथिवीरूपा स्वीया प्रजां 'चक्षीथाम्' पश्येताम्। 'दितिं' खण्डनीयाम्, परां सेनाञ्च। तस्य तद् बाहुद्वय मेव स्वबलं रक्षति, परबलं हन्ति, अत एव मुच्यत इत्यध्यात्मविषयोऽर्थः।

आधिदैविके त्वयं विशेषः— 'गर्त्तः' रथः; हे 'मित्रावरुणौ' देवौ। रथम् 'आरोहतम्'। 'ततः' रथारोहणानन्तरम् 'अदिति' अदीनं समर्थं विहितस्य कर्मणः कर्त्तारं पुरुषं प्रपश्यताम्, 'दितिं' दीनं विवेकरहित मननुष्ठातारं च पश्यत मिति। त मिमं मन्त्रं बाहुद्वयपरत्वेन व्याचष्टे— "बाहू वै मित्रेति। अन्तिमपादस्यार्थ माह— "ततः पश्यत मिति। 'स्वं' स्वीयम् 'अरणम्' अरमणीयम्, परं च पश्यति। 'अदिति'-शब्दस्य स्वोऽर्थः, 'दिति'-शब्दस्य परोऽर्थः इति विभागः ॥ १५ ॥

एतेन मन्त्रेणोद्ग्रहणं रूपयति— "अनेनेति। स्वमत माह — "मित्रोऽसीति। एवकारोऽन्यमन्त्रनिवृत्त्यर्थः। मन्त्रस्तु पूर्वं व्याख्यातः *। त मिमं मन्त्रं प्रशंसति— "बाहू वै मित्रेति ॥ १६ ॥

एव मूर्द्धबाहुत्वेनैव स्थितस्य यजमानस्याभिषेको विधास्यते, त मिमं पुन प्रशंसति— "तस्मादेन मिति। एवकारो

* इतः पूर्वं मेव द्रष्टव्यम् (२६८ पृ० )।

भिन्नक्रमम् , ऊर्ध्वबाहु मेवेति योजना। राजन्यस्य बाहू एव वीर्यं। अभिषेचनीयपात्रेषु व्यासिक्तानामपां रसोऽपि वीर्यम्; वीर्योत्पादकत्वात्। अतः तेन रसेनाभिषेके ऊर्ध्वबाहुत्व मेव युक्त मित्यर्थः। तत्र कारण माह— "नेत्" इति। 'मे' मम 'इदं वीर्यं' वीर्यरूपौ 'बाहू', कर्मवीर्यरूपः 'अपां रसः', 'नेत् भिनदत्' न वर्जयेत् 'इति' अतो हेतो 'ऊर्ध्वबाहुम्' एव अभिषिञ्चेदित्यर्थः ॥ १० ॥ २ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

तं वै प्राञ्चं तिष्ठन्त मभिषिञ्चति। पुरस्ताद् ब्राह्मणो ऽभिषिञ्चत्यध्वर्युर्वा यो वास्य पुरोहितो भवति पश्चादितरे ॥ १ ॥

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति। वीर्यमेतदाहाग्नेर्भ्राजसेति वीर्यमेवैतदाह सूर्यस्य वर्चसेति वीर्यमेवैतदाहेन्द्रस्येन्द्रियेणेति वीर्य-

यैवैतदाह यचार्षां यचपतिरेधीति राजा अधिराज एधीत्येवैतदाहातिदिद्यून् पाहीतीपवो वै दिद्यव इषुवध* मेवैम सेतदतिनयति तस्मादाहाति-दिद्यून् पाहीति ॥ २ ॥

इमं देवाः । असपत्नए सुवद्ध मितीमं देवा अभ्रातृव्यए सुवद्ध मित्येवैतदाह महते चचाय महते ज्यैष्ठ्यायेति नात्र तिरोहित मिवास्ति महते जानराज्यायेति महते जनानाए राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीम ममुष्य पुत्र ममुष्यै पुत्र मिति तद्यदेवास्य जन्म तत एवैतदाहास्यै व्विश ऽइति यस्यै व्विशो राजा भवत्येष वो ऽमी राजा सोमो ऽस्माकं ब्राह्मणानाए राजेति तदस्मा ऽइदए सर्व्वमाद्यं करोति ब्राह्मण मेवापोद्धरति तस्माद् ब्राह्मणो नाद्यः सोमराजा हि भवति † ॥ ३ ॥

अथैत मभिषेकम् । कृष्णविषाणयानुविसृष्टे व्वीर्य्यं वा ऽएतदपाए रसः सम्भृतो भवति येनैन

* इषुवध'—इति ग, घ।

†'भवति'—इति क।

मेतदभिविष्ठतीदं मे व्वीर्यं सर्व्वं मात्मान मुप-स्पृशादिति तस्मात्ता ऽअनुविसृष्टे * ॥ ४ ॥

सोऽनुविसृष्टे । प्र पर्व्वतस्य वृषभस्य पृष्ठा-दिति यथायं पर्व्वतो ऽतिष्ठावा यथऽर्षभः पशून-तिष्ठावैवं त्वा ऽएष इदए सर्व्वं मतितिष्ठत्य-र्व्वागेवास्मादिदए सर्व्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्व्वतस्य वृषभस्य पृष्ठान्ना-वश्चरन्ति स्वसिच इयानाः † । ता आववृत्रन्नधरा-गुदक्ता अहिं बुध्न्य मनु रीयमाणा इति ‡ ॥ ५ ॥

अथैनं मन्त्रैव शार्दूलचर्मणि व्विष्णुक्रमान् क्रमयति । व्विष्णोर्व्विक्रमण मसि व्विष्णोर्व्विक्रान्त मसि व्विष्णोः क्रान्त मसीतीमे वै लोका व्विष्णो-र्व्विक्रमणं व्विष्णोर्व्विक्रान्तं व्विष्णोः क्रान्तं तदि-मानेव लोकान्त्समारुह्य सर्व्वं मेवेद मुपर्युपरि भवत्यर्व्वागेवास्मादिदए सर्व्वं भवति ॥ ६ ॥

---

* 'व्विसृष्टे'—इति ग, घ ।

† 'इयाणा'—इति ग, घ ।

‡ 'इति'—इति ग । 'इति'—इति ग, घ

अथ ब्राह्मणस्य पात्रे। सऽएनमाशसमवनयति तेद् ब्राह्मणऽ राजानमनु यशः करोति तस्माद् ब्राह्मणो राजानमनु यशः ॥ ७ ॥

तद्योऽस्य पुत्रः प्रियतमो भवति। तस्मा ऽएतत् पात्रं प्रयच्छतीदम् मेऽयं वीर्य्यं पुत्रो ऽनुसन्तनवदिति * ॥ ८ ॥

अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति। प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत् कामास्ते जुहुमस्तन्नो ऽस्त्वय ममुष्य पितेति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्व्वीर्य्यं व्यतिषजत्यसावस्य पितेति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्व्वीर्य्यं व्यतिषज्य पुनरेव यथायथं करोति वयम् स्याम पतयो रयीणाम् स्वाहेत्याशीरेवैतस्य कर्म्मण आशिष मेवैतदाशास्ते † ॥ ९ ॥

---

* ०दिति—इति क। ०दिति—इति ग, घ।

† ०शास्ते—इति ग घ।

अथ य एष सꣳस्रवो ऽतिरिक्तो भवति। स आग्नीध्रीये जुहोत्यतिरिक्तो वा ऽएष सꣳस्रवो भवत्यतिरिक्त आग्नीध्रीयो गार्हपत्ये ह्वीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषो ऽतिरिक्तस्तदतिरिक्त ऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येष ह्येतस्य देवस्य दिक् तस्मादुत्तरार्द्धे जुहोति स जुहोति रुद्र यत्ते क्रिवि परं नाम तस्मिन् हुत मस्यमेष्ट मसि स्वाहेति ॥ १० ॥ ४ ॥

॥ इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् [४. ३.] ॥

अथ द्वितीयब्राह्मणेऽभिषेक उच्यते। तत्र कात्यायनः— "स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात् पालाशेन प्रथमम्, पश्चादितरे द्वितीयेन, स्वस्तृतीयेन, मित्रो राजन्यो वैश्यश्चतुर्थेन, सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम्, अभिषिञ्चामीति सर्वत्र आकाङ्क्षत्वात्, क्षत्राणां क्षत्रपतिरेधीति शेषेण प्रमुच्य"—इति *। ऊर्ध्वबाहुत्वेन स्थितं प्राङ्मुखं यजमानं पुरोहिताध्वर्य्वोरन्यतरो ब्राह्मणः सम्मुखः पुरो देशे स्थित्वा पालाशेन पात्रेणाभिषिञ्चेत्। इतरे स्वादयस्त्रयोऽभिषिच्यमानस्य

* का॰ श्रौ॰ सू॰ [illegible] ५. १०—१३।

पश्चाद् भागे स्थित्वा स्वस्वपात्रेणाभिषिञ्चेयुः। तत्र "सोमस्य" -इत्यादयश्चत्वारो मन्त्राश्चतुर्णाम्। तत्राभिषिञ्चामीति प्रथम-मन्त्रगतस्य पदस्योत्तरेषु त्रिष्वनुषङ्गः; साकाङ्क्षत्वान्मन्त्राणाम्। "क्षत्राणां क्षत्रपतिरेधि"-इति च सर्वत्रानुषज्यते, "इमं देवा असपत्नम्"-इत्येष मन्त्रः। तत्र 'इमम्'-'अमुष्य'-इतिस्थाने यष्टुस्तत्पितुश्च नाम गृह्णीयादिति सूत्रार्थः॥

तमिमं क्रमेण विधत्ते— "तं वै प्राञ्चमिति। तच्छब्दः प्रकृतवाची, उक्तेषाह मित्यर्थः। 'प्राञ्चं' प्राङ्मुखं 'तिष्ठन्तम्' अभिषिञ्चेत्; 'पुरस्ताद्' अभिषिच्यमानस्य पुरो देशे 'ब्राह्मणः' अभिषिञ्चेत्, 'इतरे' त्रयः 'पश्चात्' पृष्ठतः पश्चिमभागे स्थित्वा अभिषिञ्चेयुः॥ १॥

तत्र मन्त्रान् पाठार्थं विधत्ते— "सोमस्येति। हे यजमान! 'त्वा' त्वां 'सोमस्य' 'द्युम्नेन' द्योतनशीलया दीप्त्या अभिषिञ्चामीत्येको मन्त्रः *। "अग्नेर्भ्राजसा"-इत्यपरः †, अभिषिञ्चामीत्यनुषज्यते; वाक्यस्य साकाङ्क्षत्वात्। "सूर्यस्य वर्चसा"-इति तृतीयः ‡। 'वर्चसा' रोचिषा। "इन्द्रस्य इन्द्रियेण वीर्येण"-इति चतुर्थः §। सर्वशेषं मन्त्रभागद्वय मर्थ-पुरस्सर माह— "क्षत्राणा मिति। 'क्षत्राणां' महतां अधि-पानां राज्ञां वा 'क्षत्रपति' क्षत्रियस्य पतिः 'अधि' भव ||

---

* आ० श्रौ० १० १० १।
† आ० श्रौ० १० १० २।
‡ आ० श्रौ० १० १० ३।
§ आ० श्रौ० १० १० ४।
¶ आ० श्रौ० १० १० ५।

सुभ्राः, तम्। शिरःप्रभृति पादपर्यन्तम् 'अनु' अनुक्रमेण 'रीयमाणाः' लेपरूपेण स्रवन्त्यः, 'आवहन्' यजमानशरीरं समन्तादाहृत्य स्थिताः, तिष्ठन्तीति *। इत्याध्यात्मिकोऽर्थः।

आधिदैविकम्तु— 'पर्वतः' आदित्यः, 'वृषभस्य पृष्ठात्' 'इयाना.' निर्गच्छन्त्यः, 'नाव' नाव्या आपः 'चरन्ति'। तथा च श्रुतिः— "नाव्या ह एव यज्ञमत्य इष्टका इत्युपक्रम्य, "अहिंच वै ब्रीर्चि च मासान्यादित्यं नाव्या अभिचरन्ति"–इति †। 'ताः' प्रावृट्काले 'आवहन्' आवर्तन्ते; 'अधराग्' आदित्यमण्डलाद् भूमिं प्रति अधोगमनशीलाः, 'उदक्' 'ताः' पूर्वं भूमेः सकाशात् आदित्यमण्डलं प्रति 'उदक्' ऊर्ध्वगमनशीलाः 'अहिं' मेघम् 'बुध्नं' अन्तरिक्षम्, तत्र भवम्, 'बुध्न्यम्' मध्यमस्थानम्, 'अनुरीयमाणाः' अनुप्रविश्य तस्माद्विनिर्गच्छन्त्यः, भूमिं प्राप्नुवन्तीति शेषः ‡॥

सम्प्रति प्रथमपादस्य तात्पर्यं माह— "यथायं पर्वत इति। 'यथा पर्वत.' 'अतिष्ठावा' सर्वं मतिक्रम्य स्थाता। तिष्ठतेः "आतो मनिन्"–इति § वनिप्। 'यथा ऋषभ.' पशूनतिक्रम्य तिष्ठति, एव मेष राजा तिष्ठति, सर्वस्योपरि भवति। 'पश्चाद्' यजमानात् 'इदं सर्वम् अर्वाक्' भवति; 'तस्मात्' मपर्वतस्येति पाठप्रशस्त इत्यर्थः॥ ५॥

विधत्ते— "अथैनं मिति ‖। शार्दूलचर्ममध्ये एव यजमानं

* का० सं० १० १८. १।

† दृष्टेवोपरिष्टात् का० १० अ० ५ ब्रा० ४ क० १४।

‡ का० श्रौ० सू० २४ ६।

§ पा० सू० ३ २ ७४।

‖ का० श्रौ० सू० १५ ६ ८।

त्रीन् विष्णुक्रमान् क्रमयेदध्वर्युः। तत्र मन्त्रत्रयं विधत्ते— "विष्णोरिति *। एकैकस्य क्रमणस्यैकैको मन्त्र इत्यर्थः। 'विष्णोः' यज्ञस्य यत्र 'विक्रमणं', यत्र 'विक्रान्तं', यत्र 'क्रान्तम्', तत् इदं त्वमसीति योजनीया। क्रमणत्रयं लोकत्रयात्मना प्रशंसति। "इमे वै लोका इति ॥ ६ ॥

अथ स्वमिन्नवैश्यपात्रक्षत्रियपात्रां पालाशपात्रे व्यासेचनं विधत्ते— "अथ ब्राह्मणस्येति। "तद् ब्राह्मण मिति। 'तत्' तेन व्यवनयनेन 'राजानम्' 'अनु' पश्चाद् 'ब्राह्मणं' 'यशः' यशस्विनं कृतवान् भवति। लोके हि राजा कीर्त्तिमान्, ब्राह्मणोऽपि तदनन्तरं कीर्त्तिमानित्युच्यते ॥ ७ ॥

विधत्ते— "तद् योऽस्येति †। 'एतत्' संस्रवैः साधितं ब्राह्मणस्य पालाशपात्रं राजा प्रियतमाय पुत्राय प्रयच्छेत्। प्रदाने ब्राह्मणोऽयं मन्त्र माह— "इदं म इति। अत एव कात्यायनो मन्त्रं पपाठ— "पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोतु"—इति ‡। 'अयं' मे पुत्रः, 'मे' मम 'वीर्यं' वीर्यरूपं कर्म 'अनुसन्तनवत्' अनुसन्तनोतु, विस्तारयत्विति ॥ ८ ॥

विधत्ते— "अथ पत्नीति। गार्हपत्यं 'पत्निपरीत्य' प्रत्यङ्मुखो गत्वा 'अन्वारब्धे'। प्रकृतत्वात् पुत्र इति गम्यते। अत्र सूत्रम् §— "शम्यादार्थे जुहोति पुत्रोऽन्वारब्धे प्रजापत इति"—

---

* वा० सं० १० १८. २. ३, ४।
† का० श्रौ० सू० १५ ६ १० क।
‡ का० श्रौ० सू० १५ ६ १० ख।
§ का० श्रौ० सू० १५ ६. ११।

इति । मन्त्रस्यार्थः— हे 'प्रजापते' ! 'त्वदन्यः' कोऽपि पुरुषः उत्पन्नानि तानि 'एतानि' विश्वानि 'न परिबभूव' परिभवितुं व्याप्तुं समर्थो ऽभूत् । परिपूर्वो भवतिर्व्याप्त्यर्थे वर्त्तते । अनस्त्वेन वयं 'यत्कामा जुहुमः', 'तत्' फलं अस्माकम् 'अस्तु' । वयं धनानां 'पतयः' स्वामिनः 'स्याम' इति * । अत्र तृतीयपादान्ते 'अयम् अमुष्य पिता', 'असौ अस्य पिता' 'इति' मन्त्रभाग आम्नातः । 'अयं' पुत्रः अभिमन्युः, 'अमुष्य' अर्जुनस्य 'पिता' 'इति' पूर्वं पितृशब्दं पुत्रे कृत्वा ब्रूयात्, पश्चात् 'असौ पिता' अर्जुनः 'अस्य' पुत्रस्याभिमन्योः 'पिता'—इति 'यथार्थं' ब्रूयादित्यर्थः । अत एव कात्यायनः— "प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथार्थं पश्चात्"—इति । तं मिमं पादमय- पुरस्सरं पठति— "प्रजापत इति † । तस्याय अमुष्य पितेत्य- स्यार्थं माह— "तद्यः पुत्र इति । पुत्रं पितरं पुत्रं कृत्वा पठेदित्यर्थः । तदेतेन पुत्रस्य पितृकरणेन च एतयोः पिता- पुत्रयोः वीर्यं 'व्यतिषजति' परस्परं संसृष्टं कृतवान् भवति । असावस्य पितेत्यस्यार्थं माह— "तद्यः पितेति । अत्र पितुरेव पितृत्वम्, पुत्रस्यैव पुत्रत्वम् । अनेनैतयोर्वीर्यं पूर्वं व्यतिषज्य पश्चाद् यथा पुत्रस्य वीर्यं पुत्र एव, पितुर्वीर्यं पितर्येव कृतवान् भवतीत्यर्थः । अन्तिमपादस्याशीःपरत्वं दर्शयति— "आशी- रेवैषेति ॥ ८ ॥

---

* वा० सं० १०, २० १ ।

† संहितापाठस्त्वेवम्—"प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पिता ऽसावस्य पिता वयं स्याम पतयो रयीणां स्वाहा"—इति ।

प्रान्तःशयानशेषस्य आग्नीध्रीये स्रुचा हवनं विधत्ते— "अथ य एष सस्रव इति *। अतिरिक्तस्य शेषस्य आग्नीध्रीये हवनस्योपपत्तिं दर्शयति— "अतिरिक्तं इति। तदेवोपपादयति— "गार्हपत्ये हवींषीति। गार्हपत्ये सर्वेषां हविषां श्रपणम्, आहवनीये तेषां होमः, अतः श्रपणहवनयोरनुपयुक्तत्वादाग्नीध्रीयोऽतिरिक्त इत्यर्थः। प्रदेशविशेषं विधत्ते— "उत्तरार्द्ध इति। अस्य रुद्रसम्बन्धं दर्शयति— 'एष हीति। 'एतस्य देवस्य' रुद्रस्येत्यर्थः। होममन्त्रं मन्त्रं विधत्ते— "स जुहोतीति †। हे 'रुद्र!' रुत् सांसारिकं दुःखं द्रावयतीति, तस्य सम्बुद्धिः। 'ते' तव 'परम्' उत्कृष्टं 'यत् नाम' "नमः शिवाय"—'पशुपतये"—इत्यादि श्रुतिप्रसिद्धम् ‡, 'शिवि' "शिवि विशाकर पयो" §, विरोधिनो हिंसक असि, 'तस्मिन्' नाम्नि 'हुतं असि' अभिषेकोपभूतमुख्यपात्रस्थजलं त्वं हुतं भवेति वाक्य सम्बुध्यार्थीवेय। 'अमेष्ट असीति। 'अमा' शब्दोऽत्र गृहवचनः। मदीये गृहे त्वम् इष्टं भव। 'स्वाहा' सुहुतं अस्त्विति ॥ १० ॥ ४ [ ४ २ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १५ ५ १२।
† वा० सं० १० २० २।
‡ मा० सं० १६ ४१ ४० तै० सं० ४ ५ ८ ११ १
§ स्वा० प० ५६८ पा० (ऋषि)।
|| तै० सं० १ ८ १४ १—१२ तै० ब्रा० १ ७ ८ द्रष्टव्यम्।

( अथ तृतीयं ब्राह्मणम् . )

तद् योऽस्य स्वो भवति। तस्य शतं वा परःशता वा गा उत्तरेणाहवनीयं स्थापयति तद्यदेवं करोति ॥ १ ॥

त्वष्टाद् वा ऽभिषिषिचानात्। इन्द्रियं वीर्यं मपचक्राम शश्वद्ध पयोऽपारं रसः सम्भृतो भवति॰ येनैन मेतदभिषिञ्चति सो ऽस्येन्द्रियं वीर्यं निर्णघान तत् पशुष्वन्वविन्दंस्तस्मात् पशवो यशो यदेष्वन्वविन्दंस्तत् पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथो ऽएवैष एतस्माद्देवास्मान्निन्द्रियं वीर्यं मपक्रामति त्वष्टासवो वा ऽएष यद्राजसूय मिति त्वष्टा ऽकरोदिति त्वेवैष एतत् करोति † ॥ २ ॥

अथ रथ मुपावहरति। यद्वै राजन्यात् पराग् भवति रथेन वै तदनुयुङ्क्ते तस्माद्रथ मुपावहरति ॥ ३ ॥

पत्न्याशयपात्रशेषस्य चाग्नीध्रीये ऋचा हवनं विधत्ते— "अथ य एष संस्रव इति *। अतिरिक्तस्य शेषस्य चाग्नीध्रीये हवनस्योपपत्तिं दर्शयति— "अतिरिक्त इति। तदेवोपपादयति— "गार्हपत्ये हवींषि श्रपयन्तीति। गार्हपत्ये सर्वेषां हविषां श्रपणम्, आहवनीये तेषां होमः; अतः श्रपणहवनयोरनुपयुक्तत्वादाग्नीध्रीयोऽतिरिक्त इत्यर्थः। प्रदेशविशेषं विधत्ते— "उत्तरार्द्ध इति। अस्य रुद्रसम्बन्धं दर्शयति— "एष वीति। 'एतस्य देवस्य' रुद्रस्येत्यर्थः। होममन्त्रं विधत्ते— "स जुहोतीति †। हे 'रुद्र!' रुत् सांसारिकं दुःखं द्रावयतीति, तस्य सम्बुद्धिः। 'ते' तव 'परम्' उत्कृष्टं 'यत् नाम' "नमः शिवाय"—"पशुपतये"—इत्यादि श्रुतिप्रसिद्धम् ‡, 'क्रिवि' "क्रिवि हिंसाकरणयोः" §, विरोधिनो हिंसक असि, 'तस्मिन्' नाम्नि 'हुतमसि' अभिषेकार्थभूतमुपयामस्थमाज्यं त्वं हुतं भवेति वेदं सम्बुध्याधीनेषः। "अमेह सदसीति। 'अमा'-शब्दोऽत्र गृहवचनः। मदीये गृहे त्वम् हृष्टं भव। 'स्वाहा' सुहुतमस्त्विति ॥ १० ॥ ४ [४. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १५. ५. १२।

† वा० सं० १० २०. २।

‡ वा० सं० १६ ४१, ४०, तै० सं० ४ ५ ८ ११, १।

§ धा० पा० ५६८ धा० (क्रिवि)।

‖ तै० सं० १. ८ १४ १—१२, तै० ब्रा० १. ७ ८. द्रष्टव्यम्।

ऽएष इन्द्रो भवति यत्क्षत्रियो यदु च यजमानस्तस्मादाहाशस्तिरर्जुन इति * ॥ ७ ॥

अथ दक्षिणायुग्यमुपावर्तयति। मरुतां प्रसवेन जयेति विशो वै मरुतो विशा वै तत् क्षत्रियो जयति यज्जिगीषति तस्मादाह मरुतां प्रसवेन जयेति † ॥ ८ ॥

अथ मध्ये गवामुद्यच्छति। आपाम मनसेति मनसा वा ऽइदं सर्व्वं माप्तं तन्मनसैवैतत् सर्व्वं माप्नोति तस्मादाहापाम मनसेति ‡ ॥ ९ ॥

अथ धनुरार्त्न्या गामुपस्पृशति। समिन्द्रियेणेतीन्द्रियं वै व्वीर्यं गाव इन्द्रियमेवैतद्वीर्यमात्मन् धत्ते ऽथाह जिनामीमाः कुर्व्वं ऽइमा इति § ॥ १० ॥

तदात्तं स्वस्य गोपूद्यच्छति। यद्वै पुरुषात् पराग् भवति यशो वा किञ्चिद्वा स्वं हैवास्य तत्

* इति—इति क। इति—इति ग, घ।

† जयेति—इति क। जयेति—इति ग घ।

‡ मनसेति—इति क। मनसेति इति ग घ।

§ इति इति क। इति—इति ग घ।

प्रतमा सिवाम्यपक्रामति तत् । स्वादेवैतदिन्द्रियं व्वीर्यं पुनरात्मन्धत्ते तस्मात् स्वस्य गोपूयाच्छति ॥ ११ ॥

तस्मै तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति । न वा ऽएष क्रूरकर्म्मणे भवति यद्यजमानः क्रूरमिव वा ऽएतत् करोति यद्राह जिनामीमाः शुल्वं ऽइमा इति तथो हास्यैतदक्रूरं कृतं भवति तस्मात्तावन्मात्रीर्व्वा भूयसीर्वा प्रतिददाति * ॥ १२ ॥

अथ दधिवानायच्छति । सो ऽयेष यूयं दक्षिणेन स्विदिं येनैव दधिया यन्ति तेन प्रतिपद्यते तं जघनेन सदो ऽयेव शाला मुपाच्छति ॥ १३ ॥

मा न † इन्द्र तै व्वयं तुराषाट् । अयुक्तासो ऽअब्रह्मता व्विदसाम । तिष्ठा रथ मधि यं व्वज्रहस्ता रश्मीन् देव यमसी स्वश्वानित्युदाच्छत्येवैतयाभीशवो वै रश्मयस्तस्मादाह रश्मीन्

* ददाति'—इति क ।
† ■—इति क, ख ।

देव यजते स यान्यत्र रथविमोचनीयानि जुहोति प्रीतो रथो विमुच्याता ऽइति तस्माद्रथविमोचनीयानि जुहोति ॥ १४ ॥

स जुहोति । अग्नये गृहपतये स्वाहेति स यदेवाग्नेयम् रथस्य तदेवैतेन प्रीणाति व्यष्टा वा ऽआ-ग्नेया रथस्य व्यष्टानेवैतेन प्रीणाति श्रीर्वै गार्हपतं यावतो यावत ईष्टे तच्छ्रिय मेवास्यैतद्गार्हपतम् राज्य मभिविमुच्यते * ॥ १५ ॥

सोमाय वनस्पतये स्वाहेति द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव वानस्पत्यम् रथस्य तदेवैतेन प्रीणाति दारुणा वै वानस्पत्यानि रथस्य दारुण्ये-वैतेन प्रीणाति क्षत्रं वै सोमः क्षत्र मेवास्यै तद्राज्य मभिविमुच्यते † ॥ १६ ॥

मरुता मोजसे स्वाहेति । स यदेव मारुतम् रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्टसारथी ते सप्त सप्त सप्त वै

* १ । ०विमुच्यत—इति ग । घ

मारुतीं गणाः सर्व्व मेवैतेन रथं प्रीणाति विशो वै मरुतो विशमेवास्यैतद्राज्यमभिविमुच्यते † ॥ १७ ॥

इन्द्रस्येन्द्रियाय स्वाहेति स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति सव्यष्ठा वा ऽऐन्द्रो रथस्य सव्यष्ठार मेवैतेन प्रीणातीन्द्रियं वै वीर्यं मिन्द्र इन्द्रिय मेवास्यैतद्वीर्यꣳ राज्य मभिविमुच्यते † ॥ १८ ॥

अथ वाराह्या ऽउपानहा ऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः संजानते स्व मेवैतद्रस मभिसंजानते तत् पशूना मेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्या ऽउपानहा ऽउपमुञ्चते ‡ ॥ १९ ॥

अथेमां प्रत्यवेक्षमाणो जपति । पृथिवि मातर्मा मा हिꣳसीर्मो ऽअहं त्वा मिति वरुणाद्ध वा ऽअभिषिषिचानात् पृथिवी बिभयाञ्चकार महद्वा ऽअय मभूद्यो ऽभ्यषेचि यद्वै मायं नावदृणीयादिति वरुण उ ह पृथिव्यै बिभयाञ्चकार

---

*, † ०विमुच्यत—इति ग, घ। ‡ उपमुञ्चत—इति ग, घ।

यद्वै मैयं नावधून्वीतेति तद्नयैवैतन् मित्रधेय मकुरुत न हि माता पुत्रᳩ हिनस्ति न पुत्रो मातरम् ॥ २० ॥

क्षत्रस्यसवो वा ऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा ऽअयं समभूद्यो ऽभ्यषेचि यद्वै मायं नावदृणीयादित्येष उ हास्यै बिभेति यद्वै मैयं नावधून्वीतेति तद्नयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रᳩ हिनस्ति न पुत्रो मातरं तस्मा-देवं जपति ॥ २१ ॥

सो ऽवतिष्ठति । हᳩसः शुचिषद्वसुरन्तरिक्ष-सद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृत सद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋत बृहदित्येता अतिच्छन्दसं जपत्येषा वै सर्व्वाणि छन्दाᳩसि यदतिच्छन्दास्तथैनं पाप्मा नान्वव-तिष्ठति ॥ २२ ॥

स न सङ्गृहीतान्ववतिष्ठेत् । नेत्तं लोक-मन्ववतिष्ठायाᳩ सुपुवाणोऽन्ववास्थादिति तᳩ रथ मेव रथवाहन आदधति ततो ऽवाङपप्लवते तथा

त लोक नान्ववतिष्ठति यऽ सुपुवाणो ऽन्ववा-
स्यात् ॥ २३ ॥

उत्तरेणाहवनीयं पूर्व्वाग्निकृती भवति । स
रथवाहनस्य दक्षिण मन्वनुप्यन्दए शतमानौ प्रवृत्ता-
भावप्राति * ॥ २४ ॥

औदुम्बरीए शाखा मुपगूहति । तयोरन्यतर
मुपस्पृशतीयदस्यायुरस्यायुर्मयि धेहि युङ्ङसि
वर्च्चोऽसि वर्च्चो मयि धेहीति तदायुर्व्वर्च्च
आत्मन् धत्ते ॥ २५ ॥

अथौदुम्बरीए शाखा मुपस्पृशति । ऊर्गस्यूर्जं
मयि धेहीति तदूर्ज मात्मन् धत्ते तयोतस्य कर्मण
एतावेव शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे
ददाति ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति
तस्मात्तौ ब्रह्मणे ददाति † ॥ २६ ॥

अग्रेण मैत्रावरुणस्य धिष्ण्याम् । मैत्रावरुणौ
पयस्या निहिता भवति ता मस्य बाह्व ऽभ्युपा-

---

* 'भावपाति' इति क ।

† 'ददाति – इति क ।

यद्धरतीन्द्रियं वा ऽ वीर्यं हरतो बाहू ऽअभ्युपावहरामीति पशूनां वा ऽएष रसो यत् पयस्या तत् पशूनामेवास्मैतद्रसं बाहू ऽअभ्युपावहरति तद्यन् मैत्रावरुणी भवति मित्रावरुणाऽउ हि बाहू तस्मान् मैत्रावरुणी भवति * ॥ २० ॥ ५ ॥

॥ इति तृतीयप्रपाठकस्य पञ्चमं ब्राह्मणम् [४. ३.] ॥

कात्यायनः— "गवाए शत मधिकं वा जघनाहवनीयस्योत्तरतः स्थापयति"-इति †। 'स्वस्य' ग्रातेः ग्रातुः, तदर्थं माहवनीयस्योत्तरप्रदेशे शतसङ्ख्या अधिका वा गाः स्थापयेदिति। तदिदं कार्यवादं विधत्ते— "तद् योऽस्य स्वो भवतीति। 'परःशताः' शताधिका इत्यर्थः। 'एवं' पशुसंस्थापनरूपं कर्म 'करोति' इति 'यत्', एतत् 'तत्' 'तथो' तथैव, वरुणेन जनत्वादित्युत्तरत्र सम्बन्धः ॥ १ ॥

"वरुणादिति ‡। पूर्वं राजसूयेऽभिषिच्यमानात् 'वरुणात्' 'इन्द्रियं' 'वीर्यम्' 'अपचक्राम' अपसृतम्। वीर्यापसरणे कारणमाह— "श्मशद् य एष इति। 'अश्नत्' मिथितं 'सम्भृतः' 'अपां-रसः', 'येन' सम्भृतेन रसेन इदानीम् अध्वर्युः 'अभिषिञ्चति'। 'सः' रसः 'अस्य' वरुणस्य 'वीर्यं' 'निर्जघान' हतवान्। वरुणः

---

* 'भवति'—इति क।

† का० श्रौ० सू० १५ ६ १६। 'गो ह्वालिः अपिह्नः'—इति तत्र कर्काचार्यः। तै० सं० १. ८. १०, तै० ब्रा० १. ७. ४. द्रष्टव्य।

‡ राजसूयस्य वरुणसवाभिधेयत्वे देतुपरमाख्यानमेतदिदमाख्यायिका।

'पशुषु' 'अन्वविन्दत्' अलभत । 'तस्मात्' पशूना यशोरूपत्वम्; पशुत एव यश सम्भवात् । तथ्च' वीर्यं' वरुण. 'पुन:' आत्मनि स्थापितवान् । 'तथो' तेनैव प्रकारेण 'एष.' यजमानोऽपि 'एतत्' पशुसंस्थापनेन 'इन्द्रियं वीर्यम्' आत्मनि धत्ते । तदेव व्यतिरेकमुखेनाह— "नाह वास्मादिति । 'अह'.' शब्द: प्रसिद्धिवाची । तस्मादेवं पशुनिधानरूपं कर्म कुर्वत: सुन्वत' सकाशात् 'वीर्यम्' 'न अपक्रामति' नापसरति । "राजसूय मिति यत् , तत् वरुणसव: * ; राजसूये वरुण एव मकरोदिति श्रुत्या 'एष.' यजमानोऽपि 'एतत्' 'करोति' यत इति तद्भावः ॥ २ ॥

अथ रथोपावहरण विधत्ते— "अथ रथ मिति † । रथोपावहरणं प्रशंसति— "यद्वै राजन्यादिति । 'यद्' वसु 'राजन्यात्' 'पराक्' पराधीन भवगम् अस्ति , 'तत्' एतत् अनेन 'रथेन' 'अनुयुङ्क्ते' अनुकूल स्वाधीन कुर्यात् । तस्माद् रथ उपावहर्तव्य इत्यर्थं ॥ ३ ॥

मन्त्र विधत्ते— "स उपावहरतीति ‡ । "इन्द्रस्येति § । वाजपेये व्याख्यात: || रथयजमानयोर्वैन्द्राग्नकत्व मुपपादयति— "वर्ष्मा वा इति ॥ ४ ॥

---

* "यो वै वाजपेय., स सम्राटसव , यो राजसूय. स वरुण सव"—इति तै० ब्रा० १ ७ ६ ।

† "रथ उपावहरति जित्यै"—इति तै० ब्रा० १ ७ ८ ।

‡ का० यौ० सू० १५ । १ , २ ।

§ वा० स० १० २१ १ ।

|| एतैव पुरस्तात ४४ पृ० ११ पं० द्रष्टव्यम् ।

"अथ भयचन्नवो" ७ भ्रमवाय 'त्वा' त्वाम्, म्रातिष्ठा मीति शेष। 'स्वधायै' भन्नाय त्वां म्रातिष्ठामि 'इति'। 'अर्जुन इति' इन्द्रस्य प्रिय नाम, इन्द्रात्मकोऽह म्रातिष्ठा मीति सम्बन्ध † ॥

मन्त्र पदशोऽनूद्य व्याचष्टे— "अन्नार्थे त्वेति। अर्जुनपद स्येन्द्रवाचकत्व दर्शयति— "अर्जुनो ह वा इति। 'इन्द्रस्य' 'गुह्य' गूढ नामधेयम्, तस्मात् अर्जुन इन्द्र। अस्त्विन्द्र स्यार्जुननामधेयम्, प्रकृते किं मायात मित्याशङ्क्य, यष्टुरिन्द्रा त्मकत्व माह— "इयेन वेति। अवसम्बन्धात् यष्टृत्वाच्च युज्यत इन्द्रत्वम्, तस्मान्मन्त्रे अर्जुनपदेन यजमानाभिधान युज्यत इत्यर्थ ॥ ७ ॥

अथ दक्षिणभागे युक्तस्याश्वस्य प्राजन समन्त्रक विधत्ते— 'अथ दक्षिणेति ॥। 'उपार्थति' "ऋषी गतौ" §, प्राज तीत्यर्थ। हे अश्व! 'मरुता' विद्युद्रूपाणा 'प्रसवेन' प्रेरणया 'जय' सर्वं स्वाधीन कुर्विति ‡ ॥

मन्त्र व्याचष्टे— 'विशो वा इति। यद् राज्ञा जेतव्य मस्ति, तद् 'विशा' प्रजया 'जयति', तस्माद् विड्रूपमरुत् प्रतिपादनमन्त्रो युक्त ॥ ८ ॥

विधत्ते—"अथ मध्य इति *। 'गवां' पूर्वं स्थापितानां 'मध्ये' 'उपाच्छति' स्थापयति। 'मनसा' 'आपाम' व्याप्तवन्तो भवाम। आप्नोतेर्लुङि लृदित्त्वात् च्लेरङि कृते रूपम्। मन्त्रस्य तात्पर्यमाह—"मनसा वा इति †॥ ८ ॥

अथ धनुष्कोट्या स्थाना स्थापितानां गवां मध्ये एकस्याः स्पर्शनं समन्त्रकं विधत्ते—"अथ धनुरिति ‡। इन्द्रियेण वीर्येण सङ्गता भवामः। "इन्द्रियं वा इति। "समिन्द्रियेण"—इति मन्त्रेण § गोरुपस्पर्शने इन्द्रियस्यैव वीर्यस्य धारणं कृतं भवतीत्यर्थः। शिष्टानां गवां स्वाधीनकरणार्थे 'जिनामि'—इति ब्रूयात्। इदं ब्राह्मणोक्तं वाक्यम्, न तु मन्त्रः। तस्यायमर्थः—'इमाः' गाः 'जिनामि', अपि चेमाः 'कुर्वे' स्वाधीनाः करोमि इति। "ज्या वयोहानौ", "ग्रहिज्या"—इत्यादिना || सम्प्रसारणम्॥ अत्र सूत्रम्—"धनुरार्त्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति जिनामीमाः कुर्व इमा इति चाह"—इति ¶ ॥ १० ॥

स्थानां स्थापितासु गोषु रथस्य स्थापनं प्रशंसति—"तद्यदिति। 'यद्' यत्र 'पुरुषात्' 'पराङ्' पराधीनं बहिर्मुखं 'नष्टं' 'भवति'। किं तत्? तदाह—"यशो वा किञ्चिदिति।

---

* का० श्रौ० सू० १५. ६. १८।
† वा० सं० १० २१ ५।
‡ का० श्रौ० सू० १५ ६ २०।
§ वा० सं० १० २१ ६।
|| क्रा० प० १८ पा०। पा० सू० ६ १ १६।
¶ का० श्रौ० सू० १५ ६ २०, २१।

तद् यजमानादिकं 'विचित्' चन्यात् 'प्रथमां' पूर्वतः 'स्वं' स्वीयं पशु अभिलक्ष्य 'प्रतमां' प्रकर्षेण गच्छति। 'तद्' अनेन 'पशु' शालेतेषु स्थापनेन यथासुखं वीर्यं 'स्यात्' प्रातिः सम्पाद्यात् पुनः स्वाधीनं कृतवान् भवतीत्यर्थः ॥ ११ ॥

अथ स्थापितानां गवां स्वामिने स्वाय, अन्यासां तावतीनां गवां प्रतिदानं दर्शयति— "तस्मै तावन्मात्रीरिति *। यावन्मात्राकाः पूर्वं आहवनीयस्योत्तरतो गा अवस्थापिताः, 'तावन्मात्रीः' तावत् परिमाणं यासां तावन्मात्राः। प्रमाणे मात्रच् प्रत्ययः †, "टिड्ढाणञ्"-इति सूत्रेण ङीप् ‡। 'भूयसीः' ततोऽप्यधिकाः। प्रतिदानं प्रशंसति— "न वा एष क्रूरेति। "यजमान इति। 'यत् एष क्रूरकर्मणे न भवति'-इत्यन्वयः। यजमानेनान्यस्य प्रीतिजननं कर्म कर्त्तव्यम्। किं तत् क्रूरकर्मेति तद् दर्शयति— "यदाह जिनामीति। तस्मात् शोच्यमाने स्वाय तावन्मात्राः 'भूयसीर्वा' गाय दत्वा वेदिमध्ये स्थिताभ्यो गवां स्वाधीनकरणेन क्रूरं कर्म न कृतं भवतीत्यर्थः ॥ १२ ॥

आहवनीयस्योत्तरतः स्थापितानां गवां मध्ये दक्षिणतोऽवस्थानां स्थापनं विधत्ते— "अथ दक्षिणामिति। यूपस्य पूर्वतो वेदेर्दक्षिणतः 'दक्षिणान्' दक्षिणादिग्मुखानगान् स्थापयेत्। अथान्तःपात्यदेशे § रथस्य स्थापनं विधाय मुदगमनमार्गं

* का० श्रौ० सू० १५ । २९ ख ।

† "प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः"—इति पा० सू० ५. २ ३७ ।

‡ पा० सू० ४ १. १५ ।

§ 'शोभा.पाल. वेदितार्हसम्पदत्रान्तरालमपरः (भा० २८३पृ० ५पं०)

माह— "सोऽग्नेरिति। अनेन मार्गेण रथं प्रदक्षिणं मावर्त्य म्। 'तेनैव दक्षिणा इति। दक्षिणागमनमार्गस्तु पूर्वं मेवोक्तः *। सदसः पश्चिमे, आग्नीध्रायाः पूर्वदेशे रथम् 'उपावर्त्तते' स्थापयेत्। सूत्रितं हि— "पूर्वेण यूपं परीत्याग्नेः पात्यदेशे स्थापयति मा त इन्द्र इति"-इति † ॥ १३ ॥

"मा त इति ‡। मन्त्रस्यायमर्थः,— हे 'वज्रहस्त।' 'यं रथम्' 'अधितिष्ठ' अधितिष्ठसि, हे 'देव।' अधिस्थाय त्वं सव्यस्थितः 'स्वश्वान्' शोभनाश्वान् 'रश्मीन्' 'आयमसे' नियच्छसि। हे 'तुराषाट्।' तूर्णं सहत इति तुराषाट्, तस्य सम्बुद्धिः, हे 'इन्द्र।' 'ते' तव सम्भूते 'रथे' 'अयुक्ताः' अयोगरहिताः वयम् 'अप्रमत्ताः' अप्रमत्तम् 'विदसाम'। विदेर्लेटि सिपि, "लेटोऽडाटौ"-इत्यडाटौ § च, विदेम। तव रथे अयुक्ता वयं ब्रह्मवर्चसम् न लभामहे, किन्तु युक्ताः सन्तो ब्रह्मवर्चसमेव लभेमहीत्यर्थः। रश्मिपदस्यार्थं माह— "अभीशव इति ॥

रथविमोचनीयहोमं विधत्ते— "अथ रथेति ‖। 'रथः' होमेन 'प्रीतः' सन् 'विमुच्यातै' विमुक्तो भवत्विति ॥ १४ ॥

होमं मन्त्रान् चतुरो मन्त्रान् सार्थवादं पृथग् विधत्ते— 'स जुहोत्यग्नय इति ¶। चतुर्णां मन्त्राणामयमर्थः —

---

* अनुपद मेवोक्तं ( २८१ पृ० १२ प० ) द्रष्टव्यम्।
† का० श्रौ० सू० १५ ६ २२ सू।
‡ वा० सं० १० २२ १।
§ पा० सू० ३ ४ ७ ३ १ ३४ ३ ४ ९७ ३ ४ ९४।
‖ का० श्रौ० सू० १५ ६ २३।
¶ वा० सं० १० [illegible] १—४।

'गृहपतये अग्नये' 'स्वाहा' इत्युत मन्त्रः।

वनस्पतये वनस्पतिगुणकाय 'सोमाय स्वाहा'।

'मरुताम्' सम्बन्धिने 'ओजसे' बलाय 'स्वाहा'।

'इन्द्रस्य' सम्भूताय 'इन्द्रियाय' वीर्याय 'स्वाहा' इति ॥

तत्र प्रथममन्त्रं प्रशंसति— "यदेवाग्नेय मिति। अग्नेरेकदेशिनाग्निपदेन रथस्य आग्नेयं यदङ्गं प्रीणितवान् भवति। रथस्याग्नेयं मङ्गं दर्शयति— "वहा वा इति। अश्वैरुह्यमानस्य युगस्य प्रान्तप्रदेशा वहाः, ते आग्नेयाः, "अग्निदग्धमिवैषां वहं भवति"—इतिश्रुतेः * अग्निदग्धत्वसाम्यात् एषोऽपि वहा आग्नेयाः। प्रथममन्त्रे अग्नये'—इत्येकदेशपाठेन रथाङ्गप्रीणनम्। 'गृहपतये'—इति भागं प्रशंसति— "श्रीर्वा इति। 'गार्हपत्यं' गृहपतित्वं नाम 'श्रीः', यतः पुरुषो 'यावतः' धनस्य पुरुषस्य वा 'ईष्टे', 'तत्' एतेन गृहपतय इति मन्त्रभागपठनेन यजमानस्य गार्हपत्यमाप्य राज्य मभिन्नस्य रथो विमुक्तो भवतीत्यर्थः। एवं उत्तरेषु मन्त्रेषु एकदेशेन रथाङ्गप्रीणनम्, अपरैश्च यजमानफलाय रथ विमोकं वदत इति ॥ १५ ॥

"सोमायेति। "द्रव्याणीति। वनस्पतिनिर्मितानि यानि 'द्रव्याणि' हिमकाराणि 'रथ्यानि' रथसम्बन्धीनि, 'आनसानि' अनःसम्बन्धीनि 'च' इति। तदेतेन 'सोमाय वनस्पतये"—इतिमन्त्रपाठेन उभयविधेभ्यो रथ्यानसचक्रेभ्य, तदर्थम्, 'अविहिंसाम्' अहिंसां कृतवान् भवति। सोमस्य वनस्पतित्वात् ओषधिपोषकत्वात् वनस्पतिपदेन रथस्य दारुविनिर्मितान्यङ्गानि प्रीणयति। सोमस्य मरुत्पत्वम्, राजत्वाद् बलसम्पादकत्वाद्वा।

* १का० १अ० २ब्रा० ६क० (१भा० ३६पृ० १२ पं०)।

तस्मात् सोमपदेन क्षत्रियसम्बन्धि स्वाराज्य मभिलष्य रथो विमुक्तो भवतीत्यर्थः ॥ १६ ॥

"मरुता मिति। तृतीयेऽत्र मन्त्रे मरुता मिति पदेन रथस्यैव प्रीणनम्। रथस्य सप्तत्व सम्पादयति— "चत्वारो-ऽश्वा इति। रथस्याश्वचतुष्टयम्, 'रथ' श्च पञ्चम., 'द्वौ सव्यष्ठसारथी' सव्यदक्षिणभागयोरवस्थितौ द्वौ सारथी इति 'सप्त' सङ्ख्या भवति, मरुता मपि सप्तगणात्मकत्वात् सप्तसङ्ख्याकत्वम्; अत सप्तसङ्ख्यासाम्यात् मरुता मिति पदेन रथस्यैव प्रीणन सम्पन्नं भवतीत्यर्थ.। मरुत्पद मेव यजमानस्य फलार्थं मपि प्रशंसति— "विशो वा इति ॥ १७ ॥

"इन्द्रस्येति। अत्र चतुर्थमन्त्रे इन्द्रपदेन रथस्य सारथि प्रीणनम्। सव्यभागे तिष्ठतीति 'सव्यष्ठा'। तिष्ठतेरौणादिक ऋकारप्रत्ययः किच्च, कित्त्वादालोप, "अम्बाम्बगोभूमि"-इति सूत्रे * 'स्था स्थिन् ऋषा.'-इति वचनात् षत्वम् ॥ १८ ॥

विधत्ते— "अथ वाराह्यौ इति। 'वाराह्यौ' वराहचर्म निर्मिते 'उपानहौ' 'उपमुञ्चते'। कात्यायनेन पशूनां रसोऽसीति मन्त्रेण वाराह्योरुपानहोरुपमोको † विहितः ‡। तत्र मन्त्रे वराहस्य पशुरसत्व मभिधीयते, तदुपपादयति— "अग्नौ ह वै देवा इति। पुरा देवा घृतकुम्भ मग्नौ प्रास्य, तस्माद् वराह उत्पन्न, अतो घृतोत्पन्नत्वाद् वराहस्य 'मेदुरत्व' मास-

* पा० सू० ८ । ३ । ९७ ।

† '०वपविमोको'—इति ख। उपविमोकशब्दार्थस्त्वैतरेयश्रुतितो ऽवगन्तव्य, (ऐ० आ० ६ । ४ । ७)।

‡ का० श्रौ० सू० १५ । ६ । २४ ।

त्वम्। …ऽस्मिन् 'वराहे' 'गावः' 'सचानते' संवदन्ते ; क्षीररसभूतघृतोत्पन्नत्वात्। तस्माद् वाराहोपानद्भ्यामुपमोकेन पशुरस एव स्वयं प्रतिष्ठितो भवतीत्यर्थः ॥ १९ ॥

"अथेमा मिति। 'पृथिवि मातः!' सर्वेषां निर्मातृ पृथिव्या मातृत्वम्। द्यौः पिता पृथिवी मातेति * श्रुत्यन्तरेषु श्रूयते। 'मा' मा 'मा हिंसीः' मा बाधिष्ठाः, 'अहम्' अपि 'त्वा' नैव हिंसिष मिति मन्त्रार्थः †। "वृत्रणाद्वा अभिषिषिचानादित्यादिकः, "न हि माता पुत्रं हिनस्ति, न पुत्रो मातर मित्यन्तः, वाक्यसन्दर्भो वाजपेये भूम्यवेक्षणप्रकरणे व्याख्यातः ‡ ॥ २०, २१ ॥

रथादवरोहणं विधत्ते— "सोऽवतिष्ठतीति §। अवतिष्ठतीति अवपूर्वस्य स्थाधातोः कर्मणा समन्वये "समवप्रविभ्यः स्थः"–इति ‖ आत्मनेपदं न भवति ; तिष्ठतिक्रियायोगाभावेन प्रेत्युपसर्गकल्पनाया अभावात्, अन्यथा आत्मनेपदं दुर्निवारं स्यात्। अथ वा व्यत्ययेन परस्मैपदम् ॥

"हंस इति ¶। मन्त्रस्याय मर्थः— हन्ति पृथिवी मिति 'हंसः' रथः, शुची देवयजने रथवाहने च सीदतीति 'शुचि-

* "द्यौर्मे पिता ०—० माता पृथिवी"–इति ऋ० सं० १. १६४. ३३। "द्यौष्पितः पृथिवि मातर्"–इति ६. [illegible] ५। इत्यमादिषु द्रष्टव्यः।

† वा० सं० १० २३. ५।

‡ इहैव पुरस्तात् २ १. १८ ( १०२ पृ० ) द्रष्टव्यम्।

§ का० श्रौ० सू० १५ ६ २६।

‖ पा० सू० १ ३ २२।

¶ वा० सं० १०. २४ १।

षत्', तस्योपरि यजमानं वासयतीति 'वसु', तद्गुणत्वायनव स्ड्ऽन्तरिक्षे सीदतीति 'अन्तरिक्षसत्', 'होता' होतृसमान , तदेव कथं मिलुच्यते— वेद्यां सीदतीति 'वेदिषत्', 'अतिथि' अतिथिवसन्ध्य , तदपि कथं मिलुच्यते— दुरोणेषु गृहेषु सीदतीति 'दुरोणसत्' यो यस्य मारोढुं नयति तस्य तस्य गृहे सीदति, नृषु मनुष्येषूपकारं कर्तुं सीदतीति 'नृषत्', वरे श्रेष्ठे राजादिरूपे सीदतीति 'वरसत्', ऋते यज्ञे आज पेयादौ सीदतीति 'ऋतसत्', सुखं वोढुं व्योमनि आकाशे सीदतीति 'व्योमसत्'। "अश्वयोनिर्वा अश्व'-इतिश्रुतेः * अश्वो जातैरश्वैरुपेतत्वात् 'अब्जा', गोशब्दवाच्याद् यज्ञात् जायत इति 'गोजा', एतच्च "एकस्तुतीयऽ रथस्तृतीयम्"-इत्याम्नातम् †, ऋतार्थे यज्ञार्थे जातत्वात् 'ऋतजा" अद्रिभ्यो दृढपाषाणेभ्यो जातत्वात् 'अद्रिजा'। ईदृशो रथो 'बृहत्' प्रौढ राजसूयाख्यम्, 'ऋत' यज्ञं सम्पादयत्विति रथपक्षेऽर्थः ॥

सूर्यपक्षे त्वयं अर्थः — हन्ति गच्छतीति 'हंस' आदित्य , शुचौ निर्मले मण्डले सीदतीति 'शुचिषत्', 'वसु' निवास हेतु , प्राणात्मकवायुरूपेणान्तरिक्षे सीदतीति 'अन्तरिक्षसत्', अग्निरूपेण वेद्यां सीदतीति वेदिषत् , अप्सु सूक्ष्मभूतेषु जायत इति 'अब्जा', गोषु पृथिवीप्रधानेषु स्थूलभूतेषु जायते इति 'गोजा , ऋते सत्यभूते मण्डले जायत इति 'ऋतजा ', अद्री पाषाणे मेघे वा उदकरूपेण जायत इति 'अद्रिजा ', 'ऋतम्'

---

* इष्टकोपरिष्टात ( १३का० १प्र० ११आ० १६वा० ) द्रष्टव्यम् ।

† तै० सं० १ २ ६ ४ द्रष्टव्यम् अत्र मिष्ठ पुरस्तादपि ।

"स्तृ गतौ" * सर्वत्र व्याप्तं ज्ञानात्मकम्, 'सुखम्' "सुखि हर्षे" † प्रहृष्टम्, परमानन्दलक्षण मिति ॥

मन्त्रगत छन्दोविशेषं प्रशंसति— "एता अतिच्छन्दस मिति। इयमन्त्रस्यातिजगतीच्छन्दः, सा च गायत्र्यादीनि छन्दांसि अतिक्रम्य वर्तत इति तस्या अतिच्छन्दस्त्वम्। सर्वेषा मेव छन्दसां तत्रान्तर्भावात् सर्वच्छन्दोरूपत्वम्, तस्मात् सर्व-च्छन्दोऽतिक्रमणात् 'एता' जपित्वा, अवरोहन्तम् 'एनम्' यज-मानम् 'अनु' 'पाप्मा' 'नावतिष्ठति' नावरोहति, पाप्मान मतिक्रामेदित्यर्थः ॥ २२ ॥

अवरोहणकस्य रथस्य रथवाहनेऽनसि स्थापनं विधातुं यन्तु रवस्थानं निषेधति— "नेति ‡। सम्यक् प्रग्रह ग्रहणशीलो 'ऽग्रहीता' सारथि स, 'स' यजमानम् 'अनु' 'नावतिष्ठेत्' नावरोहेत्। तत्र कारण माह— "नेदिति। सुकृतम् यं लोक प्राप्नोति, तं लोकं सारथिरपि न प्राप्नुयादिति। "स रथ मिति। 'रथवाहने' रथस्थापनसाधने 'अनसि' § 'तम्' अय न्तृक 'रथम्' 'आदधाति ‖ निदध्यात्। तथाच तैत्तिरीय-कम्— "यदुभौ सहावतिष्ठेता समानं लोक मियाता सह संग्रहीत्रा रथवाहने रथ मादधाति स्वर्गादेवैन लोका

---

* आ० प० ८३४ पा०।

† आ० प० ७३५ पा०।

‡ का० श्रौ० सू० १५ । ६ । २७ रथवाहनपाठोऽप्यनेकत्र।

§ रथवाहनशब्दस्याप्रसिद्धत्वात् स्वय मेव तस्यार्थं माह (कर्क) — "अनस्यात्मके"— इति का० श्रौ० सू० १५ । ६ । २८।

‖ मध्ये व्यादधाति — इति श्रुतौ।

दन्तर्देधाति"—इति *। "तत इति। 'ततः' पश्चाद् यन्तः 'पराङ्' पराङ्मुखः सन् 'अपप्रवते' "प्लुङ् गतौ"—इति † धातुः, अपरीहृत्येत्यर्थः। तथाच सूत्रितम्—"शालाया दक्षिणतो ऽपप्रवते यन्ता"—इति ‡ ॥ २३ ॥

पूर्वं तस्य भ्रातुरर्थाय गोःस्थापनकाले पूर्वाग्निवहनस्याहवनीयस्योत्तरतः स्थापनं सूत्रकृतोक्तम्—"गवां शत मधिकं वा आहवनीयस्योत्तरतः स्थापयति, पूर्वाग्निवहनञ्च तस्मिन्"—इति §, तदिदानीं विधत्ते—"उत्तरेणाहवनीय मिति। "पूर्वाग्निरिति। शान्तिपौष्टिकार्थोऽग्निः 'पूर्वाग्निः', 'सः' अनसा 'उद्धृतः' ऊर्ध्वं क्रमः स्थापितो 'भवति'॥

अथ रथवाहनस्य दक्षिणे अंसे शतमानयोरासञ्जनम्, तत्रैव औदुम्बर्याः शाखाया उपगूहनञ्च विधत्ते— "स रथेति। 'दक्षिणम्' 'अनुयन्तं' प्रान्त मनु 'प्रवर्तौ' वर्तुलौ 'शतमानौ' शतमानपरिमितौ द्वौ रुक्मौ 'आबध्नाति' आसञ्जयेत् ॥ ॥ २४ ॥

"औदुम्बरी मिति। तयोः शतमानयोरन्यतरस्योपधानेन सम-स्पर्शं विधत्ते — "तयोरिति। कात्यायनस्तु मन्त्रद्वयं कृत्वा उभयोरपि स्पर्शने विनियोगं सूत्रवान्। "उपस्पृशति शतमानावियदसीत्येकं युङ्ङसीत्यपरम्"—इति ¶। 'इयदसि' एतावत्परिमाणोऽसि।

---

* तै० ब्रा० १. ७. ९. ६।

† भ्वा० धा० ४५७ धा०।

‡ का० श्रौ० सू० १५. ६. २९।

§ का० श्रौ० सू० १५ ६ १३, १४। पूर्वमेवोद्धृत मिदम् (२९८पृ०)।

|| का० श्रौ० सू० १५ ६. ३०, ३१।

¶ का० श्रौ० सू० १५ ६ ३२।

अत्र तत्परिमाणं हस्तेनाभिधीयते ; स्वल्पपरिमितत्वात् । 'आयु-रसि' आयु स्वरूपोऽसि ; "आयुर्हिरण्यम्"-इति श्रुतेः * । तस्मात् 'आयुर्मयि धेहि' ; यो हि यदात्मको भवति , स एव तद् दातुं शक्नोति । 'युङ्ङसि' "युजिर् योगे" † यज्ञं युनक्तीति 'युङ्', तथाविध 'असि' । 'वर्चः' तेजः 'असि' । तस्माद् 'वर्चो मयि धेहि' ‡ । मन्त्रस्यार्थं अनुव्याह— "तदायु-र्वर्च इति ॥ २५ ॥

शाखाया उपसर्जने मन्त्रं विधत्ते— "अथौदुम्बरीमिति § । 'ऊर्क्' अन्नम् 'असि' । तस्मात् 'मयि' 'ऊर्जम्' अन्न 'धेहि' इति ‖ । एतयोर्दानं विधत्ते— "तस्येतस्येति । ब्रह्मणे दानं प्रशंसति— "ब्रह्मा हि यज्ञ इति ¶ ॥ २६ ॥

विधत्ते— "अथैव मैत्रेति । मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मदेशे मित्रावरुणदेवत्या 'पयस्या' आमिक्षा 'निहिता भवति' । तस्या यजमानबाह्वोरवहरणं विधत्ते— "तां तस्य बाहू इति ** । 'यस्य' सन्ततौ 'बाहू', 'ताम्' 'अभि'-लक्ष्य 'उपावरोहतः' प्रसारयति । हे 'बाहू !' 'वीर्यवन्तः' वीर्यकारिणः 'इन्द्रस्य' यजमानस्य सम्बन्धिनौ 'वां' युवां ( बाहू ) 'अभ्युपा-

---

* तै० ब्रा० १. ७ ६ ३ ।
† ध० पा० ७ धा० ।
‡ वा० सं० १० २५ १, २ ।
§ का० श्रौ० सू० १५ ६ ३२ क ।
‖ वा० सं० १० २५ ६ ।
¶ का० श्रौ० सू० १५ ५ ३३ ख ।
** का० श्रौ० सू० १५ ६ ३४ ।

वह्वराणि' 'अभि' लक्ष्य स्थापयामि *। ब्राह्मणेऽपि प्रशंसति— "पयूना वा इति। पयस्याया पशुरसात्मकत्वात् पशुरस मभि लक्ष्य शाल्म स्थापितवान् भवतीति। पयस्याया मैत्रावरुणत्व प्रशंसति— "तस्मान्मैत्रावरुणीति ॥ २७ ॥ ३ † [ ४. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये तृतीय ब्राह्मणम् ॥

॥ इति पञ्चमकाण्डे तृतीयः प्रपाठकः ‡ ॥

---

* मन्त्र इत्र — वा० सं० १० ५५ ०।

† शतद्भाष्यकविरचित सर्वा,प्यातं तै० सं० १ ८ १५, तै० ब्रा० १ ७ ८ अनुवाके च द्रष्टव्य।

‡ इत उत्तर सिद्ध— कण्डिका ११२'—इति क कण्डिका मध्या ११८ —इति ख ग, घ। तत्र १ब्रा० १८क०, २ब्रा० १७क० ३ब्रा० १०क०, ४ब्रा० १०क०, ५ब्रा० १७क०। एतासां मङ्कलनया,प्रपाठ्य नाध्यायेषु ११८ कण्डिका सम्पद्यन्त इति भ्रमः।

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ,

अपि वा

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ।

---

॥ हरिः ॐ ॥

मैत्रावरुण्या पयस्यया प्रचरति । तस्या अनिष्ट एव स्विष्टकृद् भवत्यथास्मा ऽआसन्दी माह-रन्त्युपरिसद्या वा ऽएष जयति यो जयत्यन्तरिक्ष-सद्यं तदेन मुपर्यासीन मधस्तादिमाः प्रजा उपा-सते तस्मादस्मा ऽआसन्दी माहरन्ति सैषा खादिरी वितृण्णा भवति येयं वध्रिव्यूता भरतानाम् ॥ १ ॥

ता मयेष । मैत्रावरुणस्य धिष्ण्य निद-धाति स्योनासि सुषदासीति शिवा मेवैतच्छग्मा करोति * ॥ २ ॥

अथाधीवास मास्तृणाति । क्षत्रस्य योनि-

---

* करोति—इति क ।

रसीति तद् यैव क्षत्रस्य योनिस्ता मेवैतत् करोति * ॥ ३ ॥

अथैन मासादयति। स्योना मासीद सुषदा मासीदेति शिवा शग्मा मासीदेत्येवैतदाह क्षत्रस्य योनि मासीदेति तद्यैव क्षत्रस्य योनिस्तस्या मेवैन मेतद्दधाति † ॥ ४ ॥

अथान्तरांसे ऽभिमृश्य जपति। निषसाद धृतव्रत इति धृतव्रतो वै राजा न वा ऽएष सर्व्वस्मा ऽइव वदनाय न सर्व्वस्मा ऽइव कर्म्मणे यदेव साधु वदेद्यत् साधु कुर्यात्तस्मै वा ऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रत इति वरुणः पस्त्यास्वेति विशो वै पस्त्या विक्ष्वित्येवैतदाह साम्राज्याय सुक्रतुरिति राज्यायेत्येवैतदाह यदाह साम्राज्याय सुक्रतुरिति ‡ ॥ ५ ॥

---

* 'करोति'—इति क।

† 'दधाति'—इति क।

‡ 'इति'—इति क। 'इति'—इति ख, ग।

अथास्मै पञ्चाक्षान् पाणावावपति । अभिभूरस्येतास्ते पञ्च दिशः कल्पन्तामित्येष वाऽअयानभिभूर्यत् कलिरेष हि सर्व्वानयानभिभवति तस्मादाहाभिभूरस्येतास्ते पञ्च दिशः कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्व्वा एव दिशः कल्पयति * ॥ ६ ॥

अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवध † मतिनयन्ति तस्माद्राजादण्ड्यो यदेनं दण्डवध ‡ मतिनयन्ति § ॥ ७ ॥

अथ स्वरं वृणीते । यद्ध वै किं च सुषुवाणो स्वरं वृणीते सोऽस्मै सर्व्वः समृध्यते तस्मात्स्वरं वृणीते ॥ ८ ॥

स ब्रह्मन्नित्येव प्रथम मामन्त्रयते । ब्रह्म प्रथम मभिव्याहराणि ब्रह्मप्रसूता व्वाचं व्वदानीति तस्मात् ब्रह्मन्नित्येव प्रथम मामन्त्रयते त्वं ब्रह्मासीतीतरः प्रत्याह सवितासि सत्यप्रसव

---

* 'कल्पयति'—इति ख ।   †, ‡ 'दण्डवधं'—इति ग ।

§ 'मतिनयन्ति'—इति ख ।

इति व्वीर्य्यं मेवाग्निरेतद्दधाति सवितार मेव सत्यप्रसवं करोति ॥ ६ ॥

ब्रह्मन्निव्येव द्वितीय मामन्त्रयते । त्वं ब्रह्मा-सीतीतरः प्रत्याह व्वरुणो ऽसि सत्यौजा इति व्वीर्य्यं मेवाग्निरेतद्दधाति व्वरुण मेव सत्यौजस करोति ॥ १० ॥

ब्रह्मन्निव्येव तृतीय मामन्त्रयते । त्वं ब्रह्मा-सीतीतरः प्रत्याहेन्द्रोऽसि व्विशौजा इति व्वीर्य्यं मेवाग्निरेतद्दधातीन्द्र मेव व्विशौजसं करोति ॥ ११ ॥

ब्रह्मन्निव्येव चतुर्थं मामन्त्रयते । त्वं ब्रह्मा-सीतीतरः प्रत्याह रुद्रोऽसि सुशेव इति तत् वीर्य्याण्येवाग्निरेतत् पूर्व्वाणि दधात्यथैन मेतच्छ-मयत्येव तस्मादेष सर्व्वेषामेतो मृडयति यदेनत् शमयति ॥ १२ ॥

ब्रह्मन्निव्येव पञ्चम मामन्त्रयते । त्वं ब्रह्मा-सीतीतरो ऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत् परिमित मेवाग्निरेतत् पूर्व्वं व्वीर्य्यं दधा-त्यथा वानिरुक्तं प्रत्याहापरिमित वा ऽप्यनिरुक्तं

तदपरिमित मेवास्मिन्नेतत् सर्व्वं व्वीर्यं दधाति तस्मादवानिरुक्तं प्रत्याह * ॥ १३ ॥

अथ सुमङ्गलनामानं ह्वयति। बहुकार श्रेयस्कर भूयस्करेति य एवन्नामा भवति कल्याण मेवैतन्मानुष्यै व्वाचो व्वदति † ॥ १४ ॥

अथास्मै ब्राह्मण स्फ्यं प्रयच्छति। अध्वर्युर्व्वा यो व्वास्य पुरोहितो भवतीन्द्रस्य व्वज्रोऽसि तेन मे रध्येति व्वज्रो वै स्फ्यः स एतेन व्वज्रेण ब्राह्मणो राजान मात्मनो ऽबलीयाएसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति तदमित्रेभ्य एवैन मेतद् बलीयाएसं करोति ॥ १५ ॥

तं ‡ राजा राजभ्रात्रे प्रयच्छति। इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेन राजा राजभ्रातर मात्मनो ऽबलीयाएसं कुरुते ॥ १६ ॥

तं राजभ्राता सूताय वा स्थपतये वा

---

* 'प्रत्याह'- इति ग।

† 'वदति'- इति क।

‡ तं'- इति. क, ग।

प्रयच्छति। इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं व्वात्मनो ऽवलीयाएमं कुरुते ॥ १७ ॥

तए सूतो वा स्थपतिर्व्वा ग्रामण्ये प्रयच्छति। इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेन सूतो वा स्थपतिर्व्वा ग्रामण्य मात्मनो ऽवलीयाएसं कुरुते ॥ १८ ॥

तं ग्रामणीः सजाताय प्रयच्छति। इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेन ग्रामणीः सजात मात्मनो ऽवलीयाएसं कुरुते तद्यदेवए सम्प्रयच्छन्ते नेत्पापवस्यस मसद्यथापूर्व्वं मसदिति तस्मादेवए सम्प्रयच्छन्ते * ॥ १९ ॥

अथ सजातश्च प्रतिप्रस्थाता च। एतेन स्फ्येन पूर्व्वाग्नौ शुक्रस्य पुरोरुचाधिदेवनं कुरुतोऽसा वै शुक्रोऽसार मेवैतत् कुरुतः † ॥ २० ॥

अथ मन्थिनः पुरोरुचा व्विमितं व्विमि-

---

* सम्प्रयच्छन्ति'—इति क। 'सम्प्रयच्छन्ते'—इति ख।
† 'कुरुतः'—इति ग, घ।

नुतः । वाचो वै मन्थौ तद्वाचमेवैतत् कृत्वा-याम्या ऽएतद्द्यां जनयतस्तस्मान्मन्थिनः पुरोरुचा व्विमितं व्विमिनुतः * ॥ २१ ॥

अथाध्वर्युः । चतुर्गृहीत माज्यं गृहीत्वाधि-देवने हिरण्यं निधाय जुहोत्यग्निः पृथुर्धर्मणस्पतिः-र्जुषाणो ऽअग्निः पृथुर्धर्मणस्पतिराज्यस्य व्वेतु स्वाहेति † ॥ २२ ॥

अथाक्षान्निवपति । स्वाहाकृताः सूर्यस्य रश्मिभि-र्यतध्वं सजातानां मध्यमेष्ठ्यायेत्येष वा ऽअग्निः पृथुर्यदधिदेवनं तस्यैते ऽङ्गारा यदक्षास्त मेवै-तेन प्रीणाति तस्य ह वा ऽएषानुमता गृहेषु घ्नन्ते यो वा राजसूयेन यजते यो वैतदेवं व्वेदैतेष्वक्षेष्वाह गां दीव्यध्व मिति पूर्वाग्निवाही दक्षिणा ‡ ॥ २३ ॥

अथाह्वानये स्विष्टकृते ऽनुब्रूहीति । तद-दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजा-

---

* 'विमिनुतः'—इति ख, घ।

† 'स्वाहेति—इति क। 'स्वाहेति'—इति ख, घ।

‡ दक्षिणा—इति ख, घ।

पतिर्य्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतस्मिवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मा-दुत्तरेणाहुती ऽएतत् कर्म क्रियत ऽआग्न्याव्या-हाग्निर् स्विष्टकृतं यजेति व्वषट्कृते जु-होति ॥ २४ ॥

अथेडा मादधाति * । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तत् स्तोत्राय प्रमी-यति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २५ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [४. ४.] ॥

अथ पयस्यायाः प्रचारं विधत्ते— "मैत्रावरुण्येति । "तस्या अनिष्ट इति । 'तस्याः' पयस्यायाः स्विष्टकृत् 'अनिष्टः' अहुतो भवति, प्राक् स्विष्टकृत इत्यर्थः ॥

विधत्ते— "अथाग्ना आसन्दी मिति। आसन्दीस्थापनं

* 'मादधाति'—इति क ।

पूर्वं सुक्तम् । आसन्द्यारोहणं प्रशंसति— "उपरिसद्य मिति । एतद् वाक्यं वाजपेये व्याख्यातम् * । तस्याः स्वविशेषगुणा-न्तरं वाक्यभेद मङ्गीकृत्य विधत्ते— "सैषा खादिरीति । 'विवृक्णा' सच्छिद्रा भवेत् । तस्या आसन्द्या रज्जुव्यूतत्व मस्ति, तत्र यजमानविशेषेण रज्जुविशेषं दर्शयति— "वध्र मिति ।' 'वर्ध्रव्यूता' चार्मरज्ज्वः, ताभिर्व्यूता स्यूता भवति 'भरतानाम्' ; अन्येषान्तु रज्जुमात्रम् । कात्यायनो निर्विशेषं सूत्रयामास— "खादिरी आसन्दी रज्जुव्यूताम्"–इति † ॥ १ ॥

तस्या निधानप्रदेशं विधत्ते— "ता मध्येवेति । मन्त्रं विधत्ते— "स्योनेति ‡ । हे आसन्दि ! 'स्योना' सुखरूपा 'असि', 'सुषदा' सुषदनयोग्या 'असि' । मन्त्रं विवृणोति— "शिवा मिति । 'शग्मा' सुखकरीम् ॥ २ ॥

विधत्ते— "अथाधीवास मिति § । 'अधिवासः' आस्तरणम्, चित्रकम्बलादिकम् । "क्षत्रस्येति ‖ । एष मन्त्रो व्याख्यातः ¶ ॥ ३ ॥

अथ तस्यां यजमान मुपवेशनं समन्त्रकं विधत्ते— "अथैन मिति । 'आसादयति' उपवेशयतीत्यर्थः ** । हे यजमान !

---

* प्र० १. ६. २२ ( १०४ पृ० ३ पं० ) द्रष्टव्यम् ।

† का० श्रौ० सू० १५. ७. १ । 'रज्जूनाम्'—इति तत्र सूत्रपाठः ।

‡ वा० सं० १०. २६. १ ।

§ का० श्रौ० सू० १५. ७. २ ।

‖ वा० सं० १०. २६. २ ।

¶ प्र० ३. २. २२. ( २४७ पृ० ४ पं० ) द्रष्टव्यम् ।

** का० श्रौ० सू० १५. ७. ३ ।

'स्योना' सुखरूपाम् आसन्दीम् 'आसीद' आरोह, सुखसाधन योग्याः अधितिष्ठेत्यर्थः। "क्षत्रस्य योनिं मासीदेति, उपरितन-मन्त्रस्योत्तरभागः। आसीदाम्यत्रर्णे 'क्षत्रस्य योनिं' अधीवास, त मारोहेत्यर्थः * ॥ ४ ॥

हृदयदेशादिस्पर्शनपूर्वकं जपं विधत्ते— "अथास्तराम इति। 'अन्तरामे' स्तनमध्ये 'अभिमृश्य' जपेत् †।

मन्त्रस्यायमर्थः — अयं यष्टा 'धृतव्रत' स्वीकृतयज्ञ, नियमितवचनादिव्यापारो 'वरुण' अनिष्टनिवारको भूत्वा 'निष साद' अस्या आसन्द्या मुपरि देशे। 'पस्त्यासु' बहुषु वेदिगृहेषु, 'विश्व' प्रजासु आगत्य साम्राज्य कर्त्तुं 'सुक्रतु' शोभनप्रज्ञो भवतु ‡ ॥

मन्त्रं प्रतिपाद्य मनूद्य व्याचष्टे— "धृतव्रतो वै राजेति। धृतव्रतत्वं दर्शयति— "न वा एष इति। 'एष' सुन्वन् 'सर्वस्मै' 'वदनाय' वाक्याय, असम्बद्धप्रलापायेत्यर्थं। तथा असमुपयुक्तकर्मणेऽपि वा योग्यो भवति। कस्मै योग्य इति तदाह— 'यदेवेति। तस्मै साधुवदनाय साधुकर्मणे च 'एष' सुन्वन् राजा, 'श्रोत्रियश्च' ब्राह्मण, उभावर्हौ भवत। एतयो नियतव्रतत्वं माह— "एतौ ह वा इति। 'मनुष्येषु' मध्ये 'एतौ' एव 'धृतव्रतौ' §। श्रोत्रियोऽपि न बहुभाषी नासाधुकर्मकारी। 'पस्त्या' शब्दार्थं माह— "विशो वा इति ॥ ५ ॥

---

* वा० सं० १० २६ ३। अधिनाम इति पाठस्त्वसाधुः।

† का० श्रौ० सू० १५ ७ ४।

‡ वा० सं० १० २७ १।

§ दृढव्रत किञ्चित्पाठो विलुप्त इति मन्यते।

यजमानहस्ते पञ्चाक्षावापं च बिभर्त्ति— "अयाश्च दति *। अक्षा नाम कपर्दिकाः सुवर्णनिर्मिताः, बिभीदकफलानि सौवर्णानि वेत्येके †। ते चाक्षा द्यूतस्थाने निवपनीयाः ‡। तेषां चतुर्णां अक्षाणां 'कृत' सञ्ज्ञा, पञ्चमा (।) 'कलि' सञ्ज्ञा §। तथा च शाखान्तरे स्तोमसङ्ख्यायां कृतादिव्यवहारः कृतः— "ये चत्वारः स्तोमाः कृतं तत्, अथ ये पञ्च कलिः सः"–इति। यदा पञ्चाप्यक्षा उत्ताना ‖ भवन्ति, तदा दीविदुर्जयो भवति, पक्षसु त्वेकरूपासु जय एव भविष्यतीत्यन्यत्रोक्तम्। अतः कलेः सर्वाक्षाभिभावुकत्वात्, द्यूतेऽपि जयापेक्षत्वात् पञ्चाक्षनिवाप इत्यर्थः। तथा च अक्षे कलिर्वा तत्सम्बन्धात् यजमानो वा उच्यते। हे यजमान! 'अभिभूः' इतरेषां अक्षाणां अभिभविता भवसि। तदर्थम् 'एताः पञ्च दिशः कल्पन्ताम्' स्वाधीना भवन्त्विति॥

मन्त्रं व्याचष्टे— "एष वा अयानिति ¶। अयशब्दोऽक्षपर्यायी; 'कलिर्हि सर्वान् अयान् अभिभवति'; अधिकसङ्ख्यत्वात्। एषोऽपि यजमानस्तत्सम्बन्धादभिभावुको भवतीत्यर्थः॥

---

* का॰ श्रौ॰ सू॰ १५ ७. ५।

† 'सौवर्णा वा'—इति क।

‡ तै॰ ब्रा॰ १ ७. १॰ द्रष्टव्यम्। आपस्तम्बश्चाह— "अक्षावापोऽधिदेवन सहस्यवोत्थायान् निवपेत् सौवर्णान् पञ्चाशतान् परःशतान् वा"—इति श्रौ॰ सू॰ १८ १८, १९, १६, १।

§ का॰ श्रौ॰ सू॰ १५. ७. १८, १९।

‖ 'उत्तानाः'—इति च, छ।

¶ वा॰ सं॰ १॰ २८. १।

पञ्चदिग्विजयफलप्राप्तिमेव दर्शयति— 'पञ्च वै दिश इति ॥ ६ ॥

विधत्ते अथैनं मिति। 'दण्डैः' यज्ञियवृक्षकाष्ठैः 'एनं' सुन्वन्तं 'घ्नन्तः' पश्चाद्भागे 'तूष्णीम्' अमन्त्रकं 'घ्नन्ति' हन्युः। अत्र सूत्रम् अस्य समन्त्रकमवहननं शाखान्तरीयमन्त्रेण विकल्पेन दर्शयामास— "पश्चादेनं यज्ञियवृक्षदण्डैः घ्नन्ति. तूष्णीं घ्नन्ति पाप्मानं तेऽपहन्मोऽति त्वा बध नयामीति वा"—इति *। "न दण्डैरिति। सुन्वतो दण्डवधेन पञ्चकर्तृकस्य दण्डवधस्य प्रापण मेव कृतवन्तो भवन्ति, तस्मात् राज्ञोऽदण्ड्यभाव †। यथा राजा स्वापराधकं ‡ प्रजा दण्डयति, एवं स्वयं न दण्ड्य इत्यर्थः ॥ ७ ॥

विधत्ते— "अथ वर मिति। 'वरं' 'वृणीते' याचते, यजमान कर्त्ता। तदेतत् प्रशंसति— "स ह वै अधेति ॥ ८ ॥

कात्यायन— "वरं हुत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः, प्रत्याह त्वं ब्रह्मा सविता वरुण इन्द्रो रुद्र इति, त्वं ब्रह्मासीत्यादिभिः"—इति §। अस्यार्थः— यजमानो वरं हुत्वा ब्रह्मन्निति पद पञ्चकृत्वो वदेत्। तं सुन्वन्तं सवितृवरुणेन्द्ररुद्रवाचकैस्त्वं ब्रह्मासीत्यादिभिश्चतुर्भिर्मन्त्रैरितरः प्रतिवदेत्, पञ्चमामन्त्रणे केवलं त्वं ब्रह्मासीति प्रतिवदेदिति। तदिदं क्रमेण विधत्ते— "स ब्रह्मन्निति। 'प्रथम' पूर्वम्। "प्रथम मिति स्पष्टोऽर्थः ॥

---

* का० श्रौ० सू० १५ ७ ५,६।

† राज्ञोऽदण्ड्यभाव —इति ख। ‡ अपराधः—इति क।

§ का० श्रौ० सू० १५ ७ ७, ८।

प्रथमप्रतिवचनमन्त्रस्याय मर्थः — हे यजमान! 'त्वं ब्रह्मा असि', 'सत्यप्रसवः' यथार्थाभ्यनुज्ञः 'सविता असि' 'इति' * प्रथमामन्त्रयितारं सुन्वन्त ब्रह्मा प्रतिब्रूयात्, सवित्रादिवाचकैः मन्त्रैः प्रतिवचनेन यजमानं तत्तद्देवतात्मकत्वेन ज्ञातवान् भवतीत्यर्थः ॥ (८)

द्वितीयादिषु मन्त्रेषु त्वं ब्रह्मासीति पूर्ववत्। 'सत्यौजाः' सत्यवीर्यः, 'वरुणः' 'असि' †। 'विक्षु' प्रजासु 'ओजः' बलं यस्य, यद्वा विश एवौजो यस्येति 'विशौजाः' तादृशः 'इन्द्रः' 'असि'। देवतापक्षे मरुतो विशः तदात्मकाः, राजपक्षे प्रजाः ‡। 'सुशेवः' सुसुखः 'रुद्रः' 'असि' §। रुद्रस्य सुशेवत्वं प्रशंसति— "तद्वीर्याणीति। ईशानस्य सर्वसुखकरत्वात् पूर्वमन्त्रप्रतिवचनेन यजमाने स्थापितानि वीर्याणि शमयति; वीर्यवत्त्वम् 'एव' रुद्रोऽसि सुशेव इति प्रतिपादनात् ॥ (१०, ११, १२)

यजमानकर्तृकपञ्चमामन्त्रणस्य प्रतिवचने विशेषं दर्शयति— "ब्रह्मंस्त्वेवेति ‖। "त्वं ब्रह्मासीति। ब्रह्मन्नित्यामन्त्रणे। 'त्वं ब्रह्मासि' 'इति' एतावदेव 'अनिरुक्तम्'; यस्य किंचिदपि देवताविशेषस्याप्रतिपादकं वाक्यं प्रतिवदेत्। तत् प्रशंसति— "अपरिमितं मिति। 'निरुक्तम्' निःशेषेण यत् वोच्यं निरुक्तम् 'परिमितम्', तत्पूर्वमन्त्रेषु "सवितासि"-इत्यादिषु ज्ञातम्;

---

* वा० सं० १० २८ १।

†, ‡, § वा० सं० १०. २८ ३, ४, ५।

‖ "आदित्यैवान्यम्"—इति का० श्रौ० सू० १५. ७. ६। 'त्वं ब्रह्मास्यध्वर्यादिरिति ब्रह्मा, अनन्तरं पञ्चमं प्रतिवचनम्, 'आदित्या' ब्रह्मासी त्यादि। अधिक ब्रह्मणा वक्तव्यम्'—इति कर्कविवरणोक्ता।

यद्वानिरुक्तप्रतिवचनेन यजमाने अपरिमितं वीर्यं निहितवान् भवतीति ॥ १३ ॥

विधत्ते— "अथ सुमङ्गलेति *। सुमङ्गलनामान माह्वय बहुकारेतिमन्त्रेण † यजमानं कीर्त्तयेत्। पदत्रयं सम्बुध्यन्तम्। बहु करोतीति बहुकारः। "कर्म्मण्यण्" ‡। श्रेयः करोतीति श्रेयस्कर। "कृञो हेतुताच्छील्यानुलोम्येषु"–इति टः §। भूयो भूयो महत्तरं करोतीति भूयस्करः। "य एव मिति। 'यः' पुरुषो लोके प्रियङ्करनामा 'भवति', स 'मानुष्ये' मानुष्याः 'वाचः' 'कल्याण' सर्वेषा प्रिय मेव 'वदति' ॥

अत्र कात्यायनः उत्तरतन्त्रं सङ्गृह्य दर्शितवान्— "स्फ्य मस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वा इन्द्रस्य वज्र इति, राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातश्चैवं पूर्वः-पूर्व उत्तरस्मै"–इति ‖ ॥ १४ ॥

तदिदं क्रमेण विधत्ते— "अथास्मा इत्यादिना। 'अस्मै' सुन्वते 'स्फ्यं' 'ब्राह्मणः' दद्यात्। हे स्फ्य। 'इन्द्रस्य वज्रोऽसि'। "स्फ्यस्तृतीयं रथस्तृतीयम्"–इतिश्रुतेः ¶। तेन वार्त्रघ्नेन 'मे' मम 'रध्य'। "रध्यतिर्वशगमने" **। मदीयाय

---

* का० श्रौ० सू० १५ ७ १०।
† वा० सं० १०. २८ ६।
‡ पा० सू० ३. २. १।
§ पा० सू० ३. २ २०।
‖ का० श्रौ० सू० १५ ७ ११, १२।
¶ तै० सं ५ २ ६ ४।
** दिव० १० ४ ३। "रध हिंसासंराध्योः"– इति दि० प्र० ८२ धा०।

यजमानाय सर्वं वशीकुरु। यद्वा, 'रथ्या' द्यूतस्थानपरिलेखन-रूपं कार्यं साधयेति * ॥

मन्त्रस्य तात्पर्यं माह— "वध्यो वा इति। अथ मध्ये,— ब्राह्मणो राज्ञे अभ्यरूपस्फ्यप्रदानेन स्वस्मादपि राजानं बल-वत्तरं कृतवान् भवति। तदेवाह— "यो वा इति। 'यः' खलु राजन्यो 'ब्राह्मणात्' हीनबलः, 'सः' 'अमित्रेभ्यः' शत्रुभ्यो बलवत्तरः [ न ] भवति; तस्मात् ब्राह्मणः स्फ्यप्रदानेन शत्रुभ्यो-ऽधिकबलं कृतवान् भवतीत्यर्थः ॥

एवं सूक्तस्यापि योज्यम्। सूतग्रामण्यौसजाता व्याख्याता.† ॥

राजादिषु सजातीयेषु स्फ्यप्रदानं सम्भूय प्रशंसति— "तथ-देव मिति। 'पापवस्यसं' पापिष्ठं यस्मै 'नेवसत्' न भवेत्, किन्तु यथापूर्वं भवेदिति तृष्णा प्रदान मित्यर्थः ॥ १५, १६, १७, १८, १९ ॥

अथ द्यूतस्थानकरणं च सविशेषं समन्त्रकं विधत्ते— "अथ समातयेति। आहवनीयस्योत्तरप्रदेशे स्थापितः स पूर्वाग्निः, तस्मिन् तत्रस्थतम् अधिदीव्यन्त्यस्मिन्निति 'अधिदेवनम्' द्यूतभूमिः, तां शकलस्य पुरोक्षा "सं प्रज्ञया पूर्वया विश्वयेमया"-इत्यनया ‡ 'कुरुत'। अत एव सूत्रम्— "प्रत्तेन स्प्यात, प्रतिप्रस्थाता च पूर्वाग्निवर्धितं शकपुरोक्षा द्यूत-भूमिं कुरुत"-इति §।

चतुर्थकाण्डे द्वितीयेऽध्याये शुक्रामन्थिपदयोरस्तात्प्रभावेन

* ऋ० सं० १० २८ ७।

† पुरस्तात् (प्र०२ ब्रा०५) २६२—२६८ पृ० द्रष्टव्यम्।

‡ वा० सं० ५ ३४ २ भाग।

§ का० श्रौ० सू० १५ ७ ११।

स्रुतयोः पुरोरुग्द्वयं विहितम्; तदर्थस्तु तत्रैव विहित इति नेह पुनर्व्याख्यायते *। शुक्रस्याकृतत्वात् तन्मन्त्रेण द्यूतभूमिकरणाद् यजमानं सभासदं कृतवन्तौ भवतः ॥ २० ॥

"अथ मन्थिन इति †। मन्थिग्रहपुरोरुचा "अयं वेनश्चोदयत् पृश्निगर्भा"—इत्यनया 'विमितं' विमिन्वन्त्यनेनेति विमितं चतुर्द्वारं चतुरस्रं मण्डपं तद् 'विमिमुतः' कुरुतः। "पाद्यो वा इत्यादेरयमर्थः— मन्थिनः पाद्यत्वात् तन्मन्त्रेण विमितकरणात् पाद्यभूताय यजमानाय पाद्यं सम्पादितवन्तौ भवत इत्यर्थः ॥ २१ ॥

अथाधिदेवने हिरण्यनिधानपूर्वकं होमं समन्त्रकं विधत्ते— "अयाडध्वर्युरिति ‡। यज्ञे देवानां प्रथनात् 'पृथुः', सः 'धर्मणस्पतिः' धर्मणः धारणस्य पतिः, अतो देवतोद्देशेन हूयमानं हविः 'जुषाणः' सेवमानः 'अग्निः'। 'पृथुर्धर्मणस्पतिः'—इति पुनर्वचनमादरार्थम्, विध्यनुवादाभिप्रायं वा। 'आज्यस्य' हुतस्य। कर्मणि षष्ठी। आज्यं 'वेतु' पिबतु। "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" §। 'स्वाहा'—इति होमार्थः ॥ २२ ॥

तत्र विमिते अन्ननिवापं समन्त्रकं विधत्ते— "अयाडग्निरिति ¶। 'स्वाहाकृताः' स्वाहाकारपूर्विकया आहुत्या तर्पिताः

---

* 'तयोरन्यतरः, आद्योऽन्यतरः; अनेन शुक्रः, आद्यो मन्थी'—इत्यादि द्रष्टव्यम् (४ का० २ अ० १ ब्रा० १-१०)।

†, ‡ का० श्रौ० सू० १५. ७. १५ क, ख।

§ धातु० पा० ३८ धा०।

‖ वा० सं० १०. २९. १।

¶ का० श्रौ० सू० १५. ७. २६।

आपस्तम्बोऽप्याह— "पञ्चौदनीं विदीव्यन्तः घोदनं सुदुहुवते, तदेतस्य कर्मणः पूर्वाभिवाही दक्षिणा, तौ ब्रह्मणे देयौ" —इति * ॥

यदिदं देवनं सन्निधिबलादभिषेचनीयाख्यसोमयागमध्यगतमपि महाप्रकरणबलात् दशपेयसोमयागाख्यराजसूयाङ्गमेव इति गम्यते, प्रकरणेन सन्निधेर्बाध इति हि सिद्धान्तितम् † ॥ २३ ॥

अथ पञ्चवातीयादिहोमादिकं दर्शयति— "पञ्चवाताय इति। प्रधानसौविष्टकृतहविषोर्मध्ये यद् देवस्वादिकं हवनम्, तत् प्रजापतिमध्यनिधानरूपेण प्रशंसति— "तद् यदन्तरेणेति। "पाथाभ्यामित्यादि, स्पष्टम् ‡ ॥ २४ ॥

"पथेडा मादधातीति, कण्डिका वाजपेये व्याख्याता ॥ २५ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम्. )

त्वष्टुर्ह वा ऽअभिषिषिचानाद्भर्गो ऽपचक्राम। व्वीर्यं वै भर्ग एष व्विष्णुर्यज्ञः सो ऽस्मादपचक्राम

---

* आप० श्रौ० सू० १८ १८ २, ३।

† "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"—इति मी० जै० सू० ३ ३ १४।

‡ सर्वं मिदं तै० सं० १ ८ १६, तै० ब्रा० १ ७ १० द्रष्टव्यम् ॥

यश्चैव एषो ऽपाए रसः सम्भृतो भवति * येनैन मेतदभिषिञ्चति सो ऽस्य भर्गं निर्जघान ॥ १ ॥

स मेताभिर्द्देवताभिरनुसमसर्पत् । सवित्रा प्रसवित्रा सरस्वत्या व्वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा व्वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा व्विष्णुनैव दशम्या देवतयान्वविन्दत् ॥ २ ॥

तद्यदेन मेताभिर्द्देवताभिरनुसमसर्पत् । तस्मात् सप्तृपो नामाथ यद्दशमे ऽहन् प्रसुतो भवति तस्माद्दशमेयोऽथो यद्दश-दशैकैकं चमस मनुप्रसृप्ता भवन्ति तस्मादेव दशपेयः ॥ ३ ॥

तदाहुः । दश पितामहान्त्सोमपान्त्संख्याय प्रसर्पेत्तथो हास्य सोमपीथ मश्नुते दशपेयो हीति तद्वै ज्या ही वौनित्थेव पितामहान्त्सोमपान्विन्दन्ति तस्मादेता एव देवताः सङ्ख्याय प्रसर्पेत् ॥ ४ ॥

एताभिर्वै देवताभिर्व्वरुण † एतस्य सोमपीथ

* 'भवति'—इति क, ख ।

† '०र्व्वरुण । एतस्य—इति क, ख ।

माश्नुत । * तथो ऽएवैष एताभिरेव देवताभि-
रेतस्य सोमपीथ मश्नुते तस्मादेता एव देवताः
सङ्ख्याय प्रसर्पेद्य यद्वैवैषोद्वसानीयेष्टिः सन्तिष्ठत
ऽएतस्याभिषेचनीयस्य † ॥ ५ ॥

अथैतानि हवींष्यपि निर्व्वपति । सावित्रं
द्वादशकपालं वाष्टाकपालं वा पुरोडाशं सविता
वै देवानां प्रसविता सवितृप्रसूत एव तद्दक्षो
ऽनुसमसर्पत्तथो ऽएवैष एतत् सवितृप्रसूत एवानु-
सं॒सर्पति तस्यैकं पुण्डरीकं प्रयच्छति ‡ ॥ ६ ॥

अथ सारस्वतं चरुं निर्व्वपति । वाग्वै
सरस्वती वाचैव तद्दक्षो ऽनुसमसर्पत्तथो ऽए-
वैष एतद्वाचैवानुसंसर्पति तस्यैकं पुण्डरीकं
प्रयच्छति § ॥ ७ ॥

अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्व्वपति ।
त्वष्टा वै रूपाणां मीष्टे त्वष्टैव तद्रूपैर्द्दक्षो ऽनु-

---

* क-ख-पुस्तकयोरिह शेषो नास्ति ।

† °नीयस्य — इति क ।

‡, § प्रयच्छति — इति क ।

समसर्पंस्तथो ऽएवैष एतत्त्वष्ट्रै रूपैरनुसꣳसर्पति तस्मै ह पुण्डरीकं प्रयच्छति * ॥ ८ ॥

अथ पौष्णं चरुं निर्वपति । पशवो वै पूषा पशुभिरेव तदस्यायो ऽनुसमसर्पंस्तथो ऽएवैष एतत् पशुभिरेवानुसꣳसर्पति तस्मै ह पुण्डरीकं प्रयच्छति † ॥ ९ ॥

अथैन्द्रमेकादशकपालं पुरोडाशं निर्वपति । इन्द्रियं वै वीर्यमिन्द्र इन्द्रियेणैव तद्वीर्येण व्यस्यायो ऽनुसमसर्पंस्तथो ऽएवैष एतदिन्द्रियेणैव वीर्येणानुसꣳसर्पति तस्मै ह पुण्डरीकं प्रयच्छति ‡ ॥ १० ॥

अथ बार्हस्पत्यं चरुं निर्वपति । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तदस्यायो ऽनुसमसर्पंस्तथो ऽएवैष एतद् ब्रह्मणैवानुसꣳसर्पति तस्मै ह पुण्डरीकं प्रयच्छति § ॥ ११ ॥

अथ वारुणं यवमयं चरुं निर्वपति । स येनैवौजसेमाः प्रजा वरुणो ऽगृह्णात्तेनैव तदोजसा

---

* † ‡ § प्रयच्छति—इति क ।

ब्रह्मणो ऽनुसमसर्पत्तेनो ऽएवैष तदोजसानुसम्प्र-सर्पति तत्रैकं पुण्डरीकं प्रयच्छति * ॥ १२ ॥

उपसदो दशम्यो देवताः। तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति तां द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते सा दीक्षा तया दीक्षया दीक्षते † ॥ १३ ॥

अथ यद् द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य सर्व्वं वै संवत्सरः सर्व्वेणैवैन मेतद्-दीक्षयति यानि पुण्डरीकाणि तानि दिवो रूपं तानि नक्षत्राणां रूपं ये व्यधकास्ते ऽन्तरिक्षस्य रूपं यानि विसानि तान्यस्यै तदेन मेषु लोके-ष्वधि दीक्षयति ‡ ॥ १४ ॥

अथ राजानं क्रीत्वा। दैधीपनह्य परिवहन्ति ततोऽर्द्धं मासन्द्वा मासाय प्रचरत्यथ य एषो ऽर्द्धं ब्रह्मणो गृहे निहितो भवति त मासन्द्वा

---

* 'प्रयच्छति'—इति क।

† 'दीक्षते'—इति ग, घ।

‡ 'दीक्षयति' इति ग, घ।

मासदातिथ्येन प्रचरति यदातिथ्येन प्रचरत्यथो-
पसद्भिः प्रचरति यदोपसद्भिः प्रचरति * ॥ १५ ॥

अथैतानि हवीᳬषि निर्व्वपति। आग्नेय-
मष्टाकपालं पुरोडाशᳬ सौम्यं चरुं वैष्णवं
त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्टैवं
यजते ॥ १६ ॥

तदु तथा न कुर्यात्। ह्वलति वा एष
यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य उपसत्-
पथादेति तस्मादुपसत्पथादेव नेयात् ॥ १७ ॥

स यदग्निं यजति। अग्निनैवैतत्तेजसानुसᳬ-
सर्पत्यथ यत् सोमं यजति सोमेनैवैतद्ब्राह्मणानुसᳬ-
सर्पत्यथ यद्विष्णुं यजति यज्ञो वै विष्णु-
स्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष मात्मन्
कुरुते ॥ १८ ॥

स एष सप्तदशो ऽग्निष्टोमो भवति। सप्त-
दशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष
माप्नोति तं प्रत्यक्ष मात्मन् कुरुते ॥ १९ ॥

---

* 'प्रचरति'—इति ख, 'प्रचरति'—इति ग।

तस्यै द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा। द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष मात्मन् कुरुते ॥ २० ॥

तासां द्वादश गर्भाः। तास्तच्चतुर्व्विꣳशति-श्चतुर्व्विꣳशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरः प्रजा-पतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष मात्मन् कुरुते ॥ २१ ॥

ता ब्रह्मणे ददाति। ब्रह्मा हि यज्ञं दक्षि-णतो ऽभिगोपायति तस्मात्ता ब्रह्मणे ददाति हिरण्मयीꣳ स्रज मुद्गात्रे रुक्मꣳ होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्या मश्वं प्रस्तोत्रे वशां मैत्रावरु-णाय ऽर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टा-पोतृभ्या मन्यतरतोयुक्तं यवाचित मच्छावाकाय गा मग्नीधे ॥ २२ ॥

ता वा ऽएताः*। द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा

---

* 'ऽएना,'—इति क, ख।

यदा, "सविता प्रसविता सरस्वत्या वाचा"-इति * संहितोक्त-मन्त्रेण प्रसर्पणं कुर्यादिति ॥

अथ पितामहवचनेन प्रसर्पणं पूर्वपक्षयति— "तदाहुरिति । तद् दूषयति— "तद् वै न्येति । 'न्या' न्यानि:, निकृष्ट इत्यर्थः । अत्रोपपत्तिमाह— "द्वौ वीनिति । यदि पितामहान् जानीयुः, तर्हि 'द्वौ वीन् एव' जानीयुः, न सर्वान्, तस्मात् सवित्रादि-दशदेवताः संस्मृत्य प्रसर्पणं कुर्यादित्यर्थः ॥ ४ ॥

तदिदं प्रदक्षसाम्नेन प्रशंसति— "एताभिर्वा इति । संसृप्शब्दवाच्यहविर्निर्वापकालं दर्शयति— "अथ यदैवेति । 'अभिषेचनीयस्य' एतदाख्यस्य सोमयागस्य 'उदवसानीयेष्टिः' 'यदा' 'सन्तिष्ठते' समाप्यते— ॥ ५ ॥

"अथैतानीति । 'अथ' तदनन्तरम् 'एतानि हवींषि' निर्वपेदित्यर्थः । तमर्थमाह कात्यायनेन सङ्गृहीतम्— "सावित्र सारस्वत त्वाष्ट्र पौष्णैन्द्र बार्हस्पत्य वारुणाग्नेय सौम्य वैष्णवानि यथोक्तं प्रतीचि पुण्डरीकाणि प्रयच्छति, हिरण्मयानि वीतमात्र तिसृषु पञ्च दैवाः स्रज प्रतिमुञ्चति तदीयो भवति"-इति † । तस्या अग्न्या-गारात् सोमं प्राहुत्यायन्त्यभिमर्शनादि करोत्युपसद्देवता हवींषि निर्वपत्युपसद ॥ इत्यहमिति । तस्मात् दशसङ्ख्याकानां हविषां मध्ये सप्त हवींषि पूर्वं लिखितक्रमेण कृत्वा, सप्त हिरण्मय पुण्डरीकाणि दत्त्वा, ततस्तिसृषु पञ्च दत्त्वा, द्वादश पुण्डरीकस्रक्प्रतिमोकदक्षिणा दशपेयदीक्षां कृत्वा, ततस्या सप्तपुरागसम्बन्धिन्या सप्तमदिने क्रियमाणाया नारुक्ता मिष्टा

* वा० सं० १० । ३० । १ ।

† का० श्रौ० सू० १५ । ८ । १—५ ।

यतीतायां पूर्वं मेषाभिषेचनीयदशपेययोरपि द्विधा सोमं क्रीत्वा, दशपेयार्थम् ब्रह्मागारे स्थापितं सोमम् आहृत्य, आसन्द्यभिमर्शनाद्यातिथ्यान्तं कृत्वा, संसृपां हविषां मध्ये आद्यानि आग्नेयसौम्यवैष्णवानि त्रीणि हवींषि उपसत्स्थानिनिधिधर्मेण कर्त्तव्यानि। उपसदां अप्यग्निसोमविष्णुदेवता अस्तिमत्वात्, तथाप्यग्निषोमयोरेकस्याप्यभावे दशसङ्ख्यापूरणाभावात् तयोरपि दशमत्वमुच्यते। 'नव' तिसृषु देवतासु तद्देवत्यहविःषु 'नव पुण्डरीकाणि' देयानि भवन्ति * ॥

अथ द्वादशपेयस्य दीक्षां विधत्ते— "तां द्वादशीति। दशानि सम्, अन्तिमहविर्द्वये दाक्षमानानि पञ्चेति द्वादश पुण्डरीकाणि भवन्ति। प्रकृतौ "अप्सु स्नात्वापो ध्यानि"–इत्यादिना यद् दीक्षामात्रं विहितम्, तदत्रापवदितुं दशदाक्षमानपुण्डरीकस्रक्प्रतिमोको विहितः। एतत्तु पूर्वं मुदाहृतम्। आपस्तम्बेन तु विशेष उक्तः— "अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते"–इति †। प्रतिमोचयेदित्यर्थः ॥ ६—१२ ॥

पुण्डरीकगतां सङ्ख्यां सम्भूय मासात्मकसंवत्सरात्मना प्रशंसति— "अथ यद् द्वादशीति ‡। एतत्सावयवसङ्ख्याविशिष्टपौण्डरीकदीक्षाकरणेन सर्वात्मसंवत्सरेण यजमानं दीक्षायुक्तं कृतवान् भवति। प्रकारान्तरेण प्रशंसति— "धामेति। पञ्चवतपदमात्रविज्ञाना स्वर्गान्तरिक्षभूम्याख्यलोकत्रयात्मकत्वात् तत्प्रतिमोकलक्षणदीक्षाकरणेन 'एनं' यजमानम् 'एषु' त्रिषु 'लोकेषु' दीक्षितवान् भवतीत्यर्थः ॥ १३ ॥

---

* 'भवन्तीत्येतत्'—इति च, छ।

† आप० श्रौ० सू० १८ १० १४। ‡ का० श्रौ० सू० १५- ४ ११।

"अथ राजानं क्रीत्वेत्यादेरय मर्थः— पूर्वं अभिषेचनीय-दीक्षान्ते 'राजानं क्रीत्वा' *, 'द्वेधोपनह्य', तत्रैकं दशपेयार्थं पर्युह्य ब्रह्मागारे स्थापयित्वा, एकेनाभिषेचनीये प्रचारः कृतः; अथ दशपेये ब्रह्मगृहे स्थापितं तं सोम माहृत्य, 'आवभ्या मासाद्य', आसिव्यया प्रचरेयुः; तदनन्तर मुपसदाम्। तत्राग्निसोम-विष्णुदेवताकोपसत्प्रतिनिधित्वेन संवत्सरसम्बन्धिना सुत्यानां क्रयाणा माग्नेयसौम्यवैष्णवाना मेव निर्वापं पूर्वपक्षयति— "यज्ञोपसद्भिः प्रचरतीति ॥ १५ ॥

"अथैतानि हवींषि निर्वपत्याग्नेय मिति। "तेन यदेष्टेऽति। एकैकोपसत्स्थाने 'तेन' एकेन हविषा 'यदेष्ट्वा' इष्टिमेव कुर्यात्। उपसच्चर्यार्थं मेतच्चविधानं कर्त्तव्य मिति माध्यन्दिनीयः पक्षः † ॥ १६ ॥

तं मतं निराकरोति— "तदु तथेति। 'तत्' तथा 'न कुर्यात्'। 'एषः क्रमति वै' प्रच्युतो भवेत्। एतच्छब्दार्थ माह— "यो यज्ञपथादेतीति। 'एति' अपगच्छति। तदेव पुनर्दर्शयति— "एति वा एष इति। तस्मात् 'उपसत्पथात्' 'नेयात्' न प्रच्युतो भवेत्, अत उपसदो न पृथक् कुर्यात्। तदन्ते एतानि संवत्सर मभिमतानि हवींषि त्रीणि चेष्टिन्येव पृथक् कुर्यात्। अतएव सूत्रकार उपसद्यागान्ते एतेषां निर्वापं विकल्पेन दर्शयामास— "उपसदन्त इष्टयः"—इति ‡ ॥ १७ ॥

---

* 'दशभिर्वत्सतरैः साण्डैः सोमं क्रीणाति, * यत्तैर्न परिगृह्णाति, तत्य मेवापाकरोति'—इति आप० श्रौ० सू० १८ २० १५, १६, १७।
† 'एका दीक्षा, तिस्र उपसदः'—इति आप० श्रौ० सू० १८ २०. १८।
‡ का० श्रौ० सू० १५ ८ २५।

तदुपसद्देवताहविषा माग्नेयसौम्यवैष्णवानां सद्यस्कानां हविषा मग्निर्वापि तदेतत्पक्षपंचस्यासिषि नामाग्नेयं निरस्यति— "स यदग्निमिति। उपसद्याग्नेरेव अग्निषोमविषय इष्टा , तदानीमेव नै मसर्पंच जात मिति ॥ १८ ॥

दशपेयस्य सोमसंस्थारूपं विधत्ते— "स एष सप्तदश इति। 'स एष' दशपेय क्रतु सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थो भवतीत्यर्थः। "सप्तदश स्तोम भवति"-इति हि तैत्तिरीयकम् ॥ १९ ॥

गर्भिणीनां गवां दानं विधत्ते— "तस्य द्वादशेति *। ता द्वादशसङ्ख्याका गा गर्भिणी दद्यादित्यनुषङ्गेण ( २२ क० ) सम्बन्धः। सङ्ख्या सम्भूय संवत्सरात्मना स्तौति— "द्वादश वै मासा इति ॥ २० ॥

प्रकारान्तरेणापि प्रशंसति— "मासा द्वादश गर्भा इति। ता गावो द्वादश तासां गर्भा अपि द्वादश, मिलित्वा चतुर्विंशति , संवत्सरस्यापि चतुर्विंशतिरर्धमासा , तस्मात् संवत्सरात्मत्वेन ता वत्सगर्भा गाव प्रशस्ता इत्यर्थः ॥ २१ ॥

द्वाभ्यां प्रत्येकं पात्र्याप्रदानं विधत्ते— "हिरण्मयाविति। प्राकाशौ दीपस्थापनाविशेषे, सुवर्णदर्पणाविव्यपरे *। अश्वदानं विधत्ते— "अश्व प्रष्ठौह इति। वन्ध्याया गोर्दानं विधत्ते— "वशा मिति †। रेतःसेचनसमर्थस्य गोर्दानं विधत्ते— "ऋषभ मिति। द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते— "वाससी इति। एकेनानडुहा युक्तस्य यवपूर्णस्य शकटस्य दानं विधत्ते— "यव तरत इति। अनडुहो दानं विधत्ते— "गा मनीष इति। "अन डुह मनीषे"-इति हि सूत्रितम् ‡। 'अनडुह मनीषे वह्निर्वा अनड्वान्"-इति हि तैत्तिरीयकम् § ॥ २२ ॥

ता एता दक्षिणा सम्भूय संवत्सरात्मना प्रशंसति— "ता वा एता द्वादशेति। पष्ठौह्यादयोऽनडुदन्ता द्वादश दक्षिणा, वाल गर्भिणीनां गवां दक्षिणात्वात् वालगर्भिणीना अपि दक्षिणात्वेन परिगणने त्रयोदश भवन्ति, संवत्सरस्यापि द्वादश चैत्रादय, अधिकमासेन सह त्रयोदश मासा भवन्ति। तस्मादेताभिर्दक्षिणाभि र्यजमानः संवत्सर मेवाप्तवान् भवतीत्यर्थः ॥ २३ ॥ २ [४ ५] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥

---

* 'दर्शवेश्मकाचित्यपरे'—इति का० श्रौ० १५ ८ २५ सू० वृ० ।

† का० श्रौ० सू० १५ ८ १८ सू । 'वशा वन्ध्या या उपगम्य मात्रापि गर्भं न गृह्णाति'—इति वृ० ।

‡ का० पैप्पलर्तादिकसूत्रपुस्तके तु 'गा मनीधे'—इत्येव पाठो दिव्यते । का० श्रौ० सू० १५ ८ २७ ष । § तै० ब्रा० १ ८ १ ५ ।

|| 'सद्यो दीक्षयन्ति, सद्यः सोमं क्रीणन्ति पुण्डरीकस्रजं प्रय

( अथ पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् . )

आग्नेयो ऽष्टाकपालः पुरोडाशो भवति । तं पूर्व्वार्द्धे ऽआसादयत्यैन्द्र एकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्द्धे ऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्द्धे ऽआसादयति मैत्रावरुणी पयस्या भवति ता मुत्तरार्द्धे ऽआसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य ऽआसादयत्येष चरुः पञ्चबिलस्तद्यत् पञ्च हवीꣳषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम ॥ १ ॥

तद्यदेतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति यदृतून् यत्स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत् प्र वा पतेत् तस्माद्वा ऽएतेन राजसूययाजी यजते ॥ २ ॥

स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यदेवैनं प्राचीं दिशमारोहयति

यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतैन निष्क्रीणाति सꣳस्रवं वार्हस्पत्ये चरावव-नयति * ॥ ३ ॥

अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रच-रति। सौम्येन वा चरुणा यद्देवैनं दक्षिणां दिशꣳ समारोहयति यद्दतून्यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतैन निष्क्रीणाति सꣳस्रवं वार्ह-स्पत्ये चरावनयति † ॥ ४ ॥

अथ यद्वैश्वदेवेन चरुणा प्रचरति। यद्दे-वैनं प्रतीचीं दिशꣳ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतैन निष्क्रीणाति सꣳस्रव वार्हस्पत्ये चरावनयति ‡ ॥ ५ ॥

अथ यन्मैत्रावरुण्या पयस्यया प्रचरति। यद्दे-वैन मुदीचीं दिशꣳ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतैन निष्क्री-णाति सꣳस्रव वार्हस्पत्ये चराववनयति तद्यत् सꣳस्रवान् वार्हस्पत्ये चराववनयति सर्व्वत एवा-

---

*, †, ‡ '॰ववनयति'—इति क।

स्मिन्नेतदन्नाद्यं दधाति तस्माद् दिशो दिश एव राज्ञे ऽन्नाद्य समभिह्रियते * ॥ ६ ॥

अथ यद् बार्हस्पत्येन चरुणा प्रचरति । यदेवैन मूर्ध्ना दिशए समारोहयति यदतून् यत् लोमान्यत्यस्थाएसि तस्यादेवैन मेतेन निष्क्रीणाति ॥ ७ ॥

स य एष आग्नेयो ऽष्टाकपालः पुरोडाशो भवति । तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्वा ऽएष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति † ॥ ८ ॥

अथ य एष ऐन्द्र ‡ एकादशकपालः पुरोडाशो भवति । तस्य ऽर्षभो दक्षिणा स हैन्द्रो यदृषभो यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुस्तं ब्रह्मणे ददाति

---

* '०ह्रियते'—इति क ।
† 'ददाति'—इति ख ।
‡ "ऐन्द्र । एका०'—इति क, ख ।

ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति * ॥ ९ ॥

अथ य एष वैश्वदेवश्चरुर्भवति । तस्य पृषन् गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत् पृषतो गोर्विश्वो वै विश्वे देवा भूमा वै विश्वं तस्मात् पृषन् गौर्दक्षिणा तं होत्रे ददाति होता हि भूमा तस्मात्तं होत्रे ददाति † ॥ १० ॥

अथ येषा मैत्रावरुणी पयस्या भवति । तस्यै वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि वशां न विन्देदपि यैव का चाप्रवीता स्यात् सर्व्वा ह्येव वशाप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वा ऽअध्वर्यू प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति ‡ ॥ ११ ॥

अथ य एष बार्हस्पत्यश्चरुर्भवति । तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऽऊर्द्ध्वा बृहस्पतेर्दिक् तदेष उपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै

* । † * ददाति—इति क ।

देवानां ब्रह्मैष वा ऽएतस्य ब्रह्मा भवति तस्मात्तु ब्रह्मणे ददाति स हैतेनापि विद्यावान्यन्नाद्य-कामो यजेत तदस्मिन्त्सर्वतो ऽन्नाद्यं दधाति * स ह्यन्नाद एव भवति ॥ १२ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [५. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ पञ्चमाध्याये पञ्चबिलसञ्ज्ञकचरुः †, द्वादश प्रयुजा हवींषि, पशुद्वयम्, केशवपनीयातिरात्र, सौत्रामणीप्रयोग, राजसूयसमाप्त्युदवसानीयेष्टिश्च विधीयते ।

अत्र कात्यायनः — "उत्तरे युक्ते पञ्चबिल आग्नेय ऐन्द्र सौम्यो वा वैश्वदेवश्च पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः प्रतिदिशं सादनं साग्नेय पुरस्तात् प्रदक्षिणम् इतराणि मध्येऽन्त्यम्"—इति ‡। आग्नेयादीनि पञ्च हवींषि पूर्वादिक्रमेण मध्ये च स्थापयेत् । सोऽयं पञ्चबिलसञ्ज्ञकचरुरित्यर्थः ॥

---

* ददाति—इति ख ।

† एषैव दिशामवेष्टिरुच्यते । तथाहि तै० ब्रा० १ ८ ३— 'दिशामवेष्टयो भवन्ति'—इत्यादि द्रष्टव्यम् ।

‡ का० श्रौ० सू० १५ ९ १ २ ३ । व्याख्यातमिति वैश्वदेवसूक्ते—इति सर्वासु दिक्षु निमन्त्रकैस्थानादन भवति—इति च तत्र सू० ।

तदिदं विधत्ते— "धामेव मिति। वेदिमध्ये 'पूर्वार्धे' पूर्वभागे धासादयेत्। एवमुत्तरत्र 'दक्षिणार्धे' इति योज्यम्। 'पयस्या' आमिक्षा ॥

हविःपञ्चकस्य पञ्चबिलसंज्ञां निर्वक्ति— "तद्यदिति। एतेषां हविषां सादनार्थानि एकस्यां पात्र्यां प्रागादिक्रमेण यतः पञ्च बिलानि, तस्मादेषां यागपञ्चकस्य पञ्चबिलश्चरुरिति संज्ञा ॥ १ ॥

एतेषां हविषां करणे प्रयोजनमाह— "तद्यदेतेनेति। 'एतेन' हविःपञ्चकेन राजसूययाजिना यष्टव्यम्। कुतः ? यतः पूर्वम् 'एनं' यजमानं प्राचीमारोहेत्यादिभिर्मन्त्रैः प्राच्याद्याः पञ्च दिशः, वसन्तादीनृतून्, त्रिवृदादीन्स्तोमान्, गायत्र्यादीनि छन्दांसि चाध्वर्युरारोहितवान्, 'तस्माद्' 'एतेन' हविःपञ्चकेन 'एनं' यजमानं दिगादिभ्यः सकाशात् पुनः 'निष्क्रीणाति' स्वाधीनं कृतवान् भवति।

व्यतिरेके प्रत्यवायमाह— "स यदीति। यदि न यजेत तर्हि यजमानः 'उन्माद्येत्' उन्मत्तो भवेत्, 'प्रपतेत्' प्रच्युतो भवेत्। 'वा'-शब्दद्वयं समुच्चयविकल्पार्थम् ॥ २ ॥

हविषां क्रमेण निष्क्रयणसाधनत्वं विशदयति— "स यदाग्नेयेनेत्यादि ॥ प्रत्येकहविःप्रचारानन्तरम् बार्हस्पत्ये चरौ संस्रवानयनं विधत्ते— "संस्रव मिति। सूत्रञ्च भवति— "पूर्वं-पूर्वं चरित्वा-चरित्वा मध्यमे संस्रवावसेचनम्"-इति*। 'मध्ये' मध्यमप्रदेशे स्थापिते बार्हस्पत्ये चरावित्यर्थः ॥ ३ ॥ ॥ ४, ५ ॥

* का० श्रौ० सू० १५ ६. ३।

"अथ यत्रैवावसृष्टेति। चतुर्णां हविषां संस्रवस्य बार्हस्पत्ये चरौ अवनयनं सम्भूयायाजसम्पादनरूपेण प्रशंसति— "तद् यत् संस्रवानिति। यतो 'बार्हस्पत्ये चरौ' सर्वेषां हविषां हुत-शिष्टस्यावनयनम्, 'तस्मात्' 'राज्ञे' 'दिशो दिशः' सर्वस्या अपि दिशः सकाशात् 'बलाद्यम्' 'अभिह्रियते' आनीयत इत्यर्थः ॥ ६ ॥

"अथ यद् बार्हस्पत्येनेत्यादि। पूर्ववत्। अत्र संस्रवा-नयनाभावो विशेषः ॥ ७ ॥

आग्नेयादिहविषां ऋत्विग्विशेषेभ्यो हिरण्यादि-दक्षिणादानं विधत्ते— "स य एष इति। आग्नेयहविषः, तद्दक्षिणात्वेन विहितस्य हिरण्यस्य च अग्निसम्बन्धित्वं समानो धर्मः। हिरण्य-स्याग्निरेतस्त्वं श्रूयते— "तस्य रेतः परापतत्, तद्धिरण्यमभवत्"*। अग्नेरेवाग्नीध्रत्वं प्रथमकाण्डे स्फ्यमुद्धरणवाक्येऽपि स्पष्टमाम्ना-तम्†। 'निदानेन' कारणेन, निरूपणे सतीत्यर्थः। हविष आग्नेयत्वात्, हिरण्यस्याग्निरेतस्त्वात्, अग्नेरेवाग्नीध्रत्वात्, आग्नीध्रसम्प्रदानकत्वं हिरण्यस्य युक्तमित्यर्थः‡ ॥ एवमुत्तर-त्रापि यथायोग्यं साम्यं द्रष्टव्यम् ॥ ८ ॥

"अथ य एष ऐन्द्र इति§। "तस्यर्षभ इत्यादि। ऋषभ-

---

* तै० ब्रा० १। १। ३। ८।

† "स योऽस्मादग्नेरुदहरत् पर्येति, अग्निरेवैष निदानेन"-इति १. २. १३ (१भा० पृ०१३६) द्रष्टव्यम्।

‡ का० श्रौ० सू० १५। ९। ५।

§ का० श्रौ० सू० १५। ९। ६। 'मधुर्धूम्रवर्णः'-इति ह०।

स्यैन्द्रत्वम्, वैकृतत्वसाम्यात्। बभ्रोः सोमसम्बन्धित्वम्, "सौम्य बभ्रु मालभेत"—इतिश्रुतेरवगतम् * ॥ ९ ॥

"अथ स एव वैश्वदेव इति। 'पृषत्' बिन्दुयुक्तः, चित्रवर्ण इत्यर्थः। तस्य वैश्वदेवत्वमुपपादयति— "भूमा वा इति। भूमरूपत्वम्, नानाच्छन्दस्के बहुविधमन्त्रे शंसनादवगम्यते † ॥ १० ॥

"अथ यैषा मेषावकर्षीति। 'वशा' वन्ध्या। तदभावे 'अपवीता' वैते प्रजननशार्थात् निवृत्ता। 'अप्रजाता' अगृहीतगर्भेत्यर्थः ‡ ॥ ११ ॥

"अथ य एष बार्हस्पत्य इति। 'शितिपृष्ठः' श्वेतपृष्ठः। बार्हस्पत्यत्वं श्वेतपृष्ठस्य गौर्दक्षिणात्वमुपपादयति— "एषा वा ऊर्ध्वेति। "ऊर्ध्वा दिक् बृहस्पतिर्देवता"—इति श्रुतेः ऊर्ध्वा दिक् बार्हस्पत्या। 'उपरिष्टात्' उपरिभागे 'सूर्यस्य' सूर्यस्य 'पन्थाः' मार्गः, 'तस्मात्' उपरिभागे श्वेतत्वसाम्यात्, तादृशो गौर्दक्षिणात्वेन युज्यत इत्यर्थः § ॥

अथैतस्य हविःपञ्चकस्य फलाकाराय राजसूयाद् बहिः प्रयोगं दर्शयति— "स हैतेनापीति। 'विशामाज्यम्' एकत्र सन्निविष्ट इतस्ततः पर्यटनमकुर्वन् यथाध्यक्षमेकत्र स्थित्वैव सर्वदा मेऽन्नं स्यादिति कामयमान इत्यर्थः ¶। प्रथमे-

* तै० सं० २ १ ३ १० ।
† का० श्रौ० सू० १५ ८. ७ ।
‡ का० श्रौ० सू० १५ ८ ८। अपवीता मप्रसूतीति;—इति द०।
§ का० श्रौ० सू० १५ ८ ९ ।
¶ पूर्वोक्तमेव— का० श्रौ० सू० १५ ८. १० ।

ऽपि एतेन हवि पञ्चकेन यजन कुर्यात्। तत् प्रशंसति—
"तदग्निरिति *॥ १२ ॥ ३ [ ५. १ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीय ब्राह्मणम् )

स वै प्रयुजाᳬ हविर्भिर्यजते। यद्यत् प्रयुजाᳬ हविर्भिर्यजत ऽऋतून् वा ऽएतत् सुयुवायो युङ्क्ते त ऽएन ऋतवो युक्ता वहन्त्यृतून् वा प्रयुक्ताननुचरति तस्मात् प्रयुजाᳬ हविर्भिर्यजते ॥ १ ॥

तानि वै द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासि मासि यजेतेत्याहुः को व्वेद मनुष्यस्य तस्मान्मासि मासि यजेत शम्यापराव्याधे शम्यापराव्याध ऽएव षड्भिर्यजते प्राङ् यात्यथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याध ऽएव षड्भिर्यजते ॥ २ ॥

---

* एष पञ्चबिल तै० सं० १ ८ १८, तै० ब्रा० १ ८ २ इत्यत्र ।

तदु तथा न कुर्यात्। षडेवैतानि पूर्वाणि हवींषि निर्वपति समानबर्हींषि तासां देवतानाᳬ रूपं यथा शिशिरे युक्त्वा प्राञ्च आप्रावृषं यायुस्तत् षडृतून्युङ्क्ते त एनᳬ षडृतवो युक्ताः प्राञ्च आप्रावृषं वहन्ति षडृतून् प्रयुक्तानाप्रावृष मनुचरति पूर्व्वाग्निवाहौ दक्षिणा ॥ ३ ॥

षडेवोत्तराणि हवींषि निर्वपति। समानबर्हींषि तासां देवतानाᳬ रूपं यथा पुनरावर्त्तेरन्वार्षिक मभि तत् षडृतून्युङ्क्ते त एनᳬ षडृतवो युक्ता वार्षिक मभि वहन्ति षडृतून् प्रयुक्तान्वार्षिक मनुचरति पूर्व्वाग्निव्वाहौ दौ दक्षिणा तद्यत् पूर्वाग्निवाहौ दक्षिणऽर्तून्वा एतत् सुप्रयाणो युङ्क्ते वहन्ति वा अनडाहस्तस्मात् पूर्व्वाग्निवाहौ दक्षिणा ॥ ४ ॥

तद्ध स्मैतत् पुरा कुरुपञ्चाला आहुः। ऋतवो वा अस्मान् युक्ता व्वहन्त्वृतून्वा प्रयुक्ताननुचराम इति यदेषाᳬ राजानो राजसूययाजिन आसुस्तद्ध स्म तदभ्याहुः ॥ ५ ॥

आग्नेयो ऽष्टाकपालः पुरोडाशो भवति। सौम्यश्चरुः सावित्रो द्वादशकपालो ऽष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडाशो वैश्वानरो द्वादशकपाल एतानि षट् पूर्व्वाणि हवींषि भवन्ति ॥ ६ ॥

एकैकोत्तरे चरवः। सारस्वतश्चरुः पौष्णश्चरु-र्मैत्रश्चरुः क्षैत्रपत्यश्चरुर्व्वारुणश्चरुरादित्यश्चरुरेत ऽउ एकुत्तरे चरवः* ॥ ७ ॥

अथ श्येनीं त्रिविचगर्भा मदित्या ऽआलभते। तस्या एषैवावृदाष्टापदी व्वशाया ऽइयं वा ऽअदितिरस्या एवैन मेतद् गर्भं करोति तस्या एता-दृश्येव श्येनी त्रिविचिगर्भा दक्षिणा † ॥ ८ ॥

अथ पृषतीं त्रिविचगर्भां मरुद्भ्य आलभते। तस्या एषैवावृद्विशो वै मरुतो व्विश एवैन मेतद् गर्भं करोति तस्या एतादृश्येव पृषती त्रिविचि-गर्भा दक्षिणा ॥ ९ ॥

---

* 'चरव'—इति क।

† दक्षिणा—इति ख, ग।

एतौ पशुबन्धौ *। तदेतावेव सन्तावन्यथैवालभन्ते या मदित्या ऽआलभन्त ऽआदित्येभ्यस्ता मालभन्ते सर्व्वं वा ऽआदित्याः सर्व्वस्यैवैन मेतद् गर्भं करोति यां मरुद्भ्य आलभन्ते विश्वेभ्यस्तां देवेभ्य आलभन्ते सर्व्वं वै विश्वे देवाः सर्व्वस्यै- वैन मेतद् गर्भं करोति ॥ १० ॥ ४ ॥

॥ इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् [प्र. २.] ॥

द्वितीयं प्रयुजां हवींषि विधीयन्ते। कात्यायनः— "द्वादशोत्तराणि प्रयुग्घवींषि मासान्तराण्याहवनीयाद्वा पुरस्तात्षण्मासान् प्राग्- अभ्यासम् आग्नेय सौम्य सावित्र बार्हस्पत्य त्वाष्ट्र वैश्वानरा यथोक्त मेव मेव प्रत्याहृत्य पश्च. सारस्वत पौष्ण मैत्र क्षैत्रपत्य- वारुणादित्याः षट् षट्कैकतन्त्रे पूर्वाग्निवाहौ द्वौ द्वौ षष्ठौ षष्ठौ दक्षिणा"–इति †। अथ अर्थः — द्वादशाग्नेयादीनि प्रयुजां हवींषि आहवनीयात् पूर्वदेशे एकैकमासान्तराले एकैकस्मिन् मासि एकैकं हविरिति क्रमेण षट् षड्मासानि, तथा प्रत्याहृत्य तेष्वेव स्थानेषु क्रमेण षट् षड्मासानि। यद्वा, षट्क षट्क मेकीकृत्य एकतन्त्रेण कुर्यात्। तेषां पूर्वाग्निवाहकौ द्वौ द्वौ अनड्वाहौ दक्षिणेति ॥

---

* 'पशुबन्धौ'–इति ग।

† का॰ श्रौ॰ सू॰ १५ ८ ११–१६।

तदिदं विधत्ते— 'स वै प्रयुजा मिति । विधिं प्रशंसति— "ऋतून् वा इति । एष 'सुघुवाण' यष्टा 'ऋतून्' साक्षादेव 'प्रयुङ्क्ते' कर्मणि योजयति । 'ऋतव' अपि 'एनं' 'युक्ता' सन्तो 'वहन्ति' प्रापयन्तीष्टं फलम् । इदानीं मनुष्यानपि प्रयुजान् 'ऋतून्' 'अनु' लक्ष्य चरति अनुसरति, तस्सन्तु [ करण ] जनित फलं प्राप्नुयाम । तस्मात् प्रयुजा हविर्याग कर्त्तव्य । तथाच तैत्तिरीयके— 'मासि मासि एतानि हवींषि निरूप्याणीत्याहु , तेनैवर्तून् प्रयुङ्क्त इति"–इति * ॥ १ ॥

तेषां सङ्ख्या विधत्ते— 'तानि वै द्वादशेति । तेषां प्रति मास यजन पूर्वपक्षत्वेनोपन्यस्यति— "मासि मासीति । त पक्ष निराकरोति— 'को वेदेति । मनुष्यस्यायु परिमाणस्या यगन्तु मशक्यत्वात् मासि मासि यजनं न कर्त्तव्य मित्यर्थः ॥

यदि षट्कस्यैकीकरण याजकरणेऽपि कश्चिद् विशेष पूर्व पक्षत्वेनोपन्यस्यति— "शम्यापराव्याध इति । शम्यापरास्ता विध्यति निपतति यस्मिंति स शम्यापराव्याधो देश । तत्र देशे पूर्व 'षडभि' 'प्राङ' प्राप्नुयो 'यात्' गच्छन् यजेत । प्राङ्गमनीयात् पूर्वदेशे एकैकशम्यापाते षट् कर्त्तव्यानीत्यर्थ । "अथ पुन रिति । पुनरावृत्तेन एकैकशम्यापातप्रदेशे अपराणि षट् कर्त्तव्यानीति ॥ २ ॥

तम् पक्ष निराकृत्य पक्षान्तर विधत्ते— "तदु तथेति । 'पूर्वाणि षट हवींषि' समानबर्हींषि', बर्हि शब्दश्लोप लक्षक , एकतन्त्राणि कर्त्तव्यानीत्यर्थ । पूर्वहवि षट्कदेवता प्रशंसति— तासां देवताना मिति । 'तासा' पूर्वहवि षट्कास्य

---

* तै० ब्रा० १ ८ ४ ३ ।

देवतानाम् अग्निषोमादीनां यथां रूप मेतत् । 'यथा' 'शिशिरे' ऋतौ 'युक्ता' युञ्जानाः राजानः 'प्राञ्चः' सन्तः 'आप्रावृषं' प्रावृट्कालपर्यन्तं 'यायुः' गच्छेयुः । तदिदं प्राङ्मुखं यानं पूर्वपूर्वमासावादिषु षट्स्थाना मध्यादिदेवतानां सम्बन्धि रूप मित्यर्थः । ऋतूनां पूर्वापि षड्विधि प्रसूत तैत्तिरीयके शिशिरा-दिषु षट्सु मासेषु राजभेदेन प्राङ्मुखा यात्रा प्रतिमासं व्यापार-भेदश्च स्पष्ट माम्नातः— "आग्नेय मष्टाकपालं निर्वपति, तस्मा-च्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति । सौम्यं चरुं, तस्माद् वसन्ते व्यवसायादयन्ति । सावित्रं द्वादशकपालं, तस्मात् पुर-स्ताद् यवानां सविता विरुन्धते । बार्हस्पत्यं चरुं, सवितैव विरुध्य ब्राह्मणा यवानादधते । त्वाष्ट्र मष्टाकपालं रूपा-ण्येव तेन कुर्वते । वैश्वानरं द्वादशकपालं, तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति"–इति * । तदनेन पूर्वहविः-षट्केन षड्ऋतुमासानिव युङ्क्ते । 'ऋतु'–शब्दो मासपरः ; "मास-मितास्तत्"–इतिव्यवहारात् † । यद्वा, "षड्वा वै मासाः" –इति पक्षाणां मासत्वव्यवहारात् षडृतवात्मका ऋतुरित्यर्थः ॥

पूर्वषट्कस्य दक्षिणां विधत्ते— "पूर्वाग्नीति । पूर्वाग्नि माधवनीयं वहतीति पूर्वाग्निवाहोऽनड्वाहः । तेषां मध्ये द्वौ दक्षिणात्वेन देयावित्यर्थः ॥ २ ॥

उत्तरहविःषट्कस्यापि समानत्वं दर्शयति— "षडु-त्तराणीति । तानि प्रशंसति— "ताभ्यां देवतानां मिति । 'वार्षिक मधि' वर्षर्तुसम्बन्धिनं प्रथमं मास मभिलक्ष्य पुन-

---

* तै० ब्रा० १.८.४.१,२ ।

† "अथ च मासश्च साम्मितावाहुः"–इति ता० ब्रा० १०.१५.२ ।

रावसैरन्। शिशिरे दिग्विजयाय प्राच्चः प्रयाताः कुरुपञ्चालादयो निदाघर्त्तुद्वितीयमासे परकीयं राष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यागत्य निवर्त्तन्ते। तत् 'एतम्' संवत्सरादिदेवतानां प्रतिनिधित्वात् यज्ञक्रतूनां रूप मित्यर्थः। "तत् षड्तूनिति। 'तत्' तेन उत्तरहविःपञ्चकयागेन माहेन्द्रादीन् पञ्चमासान् योजितवान् भवति। तेषा मनडुद्द्वयं दक्षिणां विधत्ते— "पूर्वाग्नीति। पूर्वाग्निवाहा दक्षिणात्वम्। सम्भूय प्रशंसति— "तद् यत् पूर्वाग्नीति ॥ ४ ॥

एतं द्वादशपशुमद्धवि.कारूपेण क्रतुप्रयोगं कुरुपञ्चालवृत्तान्त-मुखेन द्रढयति— "तद्ध स्मैतदिति। पूर्वे 'कुरुपञ्चालाः' 'प्राहुः' वदन्ति, विचारयन्ति,— 'यस्मात् क्रतवो युक्ताः' सन्तो 'वहन्ति', 'प्रयुक्तान् क्रतून्' 'अनु'-लक्ष्य 'चराम.' अनुसराम इति। धार्मसमानानाम् 'एषां' राज्ञां मध्ये ये 'राजानः राजसूय-याजिनः स्युः', ते यद्युवधवि.कारूप क्रतुप्रयोगरूप मिति मन्यन्त-रिति तस्यार्थः ॥ ५ ॥

तानि द्वादश हवींषि 'उद्दिशति— "आग्नेयोऽष्टाकपाल इति। तत्र पूर्वाणि षड्वींषि पुरोडाशात्मकानि, उत्तराणि तु चर्वात्मकान्येवेत्यर्थ * ॥ ६, ७ ॥

अथ पशुद्वयं विधीयते। तत्र कात्यायन— "षष्टापदी-वत्यायन्यौ गर्भिण्यौ सगुणदक्षिणौ, श्वेत्यादित्येभ्योऽदित्यै वा, वैश्वदेवी पृषती मारुती वा"—इति †। श्वेता गर्भिणी

* तै० सं १ ८ १६ ('साव्दूवानां हवींषि'), तै० ब्रा० १ ८. ३ द्रष्टव्यम्।

† का० श्रौ० सू० १२ ६ १७, १८।

मादित्येभ्योऽदित्यै वा आलभेत, पृषतीं गर्भिणीं विश्वदेवेभ्यो मरुद्भ्यो वेति तदर्थः *।

तत्र स्वमतानुसारेणादितिदेवत्य पशुबन्ध विधत्ते— 'अथ श्येनी मिति। 'श्येनीं' श्वेतवर्णां 'विचित्रगर्भां' प्रज्ञातगर्भाम् 'अदित्यै' आलभेत। प्रयोग मतिदिशति— "तस्या एषेति। 'आवृत्' क्रिया 'या' 'अष्टापद्यै' वशायै गर्भिण्या वशाया अनुबन्ध्याया प्रयोगक्रम, स एवास्या इत्यर्थः। तत्प्रयोगस्तु चतुर्थकाण्डे पञ्चमेऽध्याये द्वितीये ब्राह्मणे— "वत्सखिव्य वपा मनुसृत्य गर्भं मिष्टवे ब्रूयात्'–इत्यादिना स्पष्ट मीरित †। एतद्देवता प्रशंसति— "इय वा इति। 'अदिति' नाम 'इय' पृथिवी, तस्मादादितिदेवत्यगर्भिणीयागेन 'एन' यजमान भूमिरेव गर्भत्वेन क्षतवान् भवति॥

एतस्य कर्मणो दक्षिणा विधत्ते— "तस्या एताह्वयेवेति। 'एताह्वयी' एतद्वर्णा प्रज्ञातगर्भा 'दक्षिणा' ॥ ८ ॥

पशुबन्धान्तर विधत्ते— 'अथ पृषती मिति। 'पृषती' बिन्दुयुता, 'विचित्रगर्भा' विचित्रवर्णा गर्भिणीम् 'मरुद्भ्य' देवेभ्य आलभेत। तस्यापि प्रयोगप्रकार पूर्ववदतिदिशति। "तस्या एषेति। मरुता विट्त्वात् मरुद्देवत्यपशुयागेन 'एन' सन्त 'विशा' प्रजाना 'गर्भम्', तदुपजीव्य क्षतवान् भवति॥

तस्यापि दक्षिणां विधत्ते— तस्या एताद्दगीति। एवकारेणा न्यवर्णदक्षिणानिवृत्तिः। दक्षिणाभेदेनानयो कर्मभेद ॥ ९ ॥

'एतौ पशुबन्धाविति। उक्तयो पशुबन्धद्वयस्य शाखाभेदेन

---

* [illegible] अनूबन्ध्याप्युपात्ता [illegible] तदर्थो"—इति क्रम ।
† [illegible] प्रथमा कण्डिका द्रष्टव्या ।

देवतान्तरसम्बन्धं दर्शयति — "तदेतावेवेति । एवकारेणादिति मरुत्सम्बन्धो विवक्षित । 'अव्यथैव'—इति यदुक्तम्, तदेव स्पष्टयति —"या मदित्वा इत्यादिना ॥ १० ॥ ४ [ ५ २ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् )

अभिषेचनीयेनेष्ट्वा† । केशान्न वपते तद्यत् केशान्न वपते वीर्यं वा ऽएतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स यत् केशान् वपेतैतां श्रियं क्षिप्त्वा विनाशयेद् व्युदुह्यात्तस्मात् केशान्न वपते ॥ १ ॥

संवत्सरं न वपते । संवत्सरसम्मिता वै व्रत-

---

* अरण्यादिषु तिसृषु कक्षीषु पशुद्वयविधिः । स एषोऽपि तै० सं० १ ८ १५ तै० ब्रा० १ ८ ३ द्रष्टव्य ।

† अभिषेचनीयेनेष्ट्वा इति म ध ।

चर्यां तस्मात् संवत्सरं न वपते स एष व्रत-विसर्जनीयोपयोगो नाम स्तोमो भवति केश-वपनीयः ॥ २ ॥

तस्यैकविंशं प्रातस्सवनम् । सप्तदशं माध्यन्दिनं सवनं पञ्चदशं तृतीयसवनं सहोक्थैः सह षोडशिना सह रात्र्या ॥ ३ ॥

त्रिवृद्राथन्तरः सन्धिर्भवति । एष एवैकविंशो य एष तपति स एतस्मादेकविंशादपयुङ्क्ते स सप्तदशमभिप्रत्यवैति सप्तदशात् पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्रतिष्ठायां प्रति-तिष्ठति ॥ ४ ॥

तस्य रथन्तरं पृष्ठं भवति । इयं वै रथन्तरमस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठत्यतिरात्रो भवति प्रतिष्ठा वा ऽअतिरात्रस्तस्मादतिरात्रो भवति ॥ ५ ॥

स वै ज्यैष्ठ्येव व्यावर्त्तयते । केशान्न वपते * वीर्यं वा ऽएतद्रूपाणां रसः सम्भृतो भवति येनैन

---

* केशान् वपत—इति क. घ।

मेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमाग् प्राप्नोति स यत् केशान् वपेतैताꣳ श्रियं जिह्मां व्विनाशयेद्वाऽदुह्याद्य यन्निवर्त्तयते तदात्मन्येवैताꣳ श्रियं नियुनक्ति तस्मान्नैव वर्त्तयते केशान्न वपते तद्धैषैव व्रतचर्या भवति यावज्जीव नाख्या प्रति तिष्ठति ॥ ६ ॥

नासन्द्या उपानहा ऽउपमुञ्चते । उपानह्या मधि यदस्य यानं भवति रथो वा किञ्चिद्वा सर्वं वा ऽएष इद मुपर्युपरि भवत्यर्वागेवास्मादिदꣳ सर्वं भवति यो राजसूयेन यजते तस्माद्धैषैव व्रतचर्या भवति यावज्जीव नाख्या प्रतितिष्ठति ॥ ७ ॥ ५ ॥

॥ इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [५. ३.] ॥

तृतीये केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते । सूत्रम्— "अभिषेचनीयाद्दश संवत्सरान् केशवपनीयोऽतिरात्रः सोमापवर्ग"-इति ७। पञ्चमध्यायानन्तर केशवपनीयातिरात्र याग कर्त्तव्य । अभिषेचनीयसोमयाग कृत्वा संवत्सरपर्यन्त केश वपनाकरणलक्षण व्रत आचर्यम्, ततस्तद्व्रतविसर्जनार्थं केश°

---

७ का० श्रौ० सू० १५. ८. २६।

सोमयागः पौर्णमासीतुल्यः कार्यः, स एव केशवपनीयातिरात्र उच्यते। रात्रिं अतीत्य वर्त्तत इत्यतिरात्रः; अतिरात्रसंस्थया कार्य इत्यर्थः * ॥

तं चिमं विधत्ते— "अभिषेचनीयेनेष्ट्वेति। अभिषेचनीययागादनन्तरं केशवपनीयकरणे कारणमाह— "वीर्यं वा एतदपा मिति। पूर्वं अभिषेककाले वीर्यरूपोऽपां रसः प्रथमं केशानेव प्राप्तवान्, तेषां केशानां वपने अभिषेकेणागच्छन्तीं 'श्रियम्' एव 'जिह्मां' कुटिलां विनाशितवान् भवति। किञ्च 'व्युदुह्यात्' गतसारोऽपि भवेत्। तस्मात् केशवापो न कर्त्तव्य इत्यर्थः † ॥ १ ॥

तस्यावधिकालं दर्शयति— "संवत्सरं न वपत इति। केशवपनीयशब्दं निर्वक्ति— "स एष भवतीति। संवत्सरसम्मित-व्रतविसर्जनद्वारा केशवपनार्थम् उपयुज्यमानः त्रिवृत्सामः 'स्तोमः' एकविंशादिस्तोमवान् यागः केशवपनीय इत्यर्थः ॥ २ ॥

तत्र सामगैर्गीयमानेषु स्तोत्रेषु चोदनेन प्रातःसवनादिषु त्रिवृदादिस्तोमप्राप्तौ तामपवदितुं विधिं दर्शयति— "तस्यैक-विंश इति। प्रातःसवनमेकविंशस्तोमयुक्तं कर्त्तव्यम्, माध्य-

---

* 'तदस्य केशवपनीयोऽतिरात्रः पौर्णमासीतुल्यः'—इति अत्र भाष्यं विचार्यम् (१५ ६ १०)। 'तदन्तमब्दस्यातिरात्रपौर्णमास्यां भवति'—इतीह वाक्यं। तयोः पशुबन्धयोरन्ते केशवपनीयसंज्ञः अतिरात्रसंस्थः सोमयागो भवति, स च पौर्णमासीतुल्यः ज्यैष्ठ्यां पौर्णमास्यां तस्य सुत्या भवतीत्यर्थ'—इति तत्र वृत्तिः।

† "संवत्सरान्ते केशवपनीयाख्यं दीक्षेत यस्मिन् काले अभिषेचनीयेन यजेत, तस्य पौर्णमास्या अतिरात्र."—इति चात्र कात्या० श्रौ० सू० ८, ३१, २।

न्दिनं सप्तदशस्तोमकम्; अत्र सोमयागस्य अतिरात्रसंस्था-त्वात् *। तृतीयसवने अग्निष्टोमवत् द्वादश स्तोत्राणि, तत उत्तरं त्रीण्युक्थस्तोत्राणि, एकं षोडशिस्तोत्रम्, रात्रि-पर्यायस्तोत्राणि द्वादश; तानि सर्वाण्यपि पञ्चदशस्तोमकानि कर्त्तव्यानीत्यर्थः। स्तोमक्लृप्तिप्रकारस्तु "प्राची मारोह"-इत्यत्र दिक्समारोहणमन्त्रव्याख्यावसरे दर्शितः † ॥ ३ ॥

"त्रिवृद्रथन्तर इति। पूर्वदिवसरात्रिविधिवे उत्तरदिवसस्योपः-काले यज्ञस्यापवर्गे चरम स्तोत्र तृतीयपर्यायस्यान्ते रथन्तर-साम्ना गातव्यम्, तत् सन्धिस्तोत्र मित्युच्यते। तत् स्तोत्रं त्रिवृत्स्तोमयुक्तं कार्यम्। एकविंशादवरोहणक्रमेण ‡ त्रिवृत्पर्यन्तं यत् स्तोमकरणमुक्तम्, तत् सूर्यलोकादिक्रमाद् भूम्यवस्थानात्मना प्रशंसति— "एष एवैकविंश इति। 'य एष तपति', 'स' 'एकविंश:' सूर्य इत्यर्थः; तस्मात् 'अपगृह्य' अवरोहतीत्यर्थः। सोऽयमवस्थावरूढः त्रिवृद्रूपायाः मम भूमिलक्षणाया 'प्रतिष्ठायां' प्रतिष्ठितवान् भवति ॥ ४ ॥

माध्यन्दिने सवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितम्, अत्र तेन नियमयति— "तस्य रथन्तर मिति। 'अत्र' सोमयागस्यातिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति— "अतिरात्र इति। अतिरात्रसंस्थात्मना सत एष क्रतुः प्रतिष्ठारूप, ॥ ५ ॥

अथ क्रतोः वैश्वानरपत्नीतविसर्जनार्थं क्रियमाणत्वात् तदन्ते

* '०संस्थात्'—इति च ख, '०संस्था[ना]त्'—इति घ।
† इतैव पुस्तके (३ १ ३) २६१ पृष्ठे द्रष्टव्यम्।
‡ '०दवरोहणेन—इति च '०दवरोहण'—इति च।

केशवापः कार्यः; तत्र कश्चिद् विशेषं विधत्ते— "स वै न्येव वर्त्तयेत इति। 'स' यजमानो 'निवर्त्तयेत' केशान् निकृन्त्येदेव, न वपेत; वपनं नाम मुण्डनं तन्न कुर्यात्, निवर्त्तनं कर्त्तनम्, तत् कुर्यादित्यर्थः। "वीर्यं वा इत्यादेरर्थः पूर्वं व्याख्यातः *। निवर्त्तनपक्षे केशाङ्कुराणां विद्यमानत्वात् 'धामन्येव' 'एतां श्रियं' नियोजितवान् भवतीत्यर्थः॥

मुण्डतः काश्चिन्नियमान् दर्शयति— "तस्यैवैवेति। 'एषा' केशकर्त्तनलक्षणा 'व्रतचर्या' यावज्जीवनं कर्त्तव्या; केशमुण्डनं कार्यम्। कदाचिदपि † 'पद्भ्यां' भूमौ 'न प्रतितिष्ठति' पदन्यासं न कुर्यात् ॥ ६ ॥

कुत्रावतिष्ठेतेति तद्दर्शयति— "उपानद्भ्या मिति। भावन्या पदरोहणसमयेऽपि 'उपानहौ' पादुके उपमुञ्चेत। इतरथास: अवरणसमये रथं वा यानं वारोहेत्। एतादृशं व्रतं राजसूययाजिनो 'यावज्जीवं' कर्त्तव्य मित्यर्थः ‡ ॥ ७ ॥ ५ [ ५. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

---

* अनुपद मेव मतं बृहद् एवाया द्रष्टव्यम् ।

† इतोऽनन्तरं ख-पुस्तके 'अनुपानत्कोऽपादुकः'—इत्यधिकः पाठः।

‡ तै० ब्रा० १. ८. ८ द्रष्टव्यम्। किञ्च "संवत्सर मग्निहोत्रं हुत्वा केशवपनीयेनातिरात्रेण यजते"—इति आप० श्रौ० सू० १८. २२. ६। एवं सत्यषाढ़ेन च,— लाट्या० श्रौ० सू० ९. ३. १—१२ ॥

( अथ चतुर्थं ब्राह्मणम् )

श्येत आश्विनो भवति । श्येताविव ह्यश्वि-नाववि र्मेषी सारस्वतो भवत्यृषभ मिन्द्राय सुत्राम्ण* ऽआलभते दुर्वेदा एवैते समृद्धाः पशवो यदे-षैते समृद्धान्न विन्देदप्यजानेवालभेरंस्ते हि सुप्र-पतरा भवन्ति स यद्यजानालभेरल्लोहित आश्विनो भवति तद्यदेतया यजते ॥ १ ॥

त्वष्टुर्ह वै पुत्र † । त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवंरूप आस तस्माद् विश्वरूपो नाम ॥ २ ॥

तस्य सोमपान मेवैकं मुख मास । सुरापाण मेक मन्यस्मा ऽअशनायैकं त मिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ ३ ॥

स यत् सोमपान मास । ततः कपिञ्जलः समभवत्तस्मात् स बभ्रुक इव बभ्रुरिव हि सोमो राजा ‡ ॥ ४ ॥

---

* सुत्राम्ण —इति ग घ ।  † पुत्र—[illegible]
‡ राजा —इति म राजा —इति ख

अथ यत् सुरापाणमास। ततः कलविङ्कः समभवत्तस्मात् सो ऽभिमाद्यत्क इव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति * ॥ ५ ॥

अथ यदन्यस्मा अशनमास। ततस्तित्तिरिः समभवत्तस्मात् स विश्वरूपतम इव सन्त्येव घृतस्तोका इव त्वत् मधुस्तोका इव त्वत् पर्णेष्वाश्चुतिता एवंरूपमिव हि स तेनाशनमावयत् ॥ ६ ॥

स त्वष्टा चुक्रोध। कुविन्मे पुत्रमवधीदिति सो ऽपेन्द्रमेव सोममाजह्रे स यथायं सोमः प्रसुत एव मपेन्द्र एवास † ॥ ७ ॥

इन्द्रो ह वा ईक्षाञ्चक्रे। इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस एवमनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयाञ्चकार स हैनं जिहिंस सोऽस्य विष्वङ्ङेव ‡ प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव

---

* 'वदति' इति ख।

† एवास—इति क।

‡ विष्वङ्केव—इति क। विष्वगेव—इति ख।

तस्मात् प्रायश्चित्तिरास स यद्धापि मुखादद्रोष्यन्नु हैव प्रायश्चित्तिरभविष्यत् ॥ ८ ॥

चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रो न हैतेषा मेकश्चन भवति यः सोमं वमति स यद्धैतेषा मेकश्चित् स्यात् स्याद्धैव प्रायश्चित्तिः ॥ ९ ॥

स यन्नस्तोऽद्रवत् । ततः सिंहः समभवदथ यत् कर्णाभ्या मद्रवत्ततो वृकः समभवदथ यदवाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरात् प्राणादद्रवत्सा परिस्रुदथ त्रिर्निष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्व्वेणैव व्यार्ध्यत सर्व्वꣳ हि सोमः ॥ १० ॥

स सोमातिपूतो मद्गुरिव चचार । स एतयाश्विनावभिषज्यता तꣳ सर्व्वेणैव समर्धयताꣳ सर्व्वꣳ हि सोमः स वसीयानेवेष्ट्वाभवत् ॥ ११ ॥

ते देवा अब्रुवन् । सुत्रातं बतैन मत्रासता* मिति तस्मात् सौत्रामणी नाम ॥ १२ ॥

* 'मत्रामाता' — इति क, ख

स हैतयापि सोमातिपूतं भिषज्येत् । सर्वेण वा एष व्यृध्यते यं सोमो ऽतिपवते सर्वं हि सोमस्तं सर्वेणैव समर्द्धयति सर्वं हि सोमः स सर्वायामेवेष्टा भवति तस्माद्धैतयापि सोमातिपूतं भिषज्येत् ॥ १३ ॥

तद्यदेतया राजसूययाजी यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत्सौत्रामण्यनया मे ऽपीष्टमसदनयापि सूया ऽइति तस्माद्वा ऽएतया राजसूययाजी यजते* ॥१४॥

अथ यदाश्विनो भवति । अश्विनौ वा ऽएतमभिषज्यतां तयो ऽएवैनमेष एतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति † ॥ १५ ॥

अथ यत् सारस्वतो भवति । वाग्वै सरस्वती वाचा वा ऽएनमश्विनावभिषज्यतां तयो ऽएवैनमेष एतद्वाचैव भिषज्यति तस्मात् सारस्वतो भवति ‡ ॥ १६ ॥

---

* यजत — इति ग घ ।

† ‡ भवति — इति क ।

अथ यदैन्द्रो भवति। इन्द्रो वै यज्ञस्य देवता तयैवैन मेतद्भिषज्यति तस्मादैन्द्रो भवति ॥ १७ ॥

एतेषु पशुषु। सिᳪहलोमानि वृकलोमानि शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनᳪ सोमोऽत्यपवत तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेतान्यावपति ॥ १८ ॥

तदु तथा न कुर्यात्। उल्कुषी ह स न-खिन्या पशूननुप्रवर्तति य एतानि पशुष्वावपति तस्मादु परिस्रुत्येवावपेत्तथा ह्योल्कुष्या नखिन्या पशून्नानुप्रवर्तति तथो ऽएवैनᳪ समर्द्धयति कृत्स्नं करोति तस्मादु परिस्रुत्येवावपेत् † ॥ १९ ॥

अथ पूर्वेद्युः परिस्रुतᳪ सन्दधात्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति सा यदा परिस्रुद्भवत्यथैनया प्रचरति ॥ २० ॥

दक्षिणतो ऽउद्धरन्ति। उत्तरवेदावेवोत्तर मुपते दृषिषं मेत् सोमाहुतीय सुराहुतीय सह गृह्या-

मेति तस्माद् द्वावग्नी ऽउद्धरन्त्युत्तरवेदावेवोत्तर मुद्धते दक्षिण मथ यदा व्वपाभिः प्रचरन्त्यथैतया * परि-स्रुता प्रचरति ॥ २१ ॥

ता दर्भैः पावयति। पूतासदिति व्वायुः पूतः पवित्रेण प्रत्यङ् सोमो ऽअतिस्रुतः। इन्द्रस्य युज्यः सखेति तत् कुवलसक्तून् बादरसक्तून् बदर-सक्तूनित्यावपत्येतद्वै ततः समभवद्यत् त्रिनिरष्ठीवत् तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादे-तानावपति † ॥ २२ ॥

अथ ग्रहान् गृह्णाति। एकं वा त्रीन्वैक-स्त्वेव गृहीतव्य एका हि पुरोऽनुवाक्या भवत्येकानुवाक्यैका याज्या तस्मादेक एव गृहीतव्यः ॥ २३ ॥

स गृह्णाति। कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुहि भोज-नानि ये बर्हिषो नम उक्तिं यजन्ति। उप-यामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा

---

* प्रचरन्त्यैतया'—इति क, ख।

† *वपति'—इति क।

सुत्रामण्य ऽइति यद्यु चीन् ग्रह्णीयादेतयैव ग्रह्णीयादुपयामैस्तु तर्हि नाना ग्रह्णीयाद्यथाहा-श्विभ्याए सरस्वत्या ऽइन्द्राय सुत्राम्णे ऽनु-ब्रूहीति ॥ २४ ॥

सो ऽध्वाह। युवए सुराम मश्विना न-मुचावासुरे सचा। विपिपाना शुभस्पती ऽइन्द्रं कर्मस्वावत मित्याश्राव्याहाश्विनौ सरस्वती मिन्द्रए सुत्रामाणं यजेति ॥ २५ ॥

स यजति। पुत्र मिव पितरावश्विनोभेन्द्रा-वथुः काव्यैर्दएसनाभिः। यत् सुरामं व्यपिवः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति दिष्टीता वषट्करोति हिरण्यपुर्णुशेत्याहरति भक्षं यद्यु चीन् ग्रह्णीयादेतस्येव्यानुहोम मितरौ हूयेते ॥ २६ ॥

अथ कुम्भः। शतवितृण्णो वा भवति नव-वितृण्णो वा स यदि शतवितृण्णः शतायुर्वा ऽयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नव-वितृण्ण ॥ २७ ॥

तद्ध् शिक्योद्धृतम्। उपर्युपर्याहवनीयं धारयन्ति सा या परिशिष्टा परिश्रुद् भवति ता मासिञ्चति तां विधरन्तो मुपतिष्ठते पितॄणाद्ध् सोमवतां तिसृभिर्ऋग्भिः पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः पितॄणा मग्निष्वात्तानां तिसृभिर्ऋग्भिस्तथैव मुपतिष्ठते यत्र वै सोम इन्द्र मत्यपवत स यत् पितॄनगच्छत् यथा वै पितरस्तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेव मुपतिष्ठते * ॥ २८ ॥

अथैतानि हवींषि निर्वपति। सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरु मैन्द्र मेकादशकपालं पुरोडाशम् † ॥ २९ ॥

स यत् सावित्रो भवति। सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैतद्विषज्यति तस्मात् सावित्रो भवति ‡ ॥ ३० ॥

अथ यद्वारुणो भवति। व्यवयो वा ऽस्यापं-

* 'सुपतिष्ठते'—इति ग, घ।

† 'पुरोडाशम्'—इति ख।

‡ 'भवति'—इति क।

यिता तद्य एवार्पयिता तेनैवैतद्भिषज्यति तस्मा-
द्वारुणी भवति * ॥३१॥

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता
सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो
भवति † ॥ ३२ ॥

स यदि चेमयापि सोमातिपूतं भिषज्येत् ।
इष्टा अनुयाजा भवन्त्यव्यूढे स्रुचावथैतैर्हविर्भिः
प्रचरति पश्चाद्वै सामो ऽतिपवते पश्चादेवैन मेतेन
मेधेनाभिदधात्याश्विनं तु तर्हि द्विकपालं पुरोडाशं
निर्व्वपेदथ यदा वपाभिः प्रचरत्यथैतेनाश्विनेन ‡
द्विकपालेन पुरोडाशेन प्रचरति ॥ ३३ ॥

तदु तथा न कुर्यात् । ह्वलति वा ऽएष
यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं
करोति तस्माद्यचैवैतेषां पशूनां वपाभिः प्रचरन्ति
तदेवैतैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपालं
पुरोडाशं निर्व्वपेत् ॥ ३४ ॥

तस्य नपुंसको गौर्दक्षिणा। न वा ऽएष स्त्री न पुमान् यन्नपुंसको गौर्यदह पुमांस्तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मान्नपुंसको गौर्दक्षिणाश्वा वा रथवाही सा हि न स्त्री न पुमान् यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥ ३५ ॥ ६ ॥

॥ इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् [५. ४.] ॥

सोमप्रधाने * राजसूये सप्त सोमयागाः। तत्र, पवित्राख्य-सोमयागे विशेषाभावात् † न नोक्तः; अभिषेचनीय-दशपेय-केशवपनीयातिरात्रेषु केचित् ‡ वैशेषिका धर्मा उक्ताः; व्युष्टि-द्विरात्रोऽग्निष्टोमातिरात्रो चत्रधृतिरिति सोमयागत्रयं केशवपनीयादनन्तरं कर्त्तव्यम्। तेषां सोमयागविकृतित्वादग्निष्टोम-वत् सर्वं मन्त्रजातं कर्त्तव्यम्, तत्र विशेषाभावादेव नोक्ताः; तदनन्तरकर्त्तव्या सौत्रामण्यभिधीयते §।

---

* 'समप्रधाने'—इति क, ख।

† 'विशेषभावात्'—इति घ, क; 'विशेषाभावे'—इति च।

‡ 'केचुश्चिद्'—इति क, ख।

§ "सन्तिष्ठते राजसूयः, तेनेष्ट्वा सौत्रामण्या यजेत"—इति आप० श्रौ० सू० १८ २२. २०, २१।

तत्र पशुत्रयं * देवतासम्बन्धविशिष्टं विधत्ते—"श्येत आश्विन इति। अश्विदेवत्यः 'श्येतः' पशुरालभ्यः। 'मल्हा' गलस्तनयुक्तेत्यर्थः। ताम् 'अविम्' मेषीम् 'सरस्वत्यै' आलभेत। 'सुत्राम्णे' इत्यु वाचे, एतद्गुणकाय 'इन्द्राय' 'ऋषभं' सेचनसमर्थमालभेत। उक्तपशुषु श्येतगलस्तनयुक्तत्वरूपं गुणमसम्भावितं मत्वा श्रुतिः स्वयमेव पक्षान्तरमाह—"दुर्वेदा इति। 'एवम्' उक्तरीत्या 'सन्तः' गुणवत्त्वेन सम्पूर्णाः पशवो 'दुर्वेदाः' दुर्लभाः, तेषां सद्भावे तत्तद्देवत्यान् 'यान् पशून् एव' आलभेत। 'सुकरतराः' सुखेन लब्धुं शक्याः। अजमेषपक्षे आश्विनपशोः कञ्चिद् गुणं विधत्ते—"लोहित आश्विन इति। अत एव कात्यायनः—"आश्विनोऽजः श्येतः, मल्हाविः सारस्वती, ऋषभ इन्द्राय सुत्राम्णे, तद्भावेऽजाः प्रथमो लोहितः" —इति †। एतेषां पशूनां सौत्रामणीसम्बन्धं दर्शयति—"तदेतयेति। पशुत्रयवत्या 'एतया' सौत्रामण्या यष्टव्यमित्यर्थः ॥ १ ॥

अथ सौत्रामण्याः पुनरिन्द्रसम्बन्धमश्विसरस्वतीसम्बन्धम्, तत्रोपयुक्तद्रव्यादिकमाख्यायिकामुखेन दर्शयति— "त्वष्टुर्ह वै पुत्र इति। पूर्वं त्वष्टुः पुत्रस्य विश्वरूपस्य 'त्रिशीर्षः' त्रीणि मुखान्यासुः। तत्र 'एकं मुखं सोमपानम्', द्वितीयं 'सुरापानम्', तृतीयम् 'अन्यस्मै अशनाय' बभूव। एवम्भूतस्य विश्वरूपस्य त्रीणि शिरांसि 'इन्द्रः' 'दिदेप' चिच्छेद। तत-स्त्रिभ्यो मुखेभ्यः कपिञ्जलकलविङ्कतित्तिरयाख्याः पक्षिणः

* "त्रिपशुः पशुबन्धः"—इति का० श्रौ० सू० १९. १० १।
† का० श्रौ० सू० १९ १० ३–७।

समभवन् । कपिञ्जलस्य सोमपानभक्षजातत्वात् तस्यमानो बभ्रुवर्णो जातः, कलविङ्कस्य सुरापानमुखजातत्वात् सुरापायिवदभिमादवचनम्, तित्तिरस्याश्रुभाजकमुखजत्वात् नानारूपत्वम् । अश्रौ हि घृतमधुबिन्दुसद्भावादश्रुष्वपि पक्षिणि तदाकारपक्षसद्भाव । 'अवयत्'-इति वेति व्यादमायात् ह्वान्दस. मप् ॥ २—६ ॥

"स त्वष्टेति । ततस्तस्य छिन्नशीर्ष्णो विश्वरूपस्य पिता 'त्वष्टा' 'क्रुधित्' व्यर्थम् 'मे' मम 'पुत्रम्' 'अवधीत्' 'इति' क्रुद्ध सन् 'अपीन्द्रम्' इन्द्रवर्जितम् 'एव' 'सोमं' सोमयागम् 'आजह्रे' अनुष्ठितवान्,— यथा सोमं इन्द्रवर्जितं 'प्रसुतं' अभिषुतं स्यात् तथेत्यर्थः ( ॥ ७ ॥ )

अथ 'इन्द्र' त्वष्टादय मां सोमव्यवहितं कुर्वन्तीति मिचित्व 'अनुपहूत' सन् द्रोणकलशस्थितं सोमं मपहृत्य भक्षयाञ्चकार । यथा बलवान् पुरुषो बलादहितस्य धनादिक ॥ समपहरति, तद्वत् । स पीतं सोमं 'एनं' 'विष्विङ्' बाधितवान् । अस्य 'प्राणेभ्य' नासिकादिस्थानेभ्य 'एव' 'विष्वङ्' सर्वतः 'दुद्राव' स्रुत, 'न मुखात् दुद्राव' । 'तस्मात्' 'स' इन्द्र 'प्रायश्चित्ति' प्रायश्चित्तयोग्य 'आस' । प्रायो विनाश, तस्य चित्ति सन्धान यस्येति तथाविधो बभूव । यदि मुखात् स्रुत स्यात्, तर्हि प्रायश्चित्तियोग्य एव न स्यात्, अस्मत्र सोमरसव्युत्क्षोन्दस्याश्विभ्यां समर्दन वक्ष्यते† ॥ ८ ॥

मुखवमनपक्षे प्रायश्चित्तिर्नास्तीति दर्शयति— "चत्वारो वा इति । लोके हि वर्णचतुष्टयस्यैव प्रायश्चित्तविधानम्, नान्यस्य,

* धनादिक —इति क । † [ १२ का० ३७२ पृ० ]

यतः सोमवामी एषां चतुर्णां मध्ये एकोऽपि न भवति। यथा पुरुषादेः केवलपापशरीराणि * स्युः, प्रायश्चित्तविधिर्नास्ति, एवं सोमवामिनोऽपीति। यद्यपि तस्य "यः सोमवामी स्यात् तस्मा एतं सौमेन्द्रं श्यामाकं चरुं निर्वपेत्"—इत्यादिना तैत्तिरीये † प्रायश्चित्तमुक्तं, तथापि पथ्यन्तसन्निकर्षे यत्तु पर्वचतुष्टयानर्हत्वं उक्तम्; तस्मात् इन्द्रस्य मुखवमनाभावात् प्रायश्चित्तयोग्यत्वं जातमित्यर्थः ॥ ९ ॥

इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्यात्मनोत्पत्तिं दर्शयति— "स यवस्त इति। 'नस्तः' नासिकायाः सुतः सोमः 'सिंहः' अभवत्। 'अवाचः' अधोमुखादयानद्वारात् निर्गतः सोमः 'शार्दूलमुख्याः श्वापदाः' क्रूरकर्माणः, अभव. 'समभवन्'। उत्तरात् प्राणात् गुदच्छिद्रात् सुतः 'परिस्रुत्' सुरा अभूत्। "शावाचो सा सुरा"—इति हि तैत्तिरीयकम् ‡। स चेन्द्रो भक्षेव क्षिपारं निष्ठीवनं कृतवान्। तेन द्रव्यत्रय मभूत्,—'कुवलकर्कन्धुबदराणि' सूक्ष्मतरस्थूलमध्यपरिमाणानि बदरजातिफलानि §। एवं सर्वेन्द्रियेभ्यः सोमस्रवणात् इन्द्रो 'व्यार्धत' व्यृद्धिविहीनो बभूव ॥ १० ॥

---

* 'केवलपापशरीराः'—इति च, छ।

† तै० सं० २ ३ २.१३।

‡ तै० ब्रा० १ ८ ५.२।

§ 'कुवलं मध्यमदरम्, कर्कन्धु सूक्ष्म मनिमधुरं यद्गुणरायपे प्रायेण जायते, बदरं तु विशिष्टमधुरम्'—इति हरिस्वामिनः। 'कुवलानि सप्रकानुस्थानि बदराणि, कर्कन्धूनि उपभोक्तार्हमपवकबदराणि, बदराणि निवानचरबदराणि पक्वबदराणि'—इति याज्ञिकाः। 'कर्क

"स सोमातिपूत इति। 'सोमातिपूतः' अपानद्वारादिभ्यः स्रुत सोमः *, 'सः' इन्द्रः 'मङ्गुः' "मकि गतिवर्ज्जने" † विकलगतिः ‡ पङ्गुः 'इव' 'चचार'। तथाविधं मिन्द्रम् 'एतया' सौत्रामण्या 'अश्विनौ' 'अभिषज्यताम्' समाहितं सञ्चक्रतुः। "भिषज् चिकित्सायाम्"-इति § धातुः। तदेवाह— "सर्वेणेति। 'सर्वेण' सोमेन एनं समृद्धं कृतवन्तौ। तत्र इन्द्रः एतया 'इष्ट्वा' 'वसीयान्' श्रेष्ठतरः 'अभवत्' ॥ ११ ॥

सौत्रामणीशब्दं निर्वक्ति— "ते देवा इति। एवं अश्विभ्यां सोमरसेन समर्धितं मिन्द्रं प्रति 'देवा अब्रुवन्',— 'एनम्' सोमातिपूतं 'सुत्रातं' सुष्ठु रक्षितवन्तौ अश्विनाविति। 'बत' -इति हर्षे ; अतः सुत्रामसम्बन्धात् 'सौत्रामणी'-नामेष्टिः ॥ १२ ॥

प्रसङ्गादन्यस्य सोमातिपूतस्यापीमा मेवेष्टिं दर्शयति— "स एतयापीति। इयं राजसूयाद् बहिरपि प्रयोक्तव्येत्यर्थः ॥ १३ ॥

"तस्मादेतया राजसूयेत्यादेरयमर्थः— राजसूययाजिना सर्वेऽपि इष्टि पशु सोम दर्विहोमा इष्टाः, अत यद्यपि इष्टित्वात् तेन कार्येति पूर्वं मुक्तम् ॥ १४ ॥

आश्विनसारस्वतैन्द्रपशुविधिं पृथक्-पृथगनूद्य प्रशंसति— "अथ यदाश्विनो भवतीति ॥ ( १५ ) ॥ "वाचेति। 'वाचा'

---

(कुवलं) बालबदरफलम्, बदरं अक्षकपरिमितं पुष्टं बदरीफलम्, कर्कन्धु शरीरकोपरिमितं स्थूलं बदरीफलम्'—इति तै॰ ब्रा॰ १. ८. ५ भाष्ये सायणः।

* 'पुमसोमः'—इति छ, ग।

† 'मकि मण्डने'—इति भ्वा॰ आ॰ १५ धा॰।

‡ 'मन्दगतिः'—इति ग, 'मन्थरगतिः'—इति घ।

§ कण्ड्वादिः। 'भिषज्यति'।

अथ परिस्रुत्सन्धानं समन्त्रकं विधत्ते— "अथ पूर्वेद्यु-रिति। 'सन्दधाति' सम्पादयेदित्यर्थः। तत्प्रकारः कात्यायनेन स्पष्ट मीरित— "व्रीहीन् विरूढाविरूढान् क्षौम उपनह्य क्रीणाति क्लीबात् सीसेन, पक्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति * संसृजति"–इति †। हे परिस्रुत्। 'अश्विभ्यां' 'पच्यस्व' पक्वा भव। एवं सुत्रामण्यापि ॥ २० ॥

परिस्रुत्सम्भरणे कश्चिद् विशेष माह— "दावन्ती इति। उत्तरवेद्याः शेषं अग्निम्, तद्दक्षिणभागे 'दधति' प्रदेशे एकं अग्नि मुद्धरेत्। अग्निद्वयोद्धारे कारण माह— "नेदिति। एक-स्मिन्नेवाग्नौ सोमसुराहुतयः सह होतुं अयोग्याः, अतस्तत्सं-सर्गदोषनिवृत्त्यर्थं अग्निद्वयं कार्य मित्यर्थः। तस्याः पचनकाल माह— "यदा वपाभिरिति। पशुवपाभिर्यदा प्रचरेयुः, तदै-तयेत्यर्थः ॥ २१ ॥

विधत्ते— "तां दर्भैरिति। तां परिस्रुत् 'पूता' 'पवतु' 'इति' 'तां दर्भैः' पावयेत्। मन्त्रस्याय मर्थः— 'पवित्रेण' पूतः 'सोमः' सोमात्मना निष्पादितः ‡। तथा च तैत्तिरीयकम्— "स्वाद्वीं त्वा स्वादुनेत्याह सोम मेवैनां करोति"–इति §। वायुः पात्राणि गच्छन्, वायुवच्छीघ्रगामी वा भूत्वा 'प्रत्यङ्' अधोवर्त्तिपात्राभिमुखः सन् 'अतिस्रुतः' अतिक्रम्योद्गतः 'इन्द्रस्य' 'युज्यः' योग्यः 'सखा' समानख्यानः 'इति' ॥

* वा० सं० १० ३१ २।
† का० श्रौ० सू० १५ ९ २८, २९।
‡ का० श्रौ० सू० १५ १० ११।
§ तै० ब्रा० १ ८ ५ ५।

विधत्ते— "तत्सुवन्तेति। तस्यां परिस्रुति कुवल कर्कन्धु-बदर-सक्तुत्रयं निवपेदित्यर्थः। अत्र सूत्रम्— "वपामार्जनान्ते कुम्भे परिस्रुतं पुनाति वायुः पूत इति, कुवल कर्कन्धु बदर-चूर्णानि चावपति" * ॥ २२ ॥

ग्रहग्रहणं विधत्ते— "अथ ग्रहानिति। एको वा ग्रहः, त्रयो वा ग्रहीतव्याः। तत्रैकं सिद्धान्तयति— "एकस्त्वेवेति। एकस्यैव ग्रहस्य मुपपादयति— "एका ह्येति। पुरोरुक्-पुरोनु-वाक्यायाज्याना मेकत्वादेक एव ग्रहीतव्यः † ॥ २३ ॥

ग्रहस्य मनुवाक्यं मन्त्रं विधत्ते— "स अङ्गातिकुविदङ्गेति ‡। 'अङ्ग'-शब्दः सम्बोधनवाची। हे सोम! कुविच्छब्दो बह्वर्थ-वाची। चिच्छब्दः समुच्चये। यथा लोके 'यवमन्तः' यवादि-धान्योपेताः कृषिकाः 'कुविद्' यवबहुलं, यव मन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि 'अनुपूर्वं' तत्परिपाकानुक्रमेण दर्द पक्व मिद मपक्व मिति 'वियूय' विशेषेण पृथक्कृत्य 'दान्ति' "दाप् लवने" § लुनन्ति, तथा 'एषां' यज्वनां 'भोजनानि' अन्नानि 'इह' च 'कृणुहि' कुरुत 'ये' यजमानाः 'बर्हिषः' यागस्य 'नम उक्तिं' नम इत्यन्नाम ‖, नमस्कारो वा, तस्योक्तिं 'यजन्ति' कुर्वन्तीत्यर्थः। "उपयामगृहीत."–इत्यादि-मन्त्रशेषः स्पष्टः ॥

अश्वत्थयज्ञपात्रेऽपीम मेव मन्त्र मुपयामित्यत्र विशेषश्च

* का० श्रौ० सू० १५ १० ११, १२।
† का० श्रौ० सू० १५ १०. १३।
‡ वा० सं० १०. ३२ १।
§ धातु० प० ८६ धा०। ‖ निघ० २ ७, २२।

दर्शयति— "यद्यु वीनिति। 'नाना' पृथक् पृथक् उपयामेन तिसृभ्यो देवताभ्यो गृह्णीयात् ॥

अनुवचनप्रैषे विशेषं दर्शयति— "अथाहेति ॥ २४ ॥

होता मनुष्य अश्विसरस्वतीन्द्रप्रतिपादकं मन्त्रं ब्रूयात्— "होऽन्वाह युव मिति *। हे अश्विनौ! 'युवं' युवां 'सुरामं' सुरमणीयम्, 'आसुरे नमुचौ' स्थितं सोमं 'सचा' सहभूतौ एकीभूय 'विपिपाना' विविधं पिबन्तौ हे 'शुभस्पती' शुभस्य पालकौ स्वामिनौ। 'कर्मसु' निमित्तभूतेषु धर्मकरणार्थम् 'इन्द्रम्' 'आवतं' रक्षतम् 'इति' ॥

'यज'-इतिप्रैषे देवतात्रयं† विधत्ते—"आश्राव्याहेति ‡। देवतात्रयप्रतिपादिकां याज्यां पठतीति ॥ २५ ॥

"स यजति पुत्र मिवेति §। 'पितरौ पुत्र मिव' यथा पालयतः, तथा उभौ अश्विनौ हे इन्द्र! 'त्वा' त्वाम् 'आवथुः' ("अव रक्षणे"), पुरुषव्यत्ययः, रक्षितवन्तौ। 'काव्यैः' कवि कर्मभिः स्तोत्रैः, 'दंसनाभिः', 'दंस'-इति कर्मनाम ||, कर्मभिश्च इन्द्रं पालितवन्तौ कथं मन्यसे? 'यद्' यस्मात् 'सुरामं' सुरमणीयं सोमं 'व्यपिबः' विशेषेण पीतवानसि। 'शचीभिः' कर्मभिः हे 'मघवन्' इन्द्र! त्वा सोमातिपूतं सरस्वती 'अभिष्णक्' भेषजसन्धानं कृतवती। 'भिषक्'-इति कण्ड्वादिषु पठ्यते ¶ ॥

---

* वा॰ सं॰ १० ३३ १।

† देवतात्रयमपर्न —इति क च, छ।

‡ का॰ श्रौ॰ सू॰ १५ १० १४, १५।

§ वा॰ सं॰ १० ३४ १।

|| आ॰ प॰ ४०० धा॰ ।

¶ निघ॰ २ १ ३।

विधेयं विधत्ते— "द्विर्वेति । होत्रा द्विवारं वषट्कारः कर्त्तव्यः । 'द्विरध्वर्युः' अध्वर्युणापि द्विवारं हवनं कार्यम् * । 'आहरति भक्षम्' हवनानन्तरं भक्षार्थं आहरेयुः † । यद्-द्वयपक्षे हवने कश्चिद् विशेषमाह— "यद्यु वीनिति । एतस्य सोम मधु इत्यतो द्वौ परिस्रुद्धोमौ होतव्यौ । एषः परिस्रुद्धोमो दक्षिणेऽग्नावेति प्राहुः ‡ ॥ २६ ॥

कात्यायनः— "परिस्रुच्छेषं मासिच्य शतवच्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन् स्रवन्तमुपतिष्ठन्ते सर्वे: सोमवतां बर्हिषदामग्निष्वात्तानाम्"—इति § । हुतायाः सुरायाः शेषं शतवति शतच्छिद्रे नवच्छिद्रे वा कुम्भे आसिच्य, तं कुम्भं दक्षिणस्याहवनीयस्योपरि शिक्ये कृत्वा स्रवन्तं सोम-वदादिपितृभ्यः त्रिभिः सूक्तैरुपतिष्ठेतेति तदर्थः । तदिह विधत्ते— "अथ कुम्भ इति । कण्डिकाद्वये व्याख्यातम् ‖ । ॥ २७ ॥

"तं शिक्योद्युत मिति । आहवनीयस्योपरि उपरि प्रदेशे परिस्रुत्प्रस्रवणार्थं दक्षिणतः स्थापितस्याग्नेरुपरीत्यर्थः । तथा सूत्र मुदाहृतम् ¶ । 'विक्षरन्तीं' कुम्भात् स्रवन्तीम् परिस्रुतम् 'उपतिष्ठते' ॥

उपस्थाने मन्त्रान् दर्शयति— "पितृभ्या मिति । 'सोम-

---

* का० श्रौ० सू० १५ १० १६ ।
† का० श्रौ० सू० १५ १० १८ क ।
‡ २१ कण्डी द्रष्टव्या । का० श्रौ० सू० १५ १० १७ ।
§ का० श्रौ० सू० १५ १० १८ ।
‖ इत्र० ३ब्रा० १२कण्डी-भाष्यं ३४७ पृ० १७ पं० द्रष्टव्यम् ।
¶ का० श्रौ० सू० १५ १० १९ द्रष्टव्यम् ।

यतां' सोमदेवतायुतानां 'पितॄणां' याज्यापुरोनुवाक्यारूपाः "उदीरतामवर उत्परासः"-इत्याद्यास्तिस्र ऋचः *, 'बर्हिषदां' बर्हिषि सीदताम् एतद्गुणकानां 'पितॄणां' "बर्हिषदः पितर ऊत्यर्वाग्" -इत्याद्यास्तिस्र ऋचः †, 'अग्निष्वात्तानां पितॄणां' "आयन्तु नः पितरः सोम्यासः"-इत्याद्यास्तिस्र ऋचः ‡ इति नवर्चः संहितायां क्रमेणाम्नाताः §; ताभिरुपस्थानं कर्त्तव्यमित्यर्थः ॥

पितृमन्त्रैरुपस्थानं प्रशंसति— "यत्र वै सोम इति । पूर्वमिन्द्रेण पीतः सोमः, अतिपूतः सन् पितॄनेव प्राप्नोत्, अतस्तन्मन्त्रोपस्थानेनेन्द्रमेव सम्पूर्णं कृतवान् भवतीति ॥ २८ ॥

अथ पशुपुरोडाशार्थं सावित्रवारुणैन्द्राख्यं हविस्त्रयं विधत्ते —"अथैतानि हवींषीति ॥ २९ ॥

पुरोडाशदेवताः प्रशंसति— "अथ यत् सावित्र इति । कात्यायनः— "सोमातिपूतस्याप्येषा, अनुयाजान्ते पशुपुरोडाशार्थं चरत्याश्विनेन प्रागवदानेभ्यः, हविर्भिर्वाश्विनाभावात्"- इति ‖ । अत्र अर्थः— एषा सौत्रामणी सोमातिपूतस्यापि भेषज्यार्थं कर्त्तव्येति राजसूयाद् बहिःप्रयोगः । तत्र पशुपुरोडाशार्थं विहितान्येतानि सावित्रादिहवींषि अनुयाजान्ते चरन्ति, तदा छिद्रपिधानार्थं पशुवपाचरणानन्तरं अवदानात् पुरः आश्विनेन पुरोडाशेन यागः कर्त्तव्य इत्येकः शाखान्तरीयः पक्षः । पशुवपाप्रचरणानन्तरमेवैतैः सावित्रादिभिर्हविर्भिः यागः कर-

---

*, †, ‡ वा० सं० १९. ४९—५१, ५५—५७, ५८—६० ।

§ क्रममात्रमिदं सायणाचार्यस्य, यतः नवर्चं संहितक-प्रथम-तृतीय-चतुर्थ्यां कृतां दर्शनात् ।

‖ का० श्रौ० सू० १९. १०. २१, २२, २३ ।

वीयः, तदा यज्ञपतिच्छिद्रपिधानार्थं मेवैषा मिष्टिरादाश्विन-हविर्निर्वापो न कर्त्तव्य इत्यपरः पक्षः ॥ ३० ॥ ३१ ॥ ३२ ॥

तत्र पूर्वपक्ष माह— "स यदि श्वैत्रयापि सोमातिपूत मिति। 'यदि' 'एतया' सौत्रामण्या 'सोमातिपूत' 'मिपश्येत्' समादध्यात्, तर्हि पशुयाजयागान्ते सूक्तवाकात् पुरस्तात् 'एतैः' सावित्रादिभिः 'हविर्भिः' प्रचरणं कर्त्तव्यम्। "पशावा इति। 'सोमः' पश्वङ्गानि प्रतिपन्नः, अत एतस्मिन् काले यजमानस्य पश्वङ्गानि एतद्धविःप्रचरणेन तं सोमातिपूतं पुनः समिद्धिम-वान् भवतीति।

तदपि हविरन्तरं विधत्ते— "आश्विन मु तर्हीति।

तस्य प्रचारकाल माह— "पय यदेति ॥ ३३ ॥

तं पक्षं निराकृत्य स्वमतं दर्शयति— "तदु तथेति। स्पष्टोऽर्थः ॥ ३४ ॥

तस्य दक्षिणां विधत्ते— "तस्य नपुंसक इति *। नपुंसकस्य स्त्रीपुंभेदरहितत्वप्रतिपादकं वाक्यं स्यात्। विकल्पेन दक्षिणान्तरं विधत्ते— "वडवा वेति †। रथं वहतीति 'रथवाही'। "कर्म-ण्या" ‡। 'सा' वडवा वा दक्षिणेत्यर्थः। तस्या अपि नपुंसकत्व मुपपादयति— "वडवा रथं वहतीति। रथवहनात् स्त्रीत्वा-भावः, स्त्रीव्यञ्जनसद्भावात् पुंस्त्वाभावः ; सौत्रामण्यपि न इति. ३ ,

वतां' सोमदेवतायुतानां 'पितृणां' याज्यापुरोनुवाक्यारूपाः "उदीरतामवर उत्परासः"-इत्याद्यास्तिस्र ऋचः *, 'बर्हिषदा' बर्हिषि सीदताम् एतद्गुणकानां 'पितृणां' "बर्हिषदः पितर ऊत्यर्वाग्"-इत्याद्यास्तिस्र ऋचः †, 'अग्निष्वात्तानां पितृणां' "आयन्तु नः पितरः सोम्यासः"-इत्याद्यास्तिस्र ऋचः ‡ इति नवर्चः संहितायां क्रमेणाम्नाताः §; ताभिरुपस्थानं कर्त्तव्य मित्यर्थः ॥

पितृमन्त्रैरुपस्थानं प्रशंसति— "यत्र वै सोम इति। पूर्वमिन्द्रेण पीतः सोमः, अतिपूतः सन् पितृनेव प्राप्नोत्, अतस्तन्मन्त्रोपस्थानेनेन्द्र मेव सम्पूर्णं कृतवान् भवतीति ॥ २८ ॥

अथ पशुपुरोडाशार्थं सावित्रवारुणैन्द्राख्यं हविस्त्रयं विधत्ते —"अथैतानि हवींषीति ॥ २९ ॥

पुरोडाशदेवताः प्रशंसति— "अथ यत् सावित्र इति। कात्यायनः— "सोमातिपूतस्याप्येषा, अनुयाजान्ते पशुपुरोडाशार्थंधरत्याश्विनेन प्रागवदानेभ्य', हविर्भिर्वाश्विनाभावस्तु"-इति ‖। अथ मर्थः— यथा सौत्रामणी सोमातिपूतस्यापि मेवस्यार्थे कर्त्तव्येति राजसूयाद् बहिःप्रयोगः। तत्र पशुपुरोडाशार्थं विहितान्येतानि सावित्रादिहवींषि अनुयाजान्ते यष्टव्यानि, तदा छिद्रपिधानार्थं पशुवपाचरणानन्तर मवदानात् पुरा आश्विनेन पुरोडाशेन यागः कर्त्तव्य इत्येकः शाखान्तरीयः पक्षः। पशुवपाप्रचरणानन्तर मेवैतैः सावित्रादिभिर्हविर्भिः याग. कर-

---

*, †, ‡ वा० सं० १९ ४९—५१, ५५—५७, ५८—६०।

§ अमभाष्य मिदं सायणाचार्यस्य, आसु नवर्सु वाहितिक-प्रथम-द्वतीय-चतुर्थ्यां ऋचां दर्शनात्।

‖ का० श्रौ० सू० १५ १०. २१, २२, २३।

न पशुबन्ध इत्यभिप्रायः । "तस्मात् षष्ठा रथवाही दक्षिणेति, निगमनवाक्यम् ॥ २५ ॥ ६ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् . )

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्व्वपति । तद्यदेतया यजते व्वृत्रे ह वा ऽइद सर्व्वं मास यदृचो यद्यजूंषि यत् सामानि तस्मा ऽइन्द्रो व्वज्रं प्रजिहीर्षत् ॥ १ ॥

स ह व्विष्णुमुवाच । व्वृत्राय वै व्वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह व्विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्मा ऽइन्द्रो व्वज्र मुद्ययाम स उद्यताद् व्वज्राद् व्वृत्रो बिभयाञ्चकार ॥ २ ॥

---

न सुरा यत्र सौत्रामणी"—इति च तत्रैव १२. ८. ५. ४। "एतावद्वाव यज्ञस्य यद् देवैर्यज्ञाः कृतम्। तदेतत् सर्वं साप्नोति यजते सौत्रामण्या इष्टे"—इति सौत्रामणी प्रशंसा ॥ मा० सं० १९अ० ३१क० यतेति पाठः ।

स होवाच। अस्ति वा ऽअहं व्वीर्यं तन्नु ते प्रयच्छानि मा नु * मे प्रहार्षीरिति तस्मै यजूंषि प्रायच्छत्तस्मै द्वितीय मुदयाम ॥ ३ ॥

स होवाच। अस्ति वा ऽअहं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मा ऽऋचः प्रायच्छत्तस्मै तृतीय मुदयाम ॥ ४ ॥

स होवाच †। अस्ति वा ऽअहं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मै सामानि प्रायच्छत्तस्माद्‌प्येतर्ह्येव मेवैतैर्व्वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रे ऽथऽर्ग्भिरथ सामभिरेवम् ह्यस्मा ऽएतत् प्रायच्छत् ॥ ५ ॥

तस्य यो योनिराशय‡ आस। त मनुपरा मृश्य संलुप्याच्छिनत् § सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये विधातुरिवैषा व्विद्यायेत तस्मात् वैधातवी नाम ‖ ॥ ६ ॥

* 'मा नु'—इति ग, घ। मा नु'—इति च ढ्य ज्ञा० वैवरेय।

† नास्त्येतत्पदद्वय ग घ-पुस्तकयो।

‡ योनिराश्रय—इति च ढ्य ज्ञा०—वैवरेय।

§ मनुष्याच्छिनत—इति ज्ञा०—वैवर'।

‖ नाम—इति क नाम—इति ग।

अथ यदैन्द्रावैष्णवꣳ हविर्भवति। इन्द्रो हि व्विष्णुश्च सुदयच्छद्विष्णुरन्वतिष्ठत् ॥ ७ ॥

अथ यद् द्वादशकपालो भवति। द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्तस्माद् द्वादशकपालो भवति ॥ ८ ॥

स मुभयेषां व्रीहियवाणां गृह्णाति। व्रीहिमयमेवार्धे पिण्डस्याधिश्रयति तदग्नुपायꣳ रूपमथ यवमयं तद्वारुणꣳ रूपमथ व्रीहिमयं तत् सौम्याꣳ रूपं तदेतत् सर्व्वै व्विद्यायै रूपं क्रियते सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥ ९ ॥

सर्व्वान् वा ऽएष यज्ञक्रतूनवरुन्धे। सर्व्वा इष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सो ऽस्मात् पराङिव भवत्येतावान् वै सर्व्वो यज्ञो यावानेष त्रयो व्वेदस्तस्यै * तद्रूपं क्रियत ऽएष योनिराश्रयस्तदेतेन त्रयेण व्वेदेन पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथो ऽस्मान्न पराङ् भवति ॥ १० ॥

---

* "सृष्टे"—इति च इदं डा० वेबेरः।

सर्व्वान्वा ऽएष यज्ञक्रतूनवरुन्धे। सर्व्वा-
न्निष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते देव-
सृष्टो वा ऽएषेष्टिर्यत् त्रैधातव्यनया मे ऽपीष्ट सस-
दनयापि सूया* ऽइति तस्माद्वा ऽएषा राजसूय-
याजिन उदवसानीयेष्टिर्भवति † ॥ ११ ॥

अथो यः सहस्रं वा भूयो वा दद्यात् ‡।
तस्य ह्यप्युदवसानीया ऽऽदिरिचान इव वा ऽएष
भवति यः सहस्रं वा भूयो वा ददात्येतद्वै
सहस्रं वाचः प्रजातं यदेष त्रयो व्वेदस्तत् सह-
स्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्या-
प्युदवसानीया स्यात् ॥ १२ ॥

अथो ये दीर्घसत्त्रमासीरन्। संवत्सरं वा
भूयो वा तेषाए ह्यप्युदवसानीया स्यात् सर्व्वं
वै तेषा माप्तं भवति सर्व्वं जितं ये दीर्घसत्त्र
मासते संवत्सरं वा भूयो वा सर्व्वं मेषा तस्मादु
ह तेषा मप्युदवसानीया स्यात् ॥ १३ ॥

---

* 'सूया'—इति च इदं वा० वेबरेच।

† '-र्भवति'—इति क।　　‡ 'दद्यात' इति ग।

अथो हैनयाप्यभिचरेत् । एतया वै भद्रसेन
माजातशत्रवमारुणिरभिचचार क्षिप्रं किला-
स्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वा
ऽएनयेन्द्रो वृत्रस्यास्थानमच्छिनदपि ह वा ऽएनया-
स्थानं छिनत्ति य एनयाभिचरति तस्मादु हैन-
याप्यभिचरेत् ॥ १४ ॥

अथो हैनयापि भिषज्येत् । यं न्वेवैकयर्चा
भिषज्येदेतेन यजुषैतेन साम्ना तं न्वेवागदं
कुर्यात् किमु य सर्वेण वेदेन तस्मादु हैनयापि
भिषज्येत् ॥ १५ ॥

तस्यै त्रीणि शतमानानि हिरण्यानि दक्षि-
णा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति
न स्तुते न शंसत्यथ स यशो न वै हिरण्येन
किंचन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि
ब्रह्मणे ददाति ॥ १६ ॥

तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवो
भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥ १७ ॥

त्रीणि व्यासांस्यध्वर्यवे । तनुते वा ऽअध्वर्यु-

यँज्ञं तन्वते व्यासाꣳसि तथाखोपि व्यासाꣳस्यध्वर्य्यवे गा मन्नीपे ॥ १८ ॥

ता वा एताः ०। द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसम्मितैवेष्टिस्तस्माद् द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥ ७ ॥

॥ इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् [पू. ५.] ॥

राजसूयान्ते कर्तव्यायास्त्रैधातव्युदवसानीयायाः † देवतासम्बद्धं हविर्विधत्ते— "ऐन्द्रावैष्णव मिति ‡। द्वादशसु कपालेषु संस्कृत मिन्द्राविष्णुदेवताकं पुरोडाशं निर्वपेत् ॥ ॥

एतदिष्टिविधायकवाक्यानुवादपूर्वकं देवतासम्बन्धस्तावक

"स होवाचेति । 'स.' उपायवचनाद् भीतो सन्नोऽब्रवीत् । किं मित्यत आह— "अस्ति वा इति । 'इदं वीर्यम्' ऋगादिलक्षणम् 'अस्ति' खलु । वीरयति नानाप्रकारकार्यारम्भाय ईरयति सद् वीर्यम् ; विनियतेऽनेनेति वा वीर्यम् । 'तत् तु' तदेव वीर्यम् 'ते' इन्द्राय 'प्रयच्छानि' अत्र हतो ददानीत्यर्थः । तेन च 'मे' हनाय त्वं 'मा प्रहार्षी' प्रहारं मा कार्षीः 'इति' संवदन् वृत्र 'तस्मै' इन्द्राय 'यजूंषि' यजुर्वेदं प्रादात् ।

एत मेवेन वधोद्यमनेन यजुर्विद्या मादाय, अथाम-पिये अपि चाद्विमोरिन्द्रस्यापर दिवंवोद्यमन माह— "तस्मै द्वितीय मिति । त मेव वज्रं पुनरप्युद्यतवानित्यर्थः ॥ ३ ॥

"स होवाचेत्यादि, व्याख्यातचरम् । 'अत्र' सामवेद मित्यर्थः । "तस्मै तृतीय मित्यादि, स्पष्टम् ॥ ४ ॥

"स होवाचेति । एव वेदप्रदानानुसारेण यागविधान मिह मिति दर्शयति— "तस्मादिति । एवं वाच मित्यत आह— "यजुर्भिरेवाग्रे इति ॥ ५ ॥

दृष्टेनामनिर्वचन प्रतिपादयति— "तस्य य इति । तस्य यजुर्वेदादेर्वीर्यस्य 'य' 'योनि.' स्थानम्, 'आशय.' हृदय-प्रदेशरूपं बभूव । आशीतेऽस्मिन्निदिस्याशय' । 'तं' योनि माशयम् 'अनुपराम्रश्य' हृदयप्रदेशे किं धारक मत्र मिति विचार्य, 'सनुप्य' हस्तेनावेक्ष्य 'अभ्छिनत्' छिन्नवान् ; इन्द्र इति शेषः । 'सा एषा इष्टिः' त्रेधातवी जाता * । तस्माद्विभेकस्य भावस्य इद माधिपत्रिकं रूप प्रहस मित्यर्थं । "तस्यदेतस्त्रिविति ।

---

* "विधा इरिष्यत् भवति त्रैधातवी"—इति कर्क: ।

यस्मात् 'एतस्मिन्नात्मनि' हृदयप्रदेशे 'त्रिधातु' आवयवः 'इव' 'एषा' त्रयी विद्या 'आहित' अवस्थिता, 'तस्मात्' स आत्मा त्रिधातुः ; त्रिधातोरियमिति विद्यात्रयात्मिका इष्टिः 'त्रैधातवी नाम' * ॥ ६ ॥

"अथ यदिति। उभयोरिन्द्राविष्णोर्व्याप्तत्वात् उभयदेवत्या सा भवेदित्यभिप्रायः ॥ ७ ॥

"अथ यद् द्वादशकपाल इति। एषा त्रैधातवीष्टिः संवत्सरव्यापिनी ॥ ८ ॥

त्रयीविद्यारूपतां सम्पादयितुं हविषो व्रीहियवमयत्वं विधत्ते — "स उभयेषामिति। 'स' व्रीह्यादिपिष्टकम् 'उभयेषाम्' 'इति' सुगमम्। अन्यत्र विकल्पं दर्शयति — अत एव कात्यायन — "व्रीहीन् यवान् वा हविषाम्"—इति †। व्रीहिमय मिश्राये इति व्यवस्थापनात् यवप्रदेशात्रयीणां अवहननं पेषणञ्चेति द्रष्टव्यम्। अत एव सूत्रम्— "तृतीय यवाना मध्ये"—इति ‡। मध्ये तृतीयं भाग यवाना प्रक्षीयात्, भागद्वयं तु

---

* "यत् त्रिः प्रायच्छत्, त्रिः प्रत्यगृह्णात्, तत् त्रिधातोस्त्रिधातुत्वम्"—इति तै० ब्रा० २ ४ ११ १२।

† का० श्रौ० सू० १५ ७ १०। अस्यैव मुद्रितपुस्तकेऽपपाठः।

‡ 'अस्मिन् पुरोडाशे तृतीयं भागं यवानां मध्ये प्रक्षीयात। तत्रैव क्रमः,— प्रथमे सृष्टौ व्रीहय एव ग्राह्याः, द्वितीये सृष्टौ प्रथम एको भागो व्रीहीणाम् ततो भागद्वयं यवानाम्, एवं द्वितीयो सृष्टि, तृतीये सृष्टौ प्रथमं भागद्वयं यवानाम्, तत एको भागो व्रीहीणाम्, एव तृतीयो सृष्टिः, चतुर्थे व्रीहय एव —इति तद्वृत्तिः।

व्रीहीणा मेव । न केवलं यज्ञानां तृतीयभागस्य मध्ये प्रवर्ग्ये किन्तु पविध्ययण अपि तथैवेत्याह — "व्रीहिमय मेवास्य भवति * ॥

इत्थं त्रैधातव्यास्तृतीयत्वं प्रतिपाद्य राजसूययज्वनो विधेयता माह— "सैषा राजसूययाजिन इति । उत्तरेषु विनियोगेषु × राजसूयेनोदयनीयाया अप्रकृष्ण माध्यन्द राजसूयान्तर्भाव मापादयति पापयर्णादिवत् । अतश्च सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीत्येतावदेवात्र विधीयते— "उदवसानीयेति † । एतत्तु क्रमादेव प्राप्त मनूद्यते । उत्तमं कर्माविस्यति विसृजत्यनयेति 'उदवसानीया' यौगिकोऽयं शब्दः ॥ ८ ॥

यज्ञस्यायातयामत्वसम्पादनाय त्रैधातवीष्टिः कर्त्तव्येत्याह — "सर्वान् वा एतादिना । अग्निष्टोमादिसोमयागकलापात् राजसूयस्य तदनुष्ठानेन यज्ञक्रत्वादयः सर्वेऽनुष्ठिता भवन्तीति । 'तस्य' यजमानस्य अपेक्षितकर्मणः कृतत्वादवशिष्टः 'यज्ञो' 'यातयामा' गतसारः 'इव' 'भवति' । 'सः' 'यज्ञः' 'अस्माद्' यजमानात् कृतावशिष्टत्वेन 'पराङ्' पराचीनः 'इव' 'भवति' । यातयामत्वपरिहार मुपपादयति— "एतावानिति । 'एष वाव' साम्यजुष्छन्दोमात्मक-त्रयरूपो 'वेदः' अत्परिमाणः सर्वो यज्ञः एतत्परिमाण खलु । 'तस्य' त्रयरूपस्य वेदस्य 'एतत्' स्वरूपं 'क्रियते', 'य एष आमयो होमिः'; 'तत्' तेन 'एतेन' त्रयरूपेण 'वेदेन' 'पुनः' 'यज्ञम्' आरब्धवान् भवति, तदा यति 'अस्य' 'यज्ञः' अगतसारः स्यात्, यजमानाच्च न पराचीनः स्यात् ॥ १० ॥

---

* का० श्रौ० सू० १५ ७ १९ ।

† 'त्रैधातवुदवसानीया'—इति का० श्रौ० सू० १५. ७. २८ ।

"सर्वान् वा इत्यादि। व्याख्यातचरम्। त्रैधातवी 'इष्टि-रपि' देवस्वरूपत्वेन प्रशस्तत्वादवरोद्धव्या, अतः 'अनया' त्रैधातव्यापि मम 'इष्टं भवतु' यागः कृतो भवतु। 'अनयापि' इष्ट्या 'सर्वैः' अभिषिक्तो भूयासम् 'इति' अभिप्रायेण त्रैधातवी कार्येत्यर्थः। "तस्मादा एषेति, निगमनम् ॥ ११ ॥

एतस्या विनियोगान्तरमप्याह— "अथो ह इति। 'सहस्रं' बहुतरं 'वा' दक्षिणा 'दद्यात्'। तस्यापि तस्मिन्नपि कर्मणि एषाङ्गभूता भवेत्। सा च भवन्ती आगन्तुकत्वादन्ते एव भवतीत्युदवसानीयेति व्यपदिश्यते। 'रिरिचान इव' अतिरिक्तः। 'एतत्' खलु 'सहस्रं' बहु 'वाचः' वागायतनात् मुखादुत्पन्नं योऽयं त्रयीवेदः 'तत्' तेन ब्रीह्यादिपिण्डात्मकेनाधि-याज्ञिकेन त्रयेण वेदेन 'पुनराप्याययति' आपूरयति। "तस्मा-दिति, निगमनम् ॥ १२ ॥

"अथो ये दीर्घसत्रमित्यादि। प्रकटम्। "संवत्सरं वा भूयो वेति, दीर्घसत्रेण सम्बध्यते। "सर्वं मेवेति। वेदत्रयस्य पौरोडाशिकधातुत्रयीत्वेनेह कल्पनादित्यभिप्रायः ॥ १३ ॥

"अथो हैनयेति। अजातशत्रोरपत्यम् 'आजातशत्रवः' तम्, भद्रसेननामानं राजन्यम्, अरुणस्यापत्यम् 'आरुणिः' उद्दालकः 'अभिचचार' अभिचरितवान्। "क्षिप्रं किलेति। 'क्षिप्रं किल' शीघ्रं नैव 'अस्तृणुत' अभिचारेण तं हिंसितवानेवेत्यर्थः। एतस्मिन्नर्थे श्रुतिर्याज्ञवल्क्यं प्रमापयति— "इति ह स्माहेति। 'इन्द्रः अपि' 'एतया' इष्ट्या 'वृत्रस्य' स्थानं वयोविध्यायम् 'अच्छिनत्'। 'तस्मात्' परस्य स्थाननाशार्थम् 'एतया' अभिचारः कर्तव्य इत्यर्थः ॥ १४ ॥

"प्रयो हैनयापि मिषज्येदिति॥"। अनया इष्ट्या कथं परकृताभिचारपरिहारः इत्याशङ्का तं कैमुतिकन्यायेन समर्थयते — "एकयैवैकयेति। एकेनैव यदृशुणादिमन्त्रेण नाम अवश्य क्रियते, तेन परकृतबाधा परिह्रियते, 'किमु' किमुत वेदत्रय-रूपयानया चैधातव्या अभिचारपरिहारः इति †॥ १५॥

कात्यायनेन राजसूयान्तःपातिनी मिष्टिं प्रस्तुत्य यद् दक्षिणा दानं सूत्रम्— 'तिस्रधिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे गा समग्रीधे"-इति *। तदिद मिदानीं विभत्ते— "तस्ये त्रीणीति। शतमानलक्षणं सुत्रा पुरस्तात् ‡। "न वै ब्रह्मेति। अस्याय मर्थः — 'ब्रह्मा हि न प्रचरति' हवनादिकं मध्वर्युवर्गवत् न करोति, 'न स्तुते' उद्गाता इव न स्तोत्रं प्रयुङ्क्ते, 'न शंसति' होतृवच्छस्त्रं न पठति। अस्मात् 'स' ब्रह्मा वरीयान् । 'हिरण्येन' अपि 'किञ्चन' किञ्चित् 'न कुर्वन्ति', हिरण्यं साधनं कृत्वा यदनादिकं मुपभुञ्जते, न तु हिरण्य मेव भुञ्जन्ति। अतो

स्यापि यथोक्ता * चैत्रादिमासा † द्वादश, यदा मलिम्लुचो भवति तदा त्रयोदश। एतोऽस्य ऐन्द्राग्नद्वादशकपालसम्बन्धहविर्युक्तत्वात् संवत्सरसम्मितत्वम्, अत संवत्सररूपाया इष्टे द्वादश त्रयोदश वा दक्षिणा युक्ता इत्यर्थः ‡ ॥ १८ ॥ ७ [ ५ ५ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
कल्पाश्वान् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां हेमवाजिद्विपसहितरथौ कायधि सिद्धपार्यौ,
व्याघ्राघोरीविश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलं स्वर्णजं वर्णमुख्यं,
कार्पासीयं छायावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनघं शार्करं चारुतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा सायणाविङ्गणार्यः § ॥

---

* यथोक्त —इति च ।
† 'चैत्रादिमासा' —इति च क ।
‡ एष वैपरीत्य तै० ब्र० २ ४ ११—१४ अनुवाकेषु द्रष्टव्य ।
§ अयमर्थोऽपरो द्वितीयाध्यायान्ते (२५२ पृ०) द्रष्टव्यः ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्यायः समाप्तः ॥ ५ ॥

---

॥ इति पञ्चमकाण्डे चतुर्थः प्रपाठकश्च समाप्तः * ॥

॥ इति सवं नाम पञ्चमं काण्डं † समाप्तम् ॥



---

* एत उपरद लिङ्ग 'कण्डिका'—इत्येव च, 'कण्डिकासंख्या १११' —इति ख म घ । तत्र १ ब्रा० ११ क०, २ ब्रा० २१ क०, ३ ब्रा० १२ क० ४ ब्रा० १० क०, ५ ब्रा० ७ क०, ६ ब्रा० ११ क०, ७ ब्रा० १६ क० । तदत्रास्मिन् चतुर्थप्रपाठके १११ कण्डिकाः सम्पद्यन्ते ।

† अथ पञ्चमे काण्डे ब्राह्मणानां संख्या,— प्रथमे प्रपाठके ६, द्वितीये ७, तृतीये ५, चतुर्थे ७ ; सङ्कलनया २५ । तत्र कण्डिकाः ४३१ । प्रथमे प्रपाठके ११०, द्वितीये १०८, तृतीये ११८, चतुर्थे १११, तदेतत्सर्वेषां सङ्कलनया ४४७ कण्डिकाः भूता इति सिद्धम् ।

## ॥ अथ मूलशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | प्र॰ | अा॰ | क॰ | पृष्ठे |
|---|---|---|---|---|---|
| प्रसुच | प्रसुव | १. | १. | ४. | २ |
| सुरा | सुरापदं | १. | २. | १६. | १८ |
| प्रजा | प्रजापति | १. | ३. | ७. | ३१ |
| वे | वै | १. | ३. | ११. | ३४ |
| दधिक्राव्ण | दधिक्राव्णः | १. | ५. | २०. | ६६ |
| सुप | सूप | १. | ६. | १६. | ८१ |
| पुत्रा | पुत्रो | १. | ६. | १८. | ८२ |
| मर्त्ये | मर्त्ये | २. | २. | १. | १२१ |
| ०हर्ये० | ०हार्ये० | २. | २. | २. | १२२ |
| वेरियं | वेरियं | २. | २. | २. | १२२ |
| इतिमुच्यते | इतिमुच्यते | २. | २. | ५. | १२१ |
| साकमेधे | साकमेधे | २. | ३. | ६. | १३७ |
| नाहुरा | नाहुा | २. | ३. | १४. | १४० |
| तदवर्षं | तदर्षं | २. | ४. | १२. | १५५ |
| चयेपभो | [illegible] | २. | ४. | १७. | १५७ |
| यथामाया | युष्मामाया | २. | ७. | ४. | १८१ |
| सोम राजा | सोमराजा | २. | ७. | १२. | १८४ |
| दुत | दुत | ३. | ४. | १०. | २०४ |
| तत् | तद् | ४. | १. | १२. | ३०० |
| मुर्तन | मुर्त न | ४. | ७. | १६. | ३८४ |